# MAHAMAHOPADHYAYA PANDIT P.N. PATTABHIRAMA SASTRI

*R.C. Dwivedi*

Sastriji was born in Palasur village near Kanchipuram in 1908 and educated at Tirupati and Varanasi under M.M. Chinnaswami Sastri whose daughter he married later on.

Initially he served Banaras Hindu University and later on was appointed Principal of Maharaja Sanskrit College, Jaipur by Sir Mirza Ismail on the recommendation of Pandit Madan Mohan Malaviya. In 1952 Sastri Ji was invited by the University of Calcutta to grace the Chair of Mimamsa. He wished to spend last years of his career in Varanasi where he was appointed as Professor and Head, Department of Sahitya, Mimamsa and Tantra in 1975. He was honoured by the President of India in 1973, by Jagadguru Sri Sankaracharya of Kanchipuram, Kanchi and he received the award of *Padmabhushan* from the Government of India. U.P. Sanskrit Academy gave him *Vishva Bharati* award for international eminence which carried a cash prize of Rs. 1 lakh. Sampurnananda Sanskrit University and the University of Burdwan conferred upon him *Mahamahopadhyaya* and *D. Litt.* degrees (honoris causa) respectively. Various other academic bodies and organisations honoured him with titles.

Born, and initially educated in South India, he spent his life in East, West and North and thus represented a real unity and integrity of this country in his person and disposition. He has numerous sisyas in Jaipur, Calcutta and Varanasi and particularly in the centres of traditional learning pursuing various Sastras, more particularly *Mimamsa*. Sastri Ji's contribution to *Mimamsa* is unique in many respects. His writings (also editions of *Mimamsa* texts) which are nearly fifty in number and lectures, spread over half a century, demonstrate his absolute mastery of the sastric tradition of India, pre-eminence of *Mimamsa* therein and its contemporary relevance. This is fully borne out by his works, such as *Mimamsanyaya Manjari* and the exposition of the *Artha- samgraha*. His discovery of several texts of *Mimamsa* and their scholarly editions has enriched the extant literature. He has shown applicability of *Mimamsa* principles in other Sastras and shown their usefulness in present democratic and egalitarian structure of the country. This is a unique contribution.

Sastriji was a living symbol of the glorious tradition of a Pandit who could weave the past into the present fabric of thought and culture. Till his last day, there was not a single moment of his wakeful state when he was not either editing a text, correcting a proof, writing a paper or giving instructions to his very old and very young pupils in Varanasi where he was directing the acitivities of *Veda Mimamsa Anusandhana Kendra*.

He passed away on 1st September, 1992 at 11.15 p.m. in a private hospital in Delhi. At the time of his sad demise he was the Chancellor of the Rashtriya Sanskrit Vidyapeetha, Tirupati and National Professor of Veda appointed by the Rashtriya Veda Vidya Pratishthan.

India has lost a Pandit of unique achievements who had shown the path for India's unity and integrity through learning and culture on traditonal lines. In his death the country has lost a great Sanskrit scholar and champion of Indian heritage and culture. As an erudite scholar in Vedas, Vedangas, Upanisads and Darsanas, he has contributed substantially to the correct interpretation and appreciation of ancient knowledge inherited by us from our ancient seers and philosophers.

# स्मृतिपुष्पाणि

प्रो. बटुकनाथ शास्त्री

विद्वन्मण्डलमण्डनो निजयशोराशिप्रकशीकृता -
ऽशेषाशावलयो नयोन्नतगुणग्रामाभिरामाशयः ।
लीनः शाश्वतिके पदे बुधवरः पट्टाभिरामस्ततः
सन्तप्ता विधिना विडम्बितधियो दूयामहे साम्प्रतम् ॥

आबाल्यात्सुरभारतीपरिचयप्रागल्भ्यलब्धोदयो
नानाशास्त्रसरस्वतीसुरसरित्सम्भेदतीर्थोज्ज्वलः ।
लीनो ब्रह्मणि शाश्वतेऽपि सुकृती कीर्त्या चिरं देहवान्
सम्मान्यः सुधियां सभासु विजयी पट्टाभिरामाभिधः ॥

वेदानां परिरक्षणाय सततं बद्धश्रमः सादरं
मीमांसाद्यखिलागमार्थनिचयं ख्यातिं परां प्रापयन् ।
स्निह्यन् शिष्यगणे सुताधिकधिया साद्गुण्यपुण्योदयः
स्मर्तव्यो बुधशेखरो विजयते पट्टाभिरामः कृती ॥

तस्यासीमगुणालयस्य विदुषो विद्यातपःशेवधेः
श्रद्धाराधनसावधानमनसा सम्प्रत्यमी धीधनाः ।
स्वान्तोद्गारतरङ्गितैर्निजवचःपुष्पोच्चयैस्तन्वते
तत्पादाब्जयुगार्चनं बुधमणेर्भूयः स्मरन्तो गुणान् ॥

# श्रद्धाञ्जलिः

डा. विधातामिश्रः

महामहोपाधिविभूषितो यः
पट्टाभिरामःश्रुतशास्त्रिवर्यः ।
यो भारतीसंस्कृतिमूर्त्तिरूपः
कालो न तं हन्तुमलं कदापि ॥(१)

लोके सदा चर्चितकीर्त्तिकायो
यो वैदिकाचारविचारविज्ञः ।
मुक्तो मनस्वीव विमुक्तमोहः
साक्षादृषिर्वेदवपुर्हि नूनम् ॥(२)

मीमांसकेषु प्रथितो हि विद्वान्
वेदान्तनिष्णात इति प्रसिद्धः ।
न्याये च यस्य प्रतिपन्नमेधा
प्रबुद्धवर्गे खलु विस्मयार्हा ।।(३)

व्यक्तिस्तु नासौ स्वयमेव संस्था -
रूपेण चासीद् बहुशास्त्रविज्ञः ।
यो देववाण्याः सुविकासकार्ये
समर्पितो नित्यमभूद् यशस्वी ॥

पुण्याचारविचारसारवलितं यज्जीवनं पावनम्
नित्यं यत् समुपस्थितं जनकृते चादर्शमेवामलम् ।
ये केऽपीह तदीयपुण्यवचसां पीयूषमाचम्य वै
जीवन्त्यत्र समर्च्य चारुचरिताः सौभाग्यवन्तस्तु ते ॥

ब्रह्मध्यानपरायणः क्षणमपि व्यर्थं न यो नीतवान्
सन्ध्यावन्दनदेवपूजनविधौ श्रद्धासुनिष्ठः सदा ।
नूनं तद्वरजीवितं मुनिनिभं देवस्पृहावर्द्धनम्
संहर्त्तुं प्रभवेन्महाकलिमलं स्वीयप्रभावाद् द्रुतम् ॥

# स्वर्गीय पं. श्री पी.एन. पट्टाभिरामशास्त्रिणां पुण्यस्मृतौ हृद्यपद्यनिबद्धश्रद्धाञ्जलिः

प. शिवजी उपाध्यायः

काशी काशितशेमुषीपरिलसत्सद्वैदुषीभूषणै -
र्विष्वग्विश्वविकस्वरैः सुरगिरो विद्वद्वरैर्विश्रुता।
एतेष्वन्यतमो स धन्यजनुषा लोकोत्तरश्रीयशः -
श्रुत्याकारधृतावतारविबुधः पट्टाभिरामो बभौ ॥ १ ॥

तेनानेन मनीषिणा विरहिता काशीयमाकाशव -
च्छून्याच्छन्नतमोदिशा यमनिशासंकाशमाभासते।
तत्सम्भावितशम्भुभावितसुरस्रोतस्विनीपावित -
प्रान्तो, हन्त! नितान्तशोकमलिनस्वान्तो गते शास्त्रिणि ॥२॥

यस्योल्लास्यसहास्यभास्यमसकृद्वाग्देवतासङ्गिनी,
श्रौतीं दार्शनिकीं प्रभामतितरामाशान्तमातन्वती।
यस्य प्रोद्यदुदारदर्शितदये शश्वत्प्रशस्योदये
साहित्यप्रणयाभिरामहृदये रामेव रेमे सदा ॥३॥

विद्यासागरपद्मभूषणमहोपाध्यायरत्नाकरा -
द्याख्यानैरपि तस्य वश्यविदुषो न ख्यातिरुज्जृम्भते।
याथार्थ्येन यथात्मनाममहितश्रीरामकीर्तिस्तथा -
श्रीशास्त्रिप्रवरोऽभिरामवपुषा नाम्नैव संकीर्त्यते ॥४॥

मीमांसोन्नयने नयप्रणयने श्रीजैमिनेर्वंशजो -
त्तंसाशंसितभास्वरस्वरभर श्रौतांशधर्माध्वरः।
योऽभूदद्भुतभूतिभूषितसितस्वच्छान्तरस्तं पर -
प्रज्ञाभासुरभूसुरोत्तमबुधं ब्रह्मर्षिकल्पं नुमः ॥५॥

प्राशस्त्यं किल दाक्षिणात्यविदुषां सोऽयं सुधीः संवहन्
औदीच्यप्रमुखीभवन् मतिमतां सम्मानमासादयन्।
प्राक्पाश्चात्यसमन्वयोन्नतचिरश्रौताध्वशीर्षध्वजो -
त्थानस्तम्भ इवात्र शम्भुनगरे भेजे विभां शाम्भवीम् ॥६॥

शिष्येष्वस्य विशिष्यवत्सलतया पुष्यत्प्रमोदोल्लस -
त्स्निग्धस्वान्तमभूत्प्रभूतसुखदं तीर्थोपमप्राञ्जलम्।

तादृक्शास्त्रिगुरोर्गुरुत्वगरिमोद्यन्मण्डनो मण्डनो
विख्यातः सुतनिर्विशेषपदवीमासाद्य विद्योतते ॥७॥

काञ्चीपीठमधिष्ठिते यतिवरे श्रीशङ्करे सद्गुरौ,
श्रद्धावाप्तविवर्धितात्मपरमप्रीतिं दधानः सुधीः ।
काञ्चित्तस्य कृपामवाप्य विपुलां काशिप्रकाशीभवद् -
वेदज्ञानसमुन्नयार्थविकसत्केन्द्रं समास्थापयत् ॥८॥

आद्याराधितशारदेव मुदिता सा 'शारदाम्बा' प्रिया,
प्रीत्या पर्यचरद् बुधं विधिमिव श्रीशास्त्रिणं सर्वदा ।
दाम्पत्यं रुचिरं निभाल्य सुचिरं पातिव्रताचारतः
सन्तोष्य स्वपतिं चकास्ति च यशोमूर्तिःश्रुतिश्रीरिव ॥९॥

नूनं राष्ट्रियपूर्णरूपमुदितं यद्राजधान्यामसौ
सङ्गत्य स्ववपुर्विहाय सुमतिः स्वर्गेऽद्य मुक्तिं गतः ।
काश्यां या मरणादुदेति नियता साधारणानां कृते,
काशीभूय विकासिनां तु सुलभा सर्वत्र सा तादृशाम् ॥१०॥

भस्मोद्भासितभव्यभालविलसद्गौरच्छविस्वच्छभा -
भास्वद्रम्यकलेवरस्मितसितान्तर्दन्तकान्तच्छटाः ।
कम्रानम्रमुखाकृतिप्रमुदितक्षौमाङ्गवस्त्रोच्छल -
च्छीतांशुद्युतयः सुमूर्तयतयः श्रीशास्त्रिणो रेजिरे ॥११॥

पट्टाभिषिक्त इव पण्डितमण्डलेऽस्मि -
न्नाखण्डलोऽजनि महीसुरराजिराजः ।
पट्टाभिरामगुरुनामसरामधाम -
भ्राजिष्णुविष्णुरिव साञ्जलि स प्रणम्यः ॥१२॥

स्वर्गापवर्गसुखमत्र परत्र कामं,
भुञ्जान एष जनमानसरञ्जनश्च ।
युञ्जानयुक्तचिरमुक्तमहात्मभासा
योगीव कोऽपि शुशुभे भुवि शास्त्रिवर्यः ॥१३॥

ब्रह्मीकृतात्मवपुषे चिदमन्दसंविद् -
देदीप्यमानमहसे दिवि दिव्यभासे ।
श्रीशास्त्रिणे प्रवयसे श्रुतिधर्मकर्मा -
पूर्वोन्मिषत्फलजुषे विदुषे नमोऽस्तु ॥१४॥

अभिरामहृदारामं मुदा रामपदानुगम् ।
चिदाराममयं पट्टाभिरामं गुरुमाश्रये ॥२५॥

# श्री पट्टाभिराम शास्त्री अभिनन्दन समारोह

## अभिनन्दन ग्रन्थ का समर्पण

मुख्य अतिथि

**माननीया श्रीमती इन्दिरा गांधी**

अध्यक्ष

**पं० कमलापति त्रिपाठी**

स्थान

**प्रधानमंत्री निवास, नई दिल्ली**

**२४ दिसम्बर, १९८१ ई०, प्रातः ८-३० बजे**

संयोजक

**डा० मण्डन मिश्र ( प्रधान सम्पादक )**

## समर्पण समारोह की कार्यवाही

### समर्पण

अभिनन्दन ग्रन्थ समारोह का कार्यक्रम दिनांक २४ दिसम्बर, १९८१ ई० को ठीक ८-३० बजे प्रधानमंत्री निवास में प्रारम्भ हुआ। समारोह का स्थल बहुत ही सुरुचिपूर्ण था और प्रधानमंत्री सचिवालय के प्रबन्ध से एक बहुत ही सुसज्जित कक्ष में यह आयोजन किया गया था। माननीया प्रधानमंत्री जी के पदार्पण पर अभिनन्दन समिति के अध्यक्ष पं० कमलापति जी त्रिपाठी सचिव एवं प्रधानसम्पादक डा० मण्डन मिश्र ने द्वार पर माननीया प्रधानमंत्री जी का स्वागत किया।

समारोह के प्रारम्भ में केन्द्रीय सरकार के संस्कृत के सहायक शिक्षा सलाहकार डा० सी० आर० स्वामिनाथन् ने वैदिक मंगलाचरण किया और कांची मठ की ओर से जिसके कि आचार्य श्री शास्त्री जी परम्परागत शिष्य हैं, शास्त्री जी को प्रसाद और आशीर्वाद समर्पित किया।

अपने स्वागत-भाषण में डा० मण्डन मिश्र ने कहा कि यह भारतीय विद्या और भारतीय संस्कृति का सम्मान है। ग्रन्थ के सम्पादक मण्डल में सारे देश के प्रतिष्ठित विद्वान् शामिल हैं और इसमें संसार के विख्यात विद्वानों के लेख प्रकाशित हैं। इससे ग्रन्थ की गरिमा का परिचय मिल जाता है। श्रद्धेय पं० कमलापति जी त्रिपाठी जैसे महान् मनीषी अभिनन्दन समिति के अध्यक्ष हैं। इसके अतिरिक्त इस सारे प्रसंग की महिमा के बारे में अधिक क्या कहूँ ? माननीया प्रधानमंत्री जी की उपस्थिति ने वह सब कह दिया है जो कोई भी भाषा या कविता नहीं कह सकती।

इन्हीं शब्दों के साथ मैं माननीया प्रधानमंत्री जी, पूज्य पण्डित जी आचार्य श्री पट्टाभिराम शास्त्री जी, माता जी और आप सबका स्वागत करता हूँ।

इसके अनन्तर अभिनन्दन समिति के अध्यक्ष के रूप में पं० श्री कमलापति जी त्रिपाठी और मुख्य अतिथि के रूप में माननीया प्रधानमंत्री जी एवं आचार्य श्री पट्टाभिराम शास्त्री जी ने संक्षिप्त किन्तु सारगर्भित भाषण दिया जो अविकल यहां उद्धृत किया जा रहा है।



अभिनन्दन-समिति के अध्यक्ष पं० कमलापति जी त्रिपाठी अभिभाषण करते हुए



समारोह में उपस्थित विद्वत्मण्डली मुख्यतया डा० ( श्रीमती ) कपिला वात्स्यायन, ( केन्द्रीय संयुक्त शिक्षा सलाहकार ) आचार्य श्री बदरीनाथ शुक्ल ( भू० पू० कुलपति, सम्पूर्णानन्द संस्कृत विश्वविद्यालय ) श्रीमती कुमुद जोशी ( केन्द्रीय उप-सूचना मंत्री ) डा० सत्यव्रत शास्त्री एवं डा० गजानन शास्त्री मुसलगाँवकर।

## पण्डित कमलापति जी त्रिपाठी का अभिभाषण

प्रधानमंत्री जी, पण्डित श्री पट्टाभिराम शास्त्री जी और बन्धुओं !

आज हम एक बहुत बड़े मूर्धन्य विद्वान् की अर्चना करने और उन्हें अभिनन्दन ग्रंथ भेंट करने के लिये यहाँ आयोजन कर रहे हैं। इन्दिराजी ने कृपा की है कि इतना व्यस्त होने पर भी उन्होंने मेरी प्रार्थना स्वीकार की और यहाँ उपस्थित हैं। पण्डित पट्टाभिराम शास्त्री का तमिलनाडु के एक गाँव में जन्म हुआ। तिरुपति में शिक्षा ग्रहण की इसके बाद उच्च शिक्षा के लिये काशी गये जो संस्कृत की शिक्षा दीक्षा के लिये स्वयं प्रसिद्ध है। पण्डित जी राष्ट्रीय विचार के प्रगतिशील व्यक्ति और मूर्धन्य विद्वान् हैं। मीमांसा, योग, न्याय और दर्शन जैसे गम्भीर विषयों के अतिरिक्त रसपूर्ण साहित्य के ये प्रकाण्ड पण्डित हैं। सारा जीवन इन्होंने पठन-पाठन मे लगा दिया। दक्षिण से शिक्षा ग्रहण कर काशी आये और फिर उत्तर भारत और समस्त देश को अपनी सेवायें अर्पित कर दी। उनके हजारों शिष्य हैं, जो ऊँचे-ऊँचे स्थानों पर बैठे हुए हैं। हिन्दू विश्वविद्यालय में मालवीय जी महाराज इन्हें पकड़ कर ले गये। मालवीय जी महाराज के कहने पर ही ये महाराजा संस्कृत कालेज जयपुर में प्राचार्य होकर गये। कलकत्ता और संस्कृत विश्वविद्यालय, वाराणसी में रहे। ये विद्वान् तो हैं ही, लेखक भी हैं। पचासों लेख लिखे हैं और सम्मानित हुए हैं। अखिल भारतीय संस्कृत साहित्य सम्मेलन में राष्ट्रपति राजेन्द्र बाबू ने उन्हें विद्यावाचस्पति उपाधि से विभूषित किया। आज उनका अभिनन्दन करने के लिये हम उपस्थित हुए हैं। हमारे देश में जितने प्रयोग हुए हैं और अनुभूतियां हैं वे संस्कृत में सुरक्षित हैं। चाहे धर्मशास्त्र हों, चाहे राजनीति हो, चाहे साहित्य हो, काम शास्त्र हो या अन्य कोई विषय हो, सभी प्रकार की धरोहर संस्कृत में है। इन पण्डितों से हमारा देश उऋण नहीं होगा, जिन्होंने कठिन तपस्या करते हुए, समाज से उपेक्षित होते हुए भी कठिनाई से जीवन बिताते हुए भी संस्कृत की रक्षा की, उसको जीवित रक्खा, वह आज भी हमारे उत्तराधिकार में चला आ रहा है। अपनी संस्कृति, संस्कृत और सभ्यता के नाम पर मस्तक ऊँचा कर भारतवासी आज भी उन्हीं के कारण चल पाते हैं। हमारे देश में ही नहीं, आज विदेशों में भी संस्कृत पर काम हो रहा है। यहाँ तक कि विज्ञान के क्षेत्र में, ज्योतिष के क्षेत्र में, दर्शन के क्षेत्र में और हर क्षेत्र में हमने प्रयोग किये हैं, चिन्तन करते रहे हैं और उन सबकी अनुभूतियाँ आने वाली नस्लों के लिये छोड़ गये हैं। मुझे प्रसन्नता है कि इन्दिराजी के नेतृत्व में भारत सरकार ने संस्कृत के विकास के लिये बहुत काम किया है। अभी काशी में संस्कृत का सम्मेलन हुआ—उसमें सारी दुनियां के विद्वान् इकट्ठे हुए। संस्कृत का डाइरेक्टरेट है। प्रकाशन भी किये जाते हैं। दिल्ली में संस्कृत विद्यापीठ की स्थापना हुई और भी ५ विद्यापीठ बने। दिल्ली में लालबहादुर शास्त्री विद्यापीठ प्रसिद्ध संस्था है। मण्डन जी उसके यहाँ बैठे हुए हैं। इन संस्थाओं को बढ़ाने की कोशिश की जा रही है, करोड़ों रूपया खर्च किया जा रहा है। इन्दिराजी के नेतृत्व में उनको और बढ़ाने और विकास करने की दिशा में कार्य चल रहा है। दो तीन संस्कृत के विश्वविद्यालय भी हो गये हैं। एक बनारस में है, एक दरभंगा में है। संस्कृत के विकास की बड़ी चेष्टा भारत सरकार की ओर से हो रही है। पर संस्कृत के पण्डितों की बड़ी दुर्दशा आज भी है। हजारों संस्कृत पाठशालाएँ हैं, जिनमें सैकड़ों पण्डित हैं। प्रातः से सायंकाल तक पण्डित लोग पढ़ाते रहते हैं। बिना

भूख, प्यास की और अन्य बातों की चिन्ता किये बिना। उनमें लगन है, त्याग भावना है। उन में उच्च कोटि के सैकड़ों विद्वान् हैं। उन्हें वेतन प्राथमिक विद्यालयों के अध्यापकों से भी कम मिलता है।

संस्कृत हमारी धरोहर है। आज भी हम उपनिषदों के नाम पर गर्व से मस्तक ऊँचा करते हैं। उपनिषदों में गहन चिंतन धारा भरी पड़ी है। उनके लिखने वाले कौन हैं—इसका किसी को पता नहीं। किसी ने अपने विज्ञापन कराने की कोशिश भी नहीं की। संस्कृत का विकास हो, यह हम चाहते हैं। मैं तो यह मानता हूँ कि जब तक संस्कृत न जानिये, आप भारत को नहीं समझ सकते। भारत को समझने के लिये संस्कृत को समझना चाहिये। मैं संस्कृत का विद्वान् तो नहीं, पर मेरी परम्परा संस्कृत की है और मेरी संस्कृत के प्रति बड़ी श्रद्धा है। आज इन्दिराजी को मैंने कष्ट दिया, इसलिये कि पण्डित जी को अभिनन्दन ग्रंथ उन्हीं के हाथ से समर्पित किया जाये, तो देश के एक मूर्धन्य विद्वान् का एक प्रकार से आदर तो होगा ही, साथ-साथ संस्कृत को भी बल मिलेगा। मैं उन से प्रार्थना करता हूँ कि अभिनन्दन ग्रंथ पण्डित जी को समर्पित करें।

●



अभिनन्दन ग्रन्थ पर हस्ताक्षर करते हुए माननीया प्रधान मंत्री श्रीमती इन्दिरा गान्धी जी सामने डा० मण्डन मिश्र ( प्रधान सम्पादक ) खड़े हैं।

## प्रधानमंत्री माननीय श्रीमती इन्दिरा गांधी जी का भाषण

पंडित कमलापति जी, पण्डित जी, उपस्थित सज्जनों, बहनों !

मेरे लिए तो यह बहुत सौभाग्य का और खुशी का अवसर है कि भारत के परम्परा के एक महान् विद्वान् आचार्य श्री पट्टाभिराम शास्त्री को यह अभिनन्दन ग्रन्थ भेंट करने का अवसर मिला है। शास्त्री जी का जन्म जैसे पंडित जी ने आपको अभी बतलाया दक्षिण में हुआ। एक प्रसिद्ध विद्या केन्द्र में कांची मंडल में और वहां से वह एक उत्तर भारत का प्रसिद्ध नगरी वाराणसी में आए जो विद्वानों के लिए एक आकर्षण केन्द्र सदियों से रहा है। वहां पूज्य पण्डित मालवीय जी से उनका सम्पर्क हुआ और मालवीय जी ने जैसा आपको बताया गया है, उनकी प्रतिभा से प्रभावित होके उन्हें जयपुर के महाराजा संस्कृत कालेज के प्राचार्य पद पर भेज दिया। शास्त्री जी ने सैंकड़ों विद्वानों को मार्गदर्शन और प्रेरणा दी है। वे भारतीय दर्शन के विशेषज्ञ माने जाते हैं। वाणी और शब्दों पर उनका सुन्दर काबू है।

आचार्य जी संस्कृत के एक प्रखर विद्वान् हैं। संस्कृत और भारत के प्राचीन गौरव का अटूट सम्बन्ध है। इसके विषय में पंडित जी ने आपको काफी कुछ कहा ही। हमारा कोशिश तो है कि जहां तक बने, संस्कृत को प्रोत्साहन दें। आजकल की दुनिया में इतना ज्यादा सीखने को लोगों के एक भण्डार सा है कि उसमें चुनने में कुछ चीजें कभी पीछे हो जाती हैं, कुछ चीजें आगे हो जाती है लेकिन संस्कृत हमारी सभी मातृभाषाओं में थोड़ा या ज्यादा निवास करती हैं और मातृभाषा अच्छी तरह से जानने के लिए उसकी यह जड़ को अगर पहचानें तो यह स्वाभाविक है कि ज्यादा अच्छी मातृभाषा भी जानेंगे। पहले संस्कृत या दूसरे ऐसे भाषायें कहलाती हैं ग्रीक हैं उनका पढ़ना आवश्यक माना जाता था केवल भाषा की जड़ समझने बूझने के लिए नहीं। लेकिन एक मन की एक डिस्पिलिन होती थी जिससे समझा जाता था कि कोई भी दूसरा विषय सीखें तो उसमें वह तेजी एक गहराई आयेगी जो बिना इसके न हो सके लेकिन आहिस्ता आहिस्ता बाहर के जो बड़े विश्वविद्यालय है, उन्होंने भी लैटिन ग्रीक इत्यादि छोड़ दिया है। यहां संस्कृत के पैर अभी भी जमे हैं और हमारी तो पूरी आशा है कि जमे रहेंगे और आप सब विद्वान् गण पंडित जी दोनों पण्डित जी-जो यहां बैठे हैं, इनका इसमें मार्ग-दर्शन मिलता रहेगा।

आज संस्कृत को गुरू शिष्य परम्परा में पढ़ने की आवश्यकता है। यह हमारी अखण्ड परम्परा का एक स्रोत हैं। शास्त्री जी के जीवन का आदर्श है सादगी और उच्च विचार। उन्होंने अपनी विनम्रता से कई लोगों को प्रभावित किया। ऐसे गुरू को यह अभिनन्दन-ग्रन्थ देते हुए मुझे खुशी है। मैं उनके दीर्घ जीवन की कामना करती हूँ।

●



माननीया प्रधान मंत्री श्रीमती इन्दिरा गान्धी जी अभिभाषण करते हुए—पीछे दायें से—पं० कमलापति जी त्रिपाठी, आचार्य श्री पट्टाभिराम शास्त्री, श्रीमती शारदाम्बाजी, श्री भास्कर मिश्र एवं डा० मण्डन मिश्र ।



आचार्य श्री पट्टाभिराम शास्त्री जी को अभिनन्दन ग्रन्थ को समर्पण करती हुई माननीया प्रधान मंत्री श्रीमती इन्दिरा गान्धी जी पास में—पं० कमलापति त्रिपाठी एवं डा० मण्डन मिश्र ।

## आचार्य श्री पट्टाभिराम शास्त्री द्वारा आभार प्रदर्शन

माननीया प्रधानमंत्री जी, पूजनीय पंडित जी तथा मेरे हितैषी बन्धुओं !

परमेश्वर की असीम कृपा एवं गुरजनों के अमोघ अनुग्रह से आज तक मेरा जीवन संस्कृत के अध्ययन अध्यापन में व्यतीत हुआ। इसी के फलस्वरूप माननीया इन्दिराजी के द्वारा यह बड़ा सम्मान मुझे प्राप्त हुआ। आज मैं उन गुरूजनों का स्मरण करता हूँ जिन्होंने अपने आत्मजों से भी अधिक वात्सल्य से पालन-पोषण के द्वारा विद्यादान से मुझे अनुगृहीत किया। मैं मानता हूँ कि आज का यह सम्मान मेरे गुरूजनों का ही है। पूज्यपाद म० म० पं० चिन्नस्वामी शास्त्री जी तथा पण्डितवर श्री महादेव शास्त्री जी तथा अन्य गुरूजनों का मैं सर्वथा अधमर्ण हूँ।

संस्कृत वाणी भारतवर्ष की ही नहीं, अपितु सारे विश्व की भाषाओं की जननी हैं और सभी संस्कृतियों का स्रोत है। मेरा पूर्ण विश्वास है कि माननीया इन्दिरा जी के नेतृत्व में संस्कृत के छात्र एवं अध्यापक अपने अध्ययन अध्यापन में लगकर परंपरागत शास्त्रों का रक्षण करते हुए उत्तरोत्तर प्रगतिशील बनेंगे। आज सरकार के द्वारा संस्कृत के लिए समुचित पोषण मिल रहा है, माननीया इन्दिरा जी के नेतृत्व में और पर्याप्त पोषण मिलता रहेगा। किन्तु हम बुद्धिजीवियों का भी नितान्त कर्तव्य है कि राष्ट्रहित के निमित्त सुनियोजित जिस बीस सूत्री पद्धति को प्रधान मंत्री जी ने अपनाया है उसमें हमें सम्मिलित होना है। इस संदर्भ में मेरे हितैषियों डा० मण्डन मिश्र, डा० रामनारायण चतुर्वेदी, पं० भगवानदत्त शास्त्री राकेश, डा० गजानन शास्त्री आदियों का इस मंत्र के अर्थ की ओर ध्यान आकृष्ट करना चाहता हूँ।

'मैं इस राष्ट्र में पैदा हुआ हूँ, कीर्ति और समृद्धि मुझे प्राप्त हो, क्षुत्-भुखमरी पिपासा-प्यास रूपी मल से दूषित ज्येष्ठा अलक्ष्मी-दारिद्रय का राष्ट्र में नाश करता हूँ।'

'प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्' ॥

प्रधानमंत्री जी इस ऋचा के अर्थ को यथार्थ करने का संकल्प कर तदनुसार कार्य कर रही हैं। इस पवित्र कार्य में हम लोग भी जुट जांय। मैं अपनी आराध्य देवता से प्रार्थना करता हूँ कि प्रधानमंत्री जी का यह संकल्प सफल हो और हमारा राष्ट्र विकसित होकर फूलता फलता रहे।

समारोह के अन्त में अन्ताराष्ट्रीय ख्याति के विद्वान् एवं राष्ट्रिय संग्रहालय के भूतपूर्व महानिदेशक डा० शिवराम मूर्ति ने अपने धन्यवाद भाषण में भारतीय गुरू परम्परा का शास्त्रीय विश्लेषण किया और उस परम्परा में आचार्य श्री पट्टाभिराम शास्त्री जी के महत्वपूर्ण स्थान का विश्लेषण किया।

समारोह राजधानी के इतिहास में अपने आप में एक महत्वपूर्ण कार्यक्रम था जिसमें केन्द्रीय मंत्री श्री भगवत झा आज़ाद, उपसूचना मंत्री श्रीमती कुमुद बेन जोशी, अखिल भारतीय कांग्रेस कमेटी (आइ) की महासचिव श्रीमती राजेन्द्र कुमारी वाजपेयी, शिक्षा-मंत्रालय की संयुक्त सलाहकार डा० श्रीमती कपिला वात्स्यायन, सम्पूर्णानन्द संस्कृत विश्वविद्यालय के भूतपूर्व कुलपति आचार्य श्री बदरीनाथ शुक्ल, राष्ट्रिय संस्कृत संस्थान के निदेशक डा० रामकरण शर्मा, डा० सत्यव्रत शास्त्री "नवभारत टाइम्स" और "आज" के भू० पू० प्रधान सम्पादक श्री अजितकुमार जैन एवं श्री विद्याभास्कर (गोस्वामी) गिरिधारी लाल शास्त्री राजस्थान सरकार के उपशिक्षा सचिव श्री सिन्हा आदि विशिष्ट विद्वान् उपस्थित थे।

समारोह राजधानी का एक अभूतपूर्व आयोजन था—जिसको आकाशवाणी, दूरदर्शन, समाचार-पत्रों के प्रतिनिधियों ने विशेष रूप से महत्वपूर्ण स्थान देकर संमानित किया।



अन्तर्राष्ट्रीय ख्याति प्राप्त विद्वान् डा० शिवराम मूर्ति जी धन्यवाद भाषण करते हुए

# स्पृहेरीप्सितः (पा. १-४-३६) इति सूत्रार्थविचारः

महामहोपाध्याय ब्रह्मश्री पेरि सूर्यनारायणशास्त्रिणः

स्पृहयतेः प्रयोगे ईप्सितोऽर्थः संप्रदानसंज्ञः स्यादिति सूत्रार्थः। ''पुष्पेभ्यः स्पृहयति चैत्र'' इत्युदाहरणम्।

1) अत्र भर्तृहरिः :-

एतत्सूत्रविहिता संप्रदानसंज्ञा कर्मत्वशेषत्वयोरपवादः। तेन स्पृहयतियोगे चतुर्थ्येव साधु, न द्वितीया न षष्ठीति।

2) हरदत्तदीक्षितखण्डदेवनागेशास्त्वेवमाशेरते- ''एतत्संज्ञाकर्मत्वशेषत्वानां बाध्यबाधकभावो नास्ति। अतः स्पृहयतियोगे विवक्षावशेन द्वितीया चतुर्थी षष्ठी चेति विभक्तित्रयमपि साधु'' इति।

कर्मसंज्ञासूत्रे तमपः परित्यागो भर्तृहरिमतस्य बीजम्, तदपरित्यागोऽन्येषां मतस्य बीजम्। तत्र हर्युक्तिः प्रौढ्या।

प्रथमतो भर्तृहरेर्मतमुपपाद्यते। -

''कर्तुरीप्सिततमं कर्मे'' ति (पा 1.4.41) सूत्रे तमपो ग्रहणस्य प्रयोजनं नास्ति। अतस्तत्प्रत्याख्येयमेव। एवं हि सति, ''कर्तुरीप्सित'' मिति प्रथमसूत्रेणैव सर्वत्र कर्मत्वस्य सिद्धत्वात् तथायुक्तमित्यादीनि सूत्राणि स्पष्टप्रतिपत्त्यर्थान्येव। सर्वमपि कर्म ईप्सितमेकमेव, कर्तुः क्रिययाप्यमानत्वस्य सर्वत्र सत्त्वात्। यद्यपि ''गां दोग्धि पय'' इत्यादौ यथा प्रकृत्यर्थगवादिरपादानं, तथाप्यस्त्येव धात्वर्थेन तस्याप्यमानत्वम्। ''गौः पयः त्यजति'', ''गवा पयस्त्याजयती'' त्यर्थप्रतीत्या तद्बलात् दुह्यादेरन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारार्थकताया आवश्यकतया गुणप्रधानभावापन्नव्यापारद्वयभेदेन गोपयसोरुभयोरपि स्वयमेव कर्मत्वम्, यथा ''तण्डुलानोदनं पचती''त्यत्र तण्डुलौदनयोः, तमपः प्रत्याख्यानादीप्साप्रकर्षो नाश्रीयते। एवं च अकथितसूत्रं स्पष्टार्थमेव भविष्यति, नापूर्वकर्मविधायकम्, 'दध्ना जुहोती' त्यत्र समकक्षतया दध्योदनयोः ईप्सितत्वे तमपो ग्रहणमकिंचित्करम्, संस्कारकत्वे हि दध्नः तत्संस्कृतस्यैवोदनस्येप्सिततमत्वम्। न च '' यवेभ्यो गां वारयती-'' त्यादौ यवादीनामपादानत्वं गवादीनां कर्मत्वमित्यपादानकर्मत्वयोर्विषयविभागसिद्ध्यर्थं तमपो ग्रहणम्। अत्र तमपो ग्रहणेन प्रधानव्यापारजन्यफलाश्रयतया गोः कर्मत्वम्, ''वारणार्थाना'' मित्यत्र तमपोऽभावेनाप्रधानव्यापारजन्यफलाश्रयतया यवादीनामपादानत्वमिति व्यवस्था सिध्यति, तमपोऽभावे निरुक्तव्यवस्था न सिद्ध्यतीति वाच्यम्, तमपोऽभावेऽपि तत्सिद्धेः। वारणार्थानामित्यस्य वारणार्थानां धातूनामिति नार्थः, किं तु वारणं निवारणमर्थयन्त इति वारणार्थाः वार्यमाणाः, ते च गवादयः तेषामीप्सितस्य, यवादेरपादानत्वमित्यर्थः सूत्रस्य। गवादीनां तु कर्मत्वं प्रथमसूत्रेणैव सेत्स्यति। अत एतदर्थं न तमपो ग्रहणं कर्तव्यम्।

न च अकथितसूत्रभाष्ये दुह्यादिपरिगणनस्याप्यभावान्नटस्य शृणोतीत्यादौ नटादेः कर्मत्वापत्तिरिति वाच्यम्। नटादेः शृणोतिक्रियाया निमित्तमात्रत्वेनेप्सितत्वाविवक्षणेनादोषात्। नटस्यापादानत्वमपि न प्रसक्तम्। संज्ञान्तरमपि नास्तीति शेषोऽयं षष्ठीविषयः, ''आख्यातोपयोगे'' (पा .1.4.29) इति सूत्रे उपयोगग्रहणात्।

''विषं भक्षयती'' त्यत्रापि स्वाम्यादिभयपीडितस्य क्षेत्रियरोगदुःखार्तस्य वा वरं '' विषभक्षणमेव ज्याय'' इति मन्यमानस्य विषं भक्षणेनेप्सितं भवति ''कर्तुरीप्सिततम''मिति सूत्रेणैव तत्रापि कर्मत्वम्। तथा च भाष्यम् - ''य एष मनुष्यो दुःखार्तो भवति, सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव न्याय्यो मन्यते'' इति।

ईप्सा च न प्रेक्षापूर्वकारिताघटिता, किंतु प्रकारान्तरेणापि संभवति, भक्षणक्रियाविषयभावापत्तिरेवात्रेप्सितत्वम् । एवं चोरान् पश्यतीत्यत्रापि प्रथमसूत्रेणैव कर्मत्वम्, ''चोरादिदृशिक्रिययेप्सित'' मिति । वृक्षमूलाद्यपि पूर्वमननुसंहितमपि तदानीमुपसर्पणवेलायामीप्सितमेव, अन्यथोपसर्पणक्रियाविषयभावमेव नोपेयात्। तमब्ग्रहणस्य प्रत्याख्यातत्वात्श्रमापनोदनार्थं ग्रामगमनेऽप्यन्तरा वृक्षमूलोपसर्पणमभिसंहितमिति कर्मत्वमीप्सितमात्रस्य । क्रूरमभिक्रुध्यतीत्यत्रापि क्रूरादिधात्वर्थेन संबद्धमिति पूर्वसूत्रेणैव सिद्ध्यति कर्मत्वम् । ''ग्राममधिशेते'', ''नगरमुपतिष्ठती'त्यादावुपसर्गसंबन्धे सकर्मकत्वाद्धातूनामधिकरणत्वं बाधित्वा परत्वात्कर्मसंज्ञा सामान्यसूत्रेणैव सिद्ध्यति । उपसर्गाभावे त्वधिकरणत्वं ग्रामादेः । 'अक्षान् दीव्यती' त्यत्र विजिगीषोपसर्जन- यातनवचनत्वात् धातोरक्षाणां पूर्वसूत्रेणैव कर्मत्वम्। कीडामात्रार्थकत्वे त्वक्षाणां करणत्वम्। ''दिवः कर्म चेति (पा.१.४.४३) सूत्रं तु संज्ञाद्वयसमावेशार्थं भविष्यति। एवं प्रथमसूत्रे तमपः परित्यागे तत्सूत्रेणैव सर्वत्रापि निरुक्तरीत्या कर्मसंज्ञा सिद्ध्यतीति महल्लाघवम्। ''तथायुक्तं चानीप्सित'' मित्यादि तु (पा.१.४.५०) मन्दबुद्ध्यनुग्रहाय स्पष्टप्रतिपत्यर्थं भविष्यति।

अस्या भर्तृहरिकल्पनाया अपादानप्रकरणस्थभाष्यं मूलम् । तत्र हि, ''ध्रुवमपायेऽपादानमिति (पा.१.४.२६) सूत्रेऽपायशब्देन बुद्धिपरिकल्पितमप्यपायं स्वीकृत्य ''चोराद् बिभेती'' त्यादौ धातोः निवृत्तिनिवर्तनापर्यन्तं वृत्तिमाश्रित्य तत्सूत्रेणैव सर्वत्रापादानसंज्ञां प्रसाध्य, ''भीत्रार्थानां भयहेतु'' (पा.१.४.२५) रित्याद्यपादानप्रकरणं प्रत्याख्यातम्। स्पष्टप्रतिपत्तये तु तत्तत्सूत्रारम्भ इति तदाशयः। तथा च हरिः साधनसमुद्देशे कर्माधिकारे-

यथैवैकमपादानं शास्त्रे भेदेन दर्शितम्।<br>
तथैकमेव कर्मापि भेदेन प्रतिपादितम्॥ ७८॥ इति।

एवं च कर्मसंज्ञासूत्रे तमपोऽभावेन ''कर्तुरीप्सितं'' ''स्पृहेरीप्सितः'' इति सूत्रद्वयेऽपि कर्तुः क्रियये प्सितत्वस्य तुल्यत्वात् स्पृहयतिभिन्ने पच्यादौ चरितार्थस्य कर्मत्वस्य विशेषविहितेन स्पृहयतियोगमात्रनिमित्तकेन संप्रदानत्वेन बाधः। तथा संप्रदानत्वेन शेषत्वस्यापि बाधः। एवं च स्पृहयति योगं ''स्पृहेरीप्सितः'' इति सूत्रेण संप्रदानता चतुर्थ्येकवचनकर्मत्वनिमित्तिका द्वितीया, नापि शेषषष्ठी। उक्तं च हरिणा-

हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम्।<br>
रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते॥ १३०॥ इति।

एवं भतृहरेर्मतमुपपादितम्॥

हरदत्तादीनां मतमुपाद्यते-

हरेरुक्तिः प्रौढ्या । अपादानप्रकरणस्थभाष्यार्थस्य कर्मसंज्ञासूत्रेऽतिदेशे मानाभावात्, भाष्यानुक्तत्वात् कस्यापि लिङ्गस्यादर्शनाच्च। सर्वत्रापि सामान्यसूत्रेण कर्मत्वसंपादनलोभेन भाष्यकारसंमतस्य तमब्ग्रहणप्रत्याख्यानस्यायुक्तत्वाच्च।

किं च तमपोऽभावे "यवेभ्यो गां वारयती"त्यादौ कर्मत्वापादानत्वयोर्विषयव्यवस्था दुरुपपादा स्यात्। तत्सत्वे तु, ईप्सितेऽपादानत्वमीप्सिततमे कर्मत्वमिति तद्व्यवस्था सिद्धयति। न च वारणार्थानां वारयितव्यानां प्रतिषेद्धव्यानामीप्सित इति सूत्रार्थस्वीकारेणादोष इति वाच्यम्। तस्यार्थस्य भाष्यानुक्तत्वेनाप्रामाणिकत्वात्।

किं च वारणार्थानामिति सूत्रेऽग्नेर्माणवकं वारयतीत्यत्र माणवकेऽपादानत्वमाशङ्क्य कर्मणो यदीप्सितं तदपादानमित्यर्थकेन कर्मणा यदीप्सितमिति वचनेन परिहृतं भाष्ये, त्वदुक्तार्थस्वीकारे तु स्वीकारेणैव तद्वारणसंभवाद् भाष्यकृतो वचनान्तरानुधावनं निष्फलमेव स्यात्।

किं च माणवकेऽतिव्याप्तिवारणपरं कर्मणो यदीप्सितमिति वचनं वारणार्थेषु कार्यग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनादिति भाष्येण प्रत्याख्यातम्। माणवकेऽपादानत्वं प्राप्नोति, तच्च कर्मत्वेन बाध्यत इति खलु तस्याशयः। ईप्सितेऽपादानत्वं चरितार्थम्, वारयतिव्यतिरेकेण पच्यादौ कर्मत्वं चरितार्थम्, ईप्सिततमे उभयप्राप्तौ परत्वात्कर्मत्वमिति भाष्यकृतो भावः, तमपोऽभावेऽपादनत्वबाधनं कर्मत्वस्य न घटेत।

ननु वारणार्थानामिति सूत्रे ईप्सित इति क्तार्थकर्मणा कर्तुराक्षेपोऽङ्गीकृतः तद्वत्कर्मसंज्ञासूत्रेऽपि ईप्सित इति कर्मणा कर्तुराक्षेपेणैव सिद्धौ पुनः कर्तृग्रहणेन प्रकर्षलाभसंभवान्माणवकादेः कर्मत्वस्य सिद्धया तमब्ग्रहणस्यैव निरुक्तभाष्यात्प्रतीत्या हर्याद्युक्तं प्रत्याख्यानं युक्तमेव। अत एव भाष्यकृता प्रकृते तमब्ग्रहणादिति नोक्तं, किं तु कर्तुरीप्सिततमं कर्मेति वचनादित्येवोक्तमिति चेत्, न, लघुना तमब्ग्रहणेन सिद्धे कर्तुरित्यस्य प्रत्याख्याने भाष्यतात्पर्यात्। स्पष्टं चेदं "वारणार्थानामि" ति सूत्रे भाष्यप्रदीपोद्द्योते। अतएव "कर्तुरीप्सिततमं कर्मे"ति सूत्रे भाष्ये तमब्ग्रहणस्यैव माणवककेऽपादनवारणेन कर्मत्वसिद्धिफलं प्रतिपादितम्।

किंच कर्मसंज्ञासूत्रे तमपोऽभावे यदा पुष्टयर्थं माषभक्षणाय माषक्षेत्रेष्वेवाश्वबन्धनं, तदा माषेष्वश्वं बध्नातीत्यत्र माषाणां कर्मत्वापत्तिः। माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थस्वीकारे कर्तृग्रहणेन माषाणां कर्मत्ववारणेऽपि निरुक्तार्थस्वीकारे तद्वारणायोगात्। किं चात्र तमपोऽभावे वारणार्थानामिति सूत्रमस्यापवादः स्यात्, वारयतिमात्रविषयकस्यापादानत्वस्य निरवकाशत्वात्, पच्यादियोगे कर्मत्वस्य चरितार्थत्वात्, उभयोरपीप्सितत्वमात्रविषयकत्वात्। तथा चाग्नेर्माणवकं वारयतीत्यादावग्निमाणवकयोरुभयोरप्य-पादानत्वापत्त्या कर्मत्वं माणवकस्य न स्यात्। न च कर्मत्वप्राप्तियोगेऽग्नावपादानत्वस्य चारितार्थ्यं शङ्क्यम्। संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारार्थकत्वाद्वारयतेस्तदुपस्थाप्यसंयोगरूपफलाश्रयत्वेनाग्नेरपि कर्मत्वापत्तेर्दुर्वारत्वात्। न च कर्मसंज्ञासूत्रे कर्तृग्रहणेन कर्तृव्यापार प्रयोज्य फलाश्रयस्य कर्मत्वलाभेनाग्नौ तत्त्वाभावात् तथापादानस्य चारितार्थ्यं शङ्क्यम्। कर्तृग्रहणेन कर्तृ कर्तृव्यापारवाचकधातूपस्थाप्यफला-श्रयत्वमित्यर्थस्यैव लाभेन फले व्यापारप्रयोज्यत्वालाभेन निरुक्तरीत्याग्नावपि कर्मत्वस्यानिवारणात्। कर्तृव्यापारः, अन्तिमव्यापारश्चैत्रादिनिष्ठः, तद्वाचको धातुः वारयतिः, तदुपस्थाप्यफलम्, अभाव इव संयोगोऽपि स्यादिति दोषतादवस्थ्यमेव। नापि कर्मसंज्ञासूत्र ईप्सित शब्दस्याभिप्रेतपरत्वेनाग्नेरनीप्सितत्वेन कर्मत्वाप्राप्त्या तत्रापादनत्वस्य चरितार्थतया कथमपवादत्वमिति भ्रमितव्यम्, वारणार्थानामिति सूत्रस्थभाष्येणोभयत्रापीप्सित-शब्दः क्रियाशब्दो न त्वभिप्रेतपरो रूढ इति लाभादपवादत्वस्य सुदृढत्वात्। तत्र हि भाष्ये उक्तम्, "किमुदाहरणं माषेभ्यो गां वारयति भवे द्यस्य माषाः, न गावः, तस्य माषा ईप्सिताः यस्य तु खलु गावो न माषाः, कथं तस्य

माषा ईप्सिताः स्युः? तस्यापि माषा एवेप्सिताः। आ तश्चेप्सिताः यदेभ्यो गां वारयती''ति ।यस्य गावः न माषास्तत्र माषाणां कथमपादानत्वम्, तेषां परकीयत्वेन न तस्यानीप्सितत्वादिति शङ्का भाष्ये। सूत्रे ईप्सितशब्दोऽभिप्रेतपरो रूढो गृह्यत इत्याशयेन शङ्का, ईप्सितशब्दो न रूढः, किं तु क्रियापरः धात्वर्थक्रियाजन्यफलाश्रय इत्यर्थक इत्याशयेन समाधानम्। वारयत्यर्थघटकसंयोगाश्रयत्वेन माषाणामीप्सितत्वमिति तद्भावः। एवं कर्मसंज्ञासूत्रस्थ-भाष्यादप्ययमर्थो लभ्यते। तत्र हि ''दध्ना भुञ्जीय'', ''पयसा भुञ्जीय ''इत्यत्र दधिपयसोरीप्सितत्वात्'' कर्मत्वमाशङ्क्य तस्याप्योदन एवेप्सिततमः न तु गुणेष्वस्यास्थानुरोध इति समाहितम्, सूत्रेऽभिप्रेतपरो रूढ ईप्सित आश्रीयत इति शङ्कितुराशयः। क्रियाशब्दोऽयं न रूढ इति समाधातुराशयः। धात्वर्थक्रियाजन्यफलाश्रय इत्यर्थक ईप्सितशब्दः, तेनौदनस्य कर्मत्वं न दधिपयसोः तयोः करणत्वमेवेति तद्भावः। ''वारणार्थानाम्'', ''कर्तुरीप्सिततमं कर्मे''ति सूत्रद्वये प्रदीपोद्योतयोः स्पष्टमिदम्।अतस्तमब्ग्रहणं न प्रत्याख्येयं, किं तु कर्तव्यमेव, कृते तस्मिन् माषाणां कर्मत्ववारणं माणवकादेः कर्मत्वसिद्धिश्च सुशकम्। तथा हि तमबादयः प्रवृत्तिनिमित्तगतप्रकर्षे विधीयन्ते। प्रवृत्तिनिमित्तं चेप्सितशब्दे इच्छा। तस्यां स्वतःप्रकर्षाभावेऽपि व्याख्याना-द्विशेषणीभूतसंबन्धगतः स गृह्यते। स च प्रकृतधात्वार्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वरूपः। अत्र फले प्रकृतधात्वर्थेति विशेषणाद् माषेष्वश्वं बध्नातीत्यत्र माषाणां न कर्मत्वम्, बन्धप्रयोज्यभक्षणाश्रयत्वेऽपि भक्षणस्य प्रकृतबध्नात्यर्थत्वाभावाद्। व्यपारे प्राधान्यनिवेशादग्नेर्माणवकं वारयतीत्यत्र संज्ञाद्वयस्य व्यवस्था सिद्ध्यति। प्रधानव्यापारश्चात्राभावानुकूलश्चैत्रनिष्ठः, संयोगानुकूलव्यापारो माणवकनिष्ठोऽप्रधानम् तत्रेप्सितमात्रे (अप्रधानव्यापारजन्यसंयोगरूपफलाश्रये) अपादानत्वस्य चरितार्थतयेप्सिततमे (प्रधानव्यापारजन्याभावरूप-फलाश्रये) परत्वात्कर्मत्वस्य प्रवृत्तेः। संज्ञाद्वयस्य व्यवस्थासिद्ध्यर्थमेव फले व्यापारप्रयोज्यत्वनिवेशोऽपि। अन्यथा धात्वर्थप्रधानव्यापारवाचकधात्वर्थफलाश्रयत्वमित्यर्थापत्त्या तादृशसंयोगा- श्रयत्वेनाग्नेरपि कर्मत्वापत्त्यापादानत्वेन कर्मत्वं बाधेत। फले तत्प्रयोज्यत्वनिवेशे तु प्रधानव्यापारप्रयोज्यत्वस्य संयोगेऽभावान्न दोषः। जन्यजन्य एव प्रयोज्यत्वव्यवहारान्न दोषः। एवं च फले व्यापारप्रयोज्यत्वं, फले प्रकृतधात्वर्थत्वं, व्यापारे प्राधान्यमित्यंशत्रयं प्रकर्षार्थकतमपा लभ्यते। भर्तृहरिमते ''तथायुक्त'' मित्यादि सूत्रोदाहरणेषु सर्वेष्वपि प्रथमसूत्रेण कर्मत्वसिद्धावपि माषाणां कर्मत्वापत्तिर्माणवकादेः कर्मत्वसिद्धिश्च नोपपद्यते। अतस्तदुपपत्तये सूत्रे तमब्ग्रहणमावश्यकमेव।

प्रकृतमनुसरामः। ''कर्तुरीप्सिततमं कर्म'' (पा. १.४४.९) इति ''स्पृहेरीप्सितः'' (१.४.३६) इति सूत्रयोस्तमप्प्रत्ययस्य सत्त्वासत्त्वाभ्यां तत्सूत्रविहितयोः कर्मत्वसंप्रदानत्वयोर्व्यवस्थया प्रवृत्त्या बाध्यबाधकभावो नास्ति। कर्मसंज्ञासूत्रे तमपा फले धातुवाच्यत्वं विशेषणमिति लभ्यते। संप्रदानसंज्ञासूत्रे तमपोऽभावेन फले धातुवाच्यत्वं न विशेषणम्। धात्ववाच्यफलाश्रयरूपसंप्रदानत्वं प्रवर्तते। स्पृहयतिरिच्छामात्रवाची, (मात्रपदेन फलस्य व्यावृत्तिः) इच्छानुकूलमनःसंयोगादिव्यापारवाची वा। आद्ये स्पृहेरीप्सित इत्यनेन पुष्पाणां संप्रदानत्वम्। अत्र धात्वर्थवाच्यविषयतारूपफलाश्रयत्वेन पुष्पाणां संप्रदानत्वम्। एतत्सूत्रप्रवृत्तौ फलस्यधातुवाच्यत्वं नापेक्ष्यते तमपोऽभावात्। द्वितीये ''कर्तुरीप्सिततम''मिति सूत्रेण तेषां कर्मत्वम्। अत्र संप्रदानत्वं तु न, परया कर्मसंज्ञया बाधात्। अत्र धातुवाच्येच्छारूपफलाश्रयत्वेन पुष्पाणां कर्मत्वम्, कर्मसंज्ञासूत्रे प्रधानव्यापारप्रयोज्यधातुवाच्य-फलाश्रयत्वमीप्सिततमत्वम्। संप्रदानसंज्ञासूत्रे व्यापारजन्य (धात्ववाच्य) फलाश्रयत्वमीप्सितत्वम्। एवं च फलस्य धातुवाच्यत्वावाच्यत्वाभ्यां विषयविभागस्य सत्त्वात्कर्मत्वसंप्रदानत्वयोर्न बाध्यबाधकभावः, संप्रदानस्यापि

तत्त्वेनाविवक्षायां षष्ठ्यपि । ईप्सितमात्रे इयं संज्ञा, प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञेति ग्रन्थानामप्ययमेवार्थः । ईप्सितमात्रे, फलस्य धात्ववाच्यत्वे, प्रकर्षविवक्षायां, फलस्य धातुवाच्यत्वे । स्पष्टं चेदं हरदत्तदीक्षितखण्डदेवनागेशग्रन्थेषु । विभक्तित्रयमपि महाकविप्रयोगेषु दरीदृश्यते । "स्पृहणीयगुणैर्महात्मभि" रिति भारविः । "परस्परेण स्पृहणीयशोभम्" इति कालिदासः । उभयत्रापि कर्मणि स्पृहयतेरनीयर् । "कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चे"ति कस्यचित्प्रयोगः । "गिरिजापि यस्यै.... स्पृहयांबभूवे" ति मुरारिः । भर्तृहरिमतेऽप्येते प्रयोगा अगतिकगत्या साध्या भवेयुर्नाम ।

एवं च कर्मसंज्ञासूत्रे ईप्सिततमत्वं प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्य - प्रकृतधात्वर्थफलाश्रयत्वेनेच्छाविषयत्वरूपम्, तमपः सत्त्वात् । अपादानसूत्रे तु धात्वर्थव्यापारप्रयोज्यधात्वर्थफलाश्रयत्वमीप्सितत्वम् । व्यापारे प्रधानेति विशेषणं न दीयते, तमपोऽभावात् । संप्रदानसंज्ञासूत्रे तु कर्तृव्यापारप्रयोज्यफलाश्रयत्वरूपमीप्सितत्वम् । फले धात्वर्थेति विशेषणं न दीयते, तमपोऽभावदिति विवेकः ।

अत्रेदं तत्त्वम् - नैतावता भर्तृहरिगुरावप्रामाण्यशङ्का कार्या । यतो महात्मानः संभवमात्राभिप्रायेणान्तरान्तरानुपपन्नानर्थानुत्प्रेक्षन्ते । तावता तेषां तत्रार्थे न निर्भरः । पाठकास्तानर्थान् संशोध्य याथार्थ्यं गृह्णन्त्येवेत्येव तेषां महात्मनां प्रवृत्तिस्तत्र । यथा महर्षेः कणादस्य वैशेषिकशास्त्रनिर्माणम् । तत्र हि परमाणूनां निरवयवत्वं प्रसाध्य तेषां संयोगात्द्व्यणुकक्रमेण जगदुत्प्रेक्षितम् । महर्षेर्दृष्टिस्तु मायावादे । आह च खण्डनकारः-

कणादः पारिमाण्डल्यसंयोगद्व्यणुकक्रमात् ।
जगदुत्प्रेक्षयन् मायावादसादरमानसः ॥

इति । न हि तावता कणादमुनावविश्वासः प्राज्ञानाम् । भर्तृहरिरपि अपादानप्रकरणस्थं भाष्यार्थं पर्यालोच्यैषा रीतिरन्यत्रापि संभवति वा न वेत्युत्प्रेक्षयामास । परं त्वियान् विशेषः यद् अपादानप्रकरणेऽविकृतमेव पाणिनीयं सूत्रमास्थितमितरसूत्रप्रत्याख्यानाय भाष्यकृता । भर्तृहरिणा तु सूत्रान्तरप्रत्याख्यानाय पाणिनीयसूत्रे तमब्ग्रहणं परित्यक्तम् । हरेरपि तत्परित्यागे न निर्भरः, अन्यथापादानत्वकर्मत्वयोरग्नेर्माणवकं वारयतीत्यत्र व्यवस्था प्रदर्शनीया स्यात् । वारणार्थानामित्यस्य वारयितव्यानां, निवार्यमाणाना मित्यर्थकरणं त्वतिफल्गु । तावतापि न निस्तारः । पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रेऽश्वं बध्नातीत्यर्थपरत्वे 'माषेष्वश्वं बध्नाती'त्यत्र माषाणां कर्मत्वापत्तेर्दुस्समाधित्वात् । हरिहेलाभ्यां निरुक्तार्थे समाधिरप्रदर्शित एव । अतोऽत्रार्थे हरेर्निर्भरो नास्तीत्येवेति निर्णयः सुकर एव । अत एव स्वातन्त्र्यमनवलम्ब्या- पादानप्रकरणस्थभाष्यदृष्टान्तेन प्रकृतार्थः प्रादर्शि गुरुणा भर्तृहरिणा । दृश्यते चैतादृशी सरणिरन्यत्रापि स्थले भर्तृहरेः- "स्वरितञितः कर्त्रभिप्राये क्रियाफले" (पा.१.३.९२) इति सूत्रे प्रथमं भाष्याशयमनुरुध्य कर्तृगामिनि फले, तदुपलक्षिते संविधाने वर्तमानात् स्वरितेतो ञितश्च धातोरात्मनेपदं स्यादिति व्याख्याय, पश्चात् ---

क्रियाप्रवृत्तावाख्याता कैश्चित्स्वार्थपरार्थता ।
असती वा सती वापि विवक्षितनिबन्धने ॥

इति कारिकया प्रकारान्तरेण व्याख्यातमुपग्रहसमुद्देशे भर्तृहरिणा । क्रियाजन्यफलस्य कर्तृगामित्वे स्वरितञितो धातोरात्मनेपदं स्यादिति तदाशयः । अन्यथा परस्मैपदम् । इयं द्वितीया व्याख्या मतान्तरेण, न

सिद्धान्तरीत्येति तद्व्याख्याने स्पष्टं व्याचख्यौ हेलाराजः। लघुञ्जूषायामाख्यातवादे नागेशश्च। मतान्तरत्वेन प्रदर्शिता द्वितीयव्याख्यैव परमसिद्धान्ततया शिरसि धार्यते विद्वत्तल्लजैः, परमसिद्धान्तभूत प्रथमव्याख्यास्वरूपमपि न जानते शाब्दिकविद्वांस इति महदिदमाश्चर्यम्।

तथा समर्थसूत्रे ''उपसर्जनपदार्थे संख्याविशेषो वृत्तौ न भासते'' इति भाष्यकृतोक्तम्। राजपुरुष इत्यादौ शक्यतावच्छेदकराजत्वादिरूपेण राज्ञो भानम्, न त्वेकत्वादिसंख्यावैशिष्ट्येनेति भाष्याशयः। भर्तृहरिणा तु तद्भाष्यार्थतया वृत्तिसमुद्देशेऽभेदैकत्वसंख्या महता प्रबन्धेन प्रादर्शि। अभेदैकत्वसंख्येति व्यवहारो भाष्ये क्वापि नास्ति। तद्भानप्रसक्तिरपि न क्वाप्यस्ति भाष्ये।

तद्वदेव तमपः परित्यागेन प्रथमसूत्रेणैव सर्वत्र कर्मत्वसंपादनमपि भर्तृहर्युपज्ञमेव, तावता न महात्मनि तस्मिन्नप्रामाण्यशङ्कावकाश इत्यलम्। अतः स्पृहयतियोगे विवक्षाभेदेन द्वितीयाचतुर्थ्योः षष्ठ्याश्च साधुत्वे न किंचिद् बाधकमित्यलमतिविस्तरेण॥

# अभिहितकारकवाचिनी प्रथमाविभक्तिः'

यस्. यम्. यस्. वरदाचार्यः

नमस्त्रेधा विभक्तानामात्मनामन्तरात्मने। ब्रह्मणे हयवक्त्राय बन्धमोक्षैकहेतवे ॥
मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च। वैयाकरणसिद्धान्तप्रमेयं परिचिन्त्यते ॥

'अभिहितकारकवाचिनी प्रथमाविभक्तिः' इत्यस्मिन् विषये प्राच्य-नव्यमतभेदः ग्रन्थेषु दरीदृश्यते। सर्वे स्वीयमतानुसारेणैव सूत्रवार्तिकभाष्याणि योजयित्वा स्वमतसाधकतया प्रमाणीकुर्वन्ति स्म।

प्रकृते 'इष्टं हि विदुषां लोके समासव्यासधारणम्'[1] इत्यभियुक्तोक्तरीत्या संग्रहेण मतद्वयस्यनिरूपणपुरस्सरं तत्तन्मतसाधनाय सूत्रभाष्यादीनि विस्तरेण प्रदर्श्य, स्वाभिप्रायश्च निवेद्यते।

## विषयसङ्ग्रहः

प्रातिपदिकार्थमात्रे प्रथमा (स्वार्थे प्रथमा) इति सूत्रं हि प्रथमाविभक्तिषयकं व्यररचत् भगवान् पाणिनिः। एतत्सूत्रविचारार्थमेव प्रववृते वार्तिकं भाष्यञ्चेति निर्विवादम्। 'यथोत्तरं मुनीनां प्रामाण्यम्' इति शाब्दिकमर्यादया 'अभिहिते प्रथमा, तिङ्समानाधिकरणे प्रथमा' इति वार्तिकानुसारेण तिङादिभिरभिहितकारकवाचित्वं प्रथमायाः स्वरसतः सिद्धम् - एतद्विचारपरभाष्यमप्येतत्परमेवेति नवीनाः।

प्राञ्चस्तु - भाष्यं हि सूत्रकारमतमेव स्थापयति; न तु नव्यमतम् - इत्याहुः। अत एव महाभाष्यकारैः 'विप्रतिषेधाद्वा' इति अनभिहितसूत्रस्थवार्तिकविवरणे प्रथमायाः तिङ्सामानाधिकरण्यविरहस्थले 'वृक्षः प्लक्षः' इत्यत्र चारितार्थ्यं प्रादर्शि। एतत्स्वमतविरुद्धमिति मत्वा उद्योतकाराः 'अभ्युपगमवादोऽयम्' इति जगदुः। किन्तु भाष्यकाराणां हृदयं प्राच्यमते एवेति ज्ञायते सूक्ष्मावलोकनेन विपश्चिताम्। तदेवास्मिन् प्रबन्धे विस्तरतया प्रतिपाद्यते।

## मतद्वयपरीक्षा

नव्याः 'प्रथमाया अपि सर्वत्र कारकविभक्तित्वमेव, 'अभिहिते प्रथमा', 'तिङ्समानाधिकरणे प्रथमा इति वार्तिकद्वयात्, 'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्' इति भाष्यानुगुणत्वाच्च इति वदन्ति।

प्रकृतविवादास्पदविषयं निर्णेतुं 'कारके[2]' 'अनभिहिते[3]' 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा[4]' इति सूत्रत्रयं भाष्याद्यनुसारेण वर्णयामः। (भाष्यं) तथाहि - 'कारके'। किमिदं 'कारके' इति?

---

1. कुमारिलोक्तिः 2. पा.सू. - 1-4-23 3. पा.सू. - 2-3-1 4. पा.सू. 2-3-46

संज्ञानिर्देशः।

संज्ञानिर्देशश्चेत्, संज्ञिनोऽपि निर्देशः। साधकं निर्वर्तकं (क्रियायाः) कारकसंज्ञं भवतीति वक्तव्यम्। (उद्योतः) तत्फलन्तु- ब्राह्मणस्य पुत्रं पन्थानं

पृच्छति' इत्यादौ ब्राह्मणस्य कारकसंज्ञा वार्यते।

'अन्यथासिद्धत्वात्'

अनन्यथासिद्धं कार्यनियतपूर्ववृत्ति हि साधकम्। (प्रदीपः) ननु संज्ञापक्षे कारकसंज्ञायाः अपादान-संज्ञादिभिः समावेशो न प्राप्नोति, एकसंज्ञाधिकारात्, 'आकडारादेका संज्ञा[1]' इति हि सूत्रितम्।

नैष दोषः। 'ध्रुवमपाये' इति योगविभागेन कारकमिति संज्ञा क्रियते। ततः अपादानमिति उभयोः समावेशः सिध्यति। एवं संप्रदानादिष्वपि समावेशो व्याख्येयः। अस्य प्रयोजनं 'स्तम्बे रमः' इत्यादौ अधिकरणसप्तमी, कारकत्वात् कृदन्तस्योत्तरपदस्य प्रकृतिस्वरश्च 'गतिकारकोपपदात् कृत्[2]' इति सूत्रेण सिध्यति।

कारके इति प्रथमार्थे सप्तमी इति भावः।
कारकमिति महती संज्ञा क्रियते।

संज्ञा च नाम यतो न लघीयः।

कुत एतत्?

लघ्वर्थं हि संज्ञाकरणम्। ('अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते हि वैयाकरणाः)। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्; अन्वर्थसंज्ञा यथा विज्ञायेत - 'करोतीति कारकम्' इति।

यद्येवमाश्रीयते तदा स्वतन्त्रस्यैव कर्तृसंज्ञावत् कारकसंज्ञाऽपि प्राप्नोति; न तु करणादीनां कर्तृपरतन्त्राणाम्।

तद्यथा - अमात्यानां राज्ञा सह समवाये पारतन्त्र्यम्, व्यवाये स्वातन्त्र्यम्। एवमेव 'स्थाली पचति' इत्यादौ स्थाल्याः स्वातन्त्र्यम्, 'देवदत्तः स्थाल्यां पचति' इत्यादौ स्थाल्याः पारतन्त्र्यम्। तथा च

उभौ अन्योन्यविशेषकौ भवतः, एकद्रव्यसमवायित्वात्। एवं तर्हि सामान्यभूता क्रिया वर्तते, तस्याः निर्वर्तकं कारकम्। कर्तृसंज्ञा तु 'स्वतन्त्रः कर्ता[3]' इत्यत्र कारकत्वादेव स्वातन्त्र्ये सिद्धे पुनः स्वतन्त्रश्रुतिः नियमार्था। तेन स्वतः स्वातन्त्र्यमेव यस्य, तस्य कर्तृसंज्ञा; न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य। अनेन 'क्रियाजनकत्वं कारकत्व'मिति सिद्धम्। तच्च कर्त्रादीनां षण्णामपि। तत्र प्रकृतधातुवाच्यप्रधानव्यापाराश्रयत्वं कर्तृत्वम्, 'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते' इति हर्युक्तेः। धातुनोक्तक्रिये कारके कर्तृता नित्यमिष्यते इत्यन्वयः। तेन यस्य व्यापारो यदा धातुना अभिधीयते, तदा स कर्तेति 'स्थाली पचति' इत्यादीनां सङ्गतिः। तत्रोक्ते तु कारकमात्रे प्रथमा, 'तिङ्समानाधिकरणे प्रथमा, अभिहिते प्रथमा४' इति वार्तिकद्वयात्। तिङर्थनिष्ठ-विषयतानिरूपिताभेदसंसर्गावच्छिन्नप्रकारताश्रये कारके वर्तमानात्, एवं तिङ्कृदाद्यन्यतमप्रयोज्याभिधान-विषयताश्रये कारके वर्तमानाच्च प्रातिपदिकात् प्रथमेति निर्णयः।

1. पा.सू.1-4-1 2. पा.सू. 6-2-139 3. पा.सू. 6-2-148

तथा च - 'चैत्रो भवति' इत्यत्र एकत्वावच्छिन्नचैत्राभिन्नकर्तृकं भवनमिति बोधः। आख्यातकृदादिना कर्त्रादेरभिधानेऽपि प्रथमया अनुद्भूतकर्तृत्वादिशक्तिः प्रतिपाद्यते इति तात्पर्यम्। अत एव 'सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम्[5]' इति भाष्यञ्च सङ्गच्छते।

प्राच्यास्तु - एवमाहुः।

'अथ वा यावद्ब्रूयात् - क्रियायामिति, तावत् कारके इति। एवञ्च कृत्वा निर्देश उपपन्नो भवति 'कारके[1]' इति। इतरथा हि 'कारकेषु' इति ब्रूयात्' इति उपसंहारभाष्यम्। क्रियाऽत्र सूत्रे कारकशब्देनोच्यते। सा हि कर्त्रादीनि विशिष्टव्यपदेशयुक्तानि करोति इति व्युत्पत्तेः। विषयत्वेन च अयमधिकारः क्रियायां विषये यद्ध्रुवमित्यादि-वस्तु-वाक्यार्थः संपद्यते। निर्धारणसप्तम्यां 'कारकेषु' इति वाच्यम्; निर्धारणस्यानेकाश्रयत्वात्। 'कारकाद्दत्तश्रुतयोः[2]' इत्यादौ कारकशब्दस्य स्वरितत्वात् तदधिकारोपात्तानामपादानादीनां ग्रहणम्। (अत्र स्वपक्षे सौत्रत्वात् एकवचननपुंसकत्वे)। अनेन क्रियान्वयित्वं कारकत्वमिति निष्पन्नम्। तथा च अस्मिन् पक्षे वृत्तावपि कारकमित्यस्य क्रियान्वयीत्यर्थः इति। तथा च एतेषां मते प्रथमायाः कारकविभक्तित्व-प्रसङ्गस्यैव नावसरः। तिङर्थकर्त्रा अभेदेनान्वयात् कारकत्वव्यवहारस्य उपपत्तिः; न तु तदर्थत्वेन।

यदत्र प्राच्यमते नवीनैः दूषणमारोपितम् - 'कारकाणां भावनान्वय' इति प्रामाणिकव्यवहारस्य ''घटत्ववतां घटत्ववत्तेति तुल्यतापत्तिरिति। अत एव भाष्ये क्रियाजनकत्वमेव कारकत्वमुक्तम्। तज्जनकत्वं च एषां तत्क्रियोपयोगि क्रियाश्रयत्वेनेति चोक्तम्। अत एवैषां क्रियान्वयः। क्रियाजनकत्वमिति ज्ञाते, का सा क्रिया? इत्याकाङ्क्षायां क्रियाया जनकाकाङ्क्षया च तत्रैव अन्वयस्यौचित्यात् - इति।

अत्र प्राचीनानामयमाशयः:- शीघ्रोपस्थितिकत्वात् कारकपदस्य क्रियापरत्वमिति भाष्योक्तद्वितीयपक्षेऽपि अन्वयीत्यध्याहारेण क्रियान्वयित्वस्यैव कर्मादिसंज्ञोद्देश्यतावच्छेदकत्वलाभः। तदेव प्रवृत्तिनिमित्तम्। तथा च कारकाणां भावनान्वयः इति प्रयोगस्य नानुपपत्तिः इति- 'अपि च कारकपद-वाच्यानां भावनान्वय इत्यर्थवर्णनेन तु न काप्यनुपपत्तिः। यथा 'वसन्तकाले संप्राप्ते काकः काकः पिकः पिकः[3]' इत्यादौ।

एतावता क्रियान्वयित्वं कारकत्वमिति भाष्योक्तलघुपक्षे प्रथमायाः कारकविभक्तित्वं नास्त्येव इति बोध्यम्।

कारकपदार्थः यः को वा भवतु। 'अनभिहिते[4]' इति सूत्रभाष्यानुरोधेन प्रथमायाः कारकविभक्तित्वं सुवचम्। तथा हि-

'उक्तं-निर्दिष्टम्-अभिहितमित्यनर्थान्तरम्'।
अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात्'।

(इति सूत्रप्रत्याख्यानपरं वार्तिकम्)

(प्र) क्रियते कटः, कृतः कटः' इत्यादिषु द्वितीयादिवारणाय अनभिहिताधिकारः क्रियते। यदि चात्र द्वितीयादयः स्युः, ततः प्रथमा निरवकाशैव स्यात्। तस्मात् अनवकाशत्वात् प्रथमैव द्वितीयादिबाधिका भविष्यतीति नार्थोऽनभिहिताधिकारेण इत्यर्थः।

---

1. पा. सू. 1.4.23 2. पा.सू. 6-2-148 3. लोकोक्तिः। 4. पा.सू. 1-4.23

(भा) 'सावकाशा प्रथमा'

कोऽवकाशः?

अकारकम् - वृक्षः प्लक्षः इति।

(प्रदीपः) क्रियापदं न श्रूयत इति विभक्त्यन्तराप्राप्तिः इति भावः।

(भा) 'अवकाशोऽकारकमिति चेन्न, अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति', वृक्षः प्लक्षः अस्तीति गम्यते।

(प्रदीपः) ज्ञातं वस्तु परं प्रतिपादयितुं शब्दः प्रयुज्यते। ज्ञानं च सतः (बुद्धिसतः) इति यत्र क्रियापदान्तरस्याप्रयोगः तत्र उत्सर्गतः सत्ताप्रतीतिः इत्यस्तिक्रियापदानुषङ्गात् कर्तरि तृतीयाप्रसङ्गत् अनवकाशा प्रथमा इत्यर्थः।

(भा) 'विप्रतिषेधाद्वा प्रथमाभावः'

अथवा द्वितीयादयः क्रियन्ताम् प्रथमा वेति। 'कटं करोति' इत्यादौ द्वितीयादीनामवकाशः। प्रथमायाः अवकाशः अकारकं 'वृक्षः प्लक्ष' इति। 'कृतः कटः' इत्यादौ प्रथमा भविष्यति विप्रतिषेधेन।

(प्र) सावकाशत्वमभ्युपगम्य इदमुच्यते।

(उद्योतः) अनवकाशत्वमुक्त्वा विप्रतिषेधोऽसङ्गत इत्यत आह - अभ्युपगम्येति। 'नीलमिदं; न तु रक्तम्' इत्यादौ रक्तत्वादिनिवृतिपरे वाक्ये सत्ताया अनावश्यकत्वात्, अस्तिर्भवन्तीपरः इत्यस्य अभावात्। साहचर्यं च सर्वत्र न व्यवस्थापक-मित्यभिमानः। वैतण्डोक्तिरियमिति तात्पर्यम्। अनेन वस्तुतो निरवकाशत्वमेवेति भावः, उक्तरीत्या तत्रापि सत्ताक्षेपात्। अतः 'तिङ्समानाधिकरणे' इति न्यासः सङ्गच्छते। स्पष्टं चेदं प्रातिपदिकार्थसूत्रभाष्ये।

'अनभिहित' सूत्रभाष्यानुरोधे तु 'वृक्षः प्लक्षः', 'नीलमिदं[1]; न तु रक्तम्' इत्यादिप्रयोगस्वारस्यात् प्रथमाया अकारकत्वमेव सिध्यति।

यदुक्तं नवीनैः - प्रातिपदिकार्थसूत्रभाष्ये स्पष्टमिति तदपि परिशीलयामः-

(भा) 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा लक्षणे पदसामानाधिकरण्ये उपसंख्यानम्; अधिकत्वात्'

उपसंख्यानं कर्तव्यम् - वीरः पुरुषः इति।
किं पुनः कारणं न सिध्यति?

अधिकत्वात्। व्यतिरिक्तः पदार्थः इति कृत्वा प्रथमा न प्राप्नोति।

---

1. पा.सू. - 2-3-1

कथं व्यतिरिक्तः?

पुरुषे वीरत्वम्।

(प्रदीपः) अवधारणार्थमात्रशब्दात् 'संबोधने च[1]' इति ज्ञापकाद्वा अधिकार्थे प्रथमया न भाव्यम्। अस्ति च वीरः पुरुषः इत्यादौ सामानाधिकरण्यात् विशेष्यभावस्य अधिकस्य प्रतीतिः।

(उद्योतः) तयोः पदयोः एकार्थवृत्तित्वात् तत्प्रवृत्तिनिमित्तयोः एकवृत्तित्वाच्चेत्यर्थः। व्यतिरिक्तपदे मयूरव्यंसकादित्वात् समासः - अतिरिक्तार्थेन विशिष्ट इत्यर्थः।

(भा) 'न वा वाक्यार्थत्वात्'
न वा वक्तव्यम्।
किं कारणम् ?

वाक्यार्थत्वात्। यदत्राधिक्यं वाक्यार्थः सः।

(प्रदीपः) उभयत्र स्वार्थमात्रनिष्टात् प्रथमा विधीयते। पश्चादाकांक्षावशात् विशेषणविशेष्यभावावगतिः उपजायमाना बहिरङ्गत्वादन्तरङ्गं संस्कारं पूर्ववृत्तं न बाधते।

(भा) अथवा -
'अभिहिते प्रथमा' इत्येतल्लक्षणं करिष्यते।

(प्रदीपः) तिङ्कृत्तद्धितसमासैः अभिहिते कर्त्रादौ प्रथमा इत्यर्थः। ततश्च वीरः पुरुषः इत्यत्रार्थाधिक्येऽपि अभिहितत्वमात्राश्रया प्रथमा भविष्यति।

(भा) अभिहितलक्षणायामनभिहिते प्रथमाविधिः[1]

वृक्षः प्लक्ष इति।

उक्तं वा।

किमुक्तम्?

'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति गम्यते। वृक्षः प्लक्षः 'अस्ति' इति गम्यते इति।

'अभिहितानभिहिते प्रथमाभावः'

'प्रासादे आस्ते' 'शयने आस्ते' इति। सदिप्रत्ययेन अभिहितमधिकरणम् इति कृत्वा प्रथमा स्यात्।

(प्रदीपः) सदिक्रिया आसिक्रियाद्वयसाधनाधिकरणशक्तिद्वयसद्भावात् एकस्याः शक्तेः अभिहितत्वात् तदाश्रया प्रथमा प्राप्नोति।

(भा) एवं तर्हि-

'तिङ्समानाधिकरणे प्रथमा[4]' इत्येतल्लक्षणं करिष्यते-

---

1. पा.सू. - 2-3-47

(प्रदीपः) यथा - 'देवदत्तः पचति' इति। 'प्रासादे आस्ते' इत्यादौ वैयधिकरण्यात् प्रथमाया अभावः।

(उद्योतः) तिङ्समानाधिकरणे प्रथमैवेति अर्थनियम मात्राश्रयणेन 'उच्चैः नीचैः' इत्यादौ न दोषः।

(भा) तिङ्समानाधिकरणे इति चेत् तिङोऽप्रयोगे प्रथमा विधेया - 'वृक्षः प्लक्षः'।

(प्रदीपः) न हिं तिङन्तपदप्रयोगमन्तरेण तत्सामानाधिकरण्यसम्भ्दावः।

(भा) उक्तं पूर्वेण। किमुक्तम्?

अस्तिर्भवन्तीपरः --- गम्यते। वृक्षः प्लक्षः अस्ति इति गम्यत इति।

(प्रदीपः) अनेन अनभिहितसूत्रोक्तं 'विप्रतिषेधाद्वा'

इति वार्तिकं प्रौढ्येति सूचितम्। (अतः कारकविभक्तित्वं प्रथमायाः निराबाधमिति भावः।)

## - निगमनम् -

'आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः॥'

इति हर्यभियुक्तोक्तिः।

द्वितीया - तृतीया - सप्तमीनाम् आश्रयोऽर्थः।

कियायाः फलस्य च धातुनैव लाभात् अनन्यलभ्यः शब्दार्थः इति न्यायात् आश्रय एवार्थः। आश्रयत्वम् अखण्डोपाधिरूपम्। इतर- पदार्थघटितमूर्तिकधर्मरूपम्। किञ्चिद्धर्मावच्छिन्नाश्रयतावानित्यर्थः। तेन चतुर्थीपञ्चम्योः अर्थयोः उद्देश्यावध्योः आश्रयात्मकत्वेऽपि न क्षतिः।

अत्र प्रथमाविभक्तेः अर्थमेवात्याक्षुः। तत्र निदानं किमिति चेत् प्रथमायाः कारकविभक्तित्वाभाव एवेति सुस्पष्टम्। किञ्च 'अभिहिते प्रथमा' 'तिङ्समानाधिकरणे प्रथमा' इति न्यासद्वयमेव नव्यानां साधकतमं खलु। तच्च पूर्वोत्तरभाष्यपरा मर्शेन दूषितप्रायमेवेति कथं वा तदवलम्ब्येत? अस्तिक्रियापदस्य सर्वत्राध्याहार इत्यत्र दृढतरप्रमाणं मृग्यम्। वृक्ष इत्यादौ अध्याहारेऽपि 'नीलमिदं न तु रक्तम्' इत्यत्रापि अध्याहार एव कर्तव्यः इति न हि राजाज्ञा! सर्वानुभव -

विरुद्धश्च। अत एव अनभिहितसूत्रभाष्ये 'विप्रतिषेधाद्वा इति वार्तिकमवातरत्। प्रथमायाः कारकविभक्तित्वनैयत्ये विप्रतिषेधः दुरुपपाद एव।

तथा च. क्रियापदं विना 'वृक्षः प्लक्षः' इत्यादिप्रयोगान् असकृत् अभाषिष्ट भगवान् पतञ्जलिः।

किञ्च लोकेऽपि विष्णुसहस्रनामपारायणादौ विश्वं, विष्णुः वषट्कारः इत्यादिप्रथमान्तानुसन्धानम् शिष्टपरिगृहीतम्। तत्र न कस्यापि अस्तीति तिङन्तं स्मृतिपथमधिरोहति।

तथा च सूत्रभाष्यानुरोधेन प्रथमायाः स्वार्थ एव; न तु अतिरिक्तार्थः इति प्राच्यमतमेव सिद्धान्त कोटिमाटीकते।

अनभिहितसूत्रप्रत्याख्यानाय प्रवृत्तं यत् 'विप्रतिषेधाद्वा' इति, भाष्यवार्तिकानुसारेण, 'वृक्षः प्लक्षः', 'नीलमिदं न तु रक्तम्' इति प्रयोगप्रदर्शनपर - उद्योत परामर्शेन च प्रथमाविभक्तेः कारकविभक्तित्वं नास्ति इत्येव मुनित्रयसम्मतमित्युक्तं भवति।

यदत्र प्रातिपदिकार्थमात्रसूत्रे न्यासान्तरमभिहितम् 'अभिहिते प्रथमा', यद्वा 'तिङ्समानाधिकरणे प्रथमा' इति, तत्स्वारस्यात् 'वृक्षः प्लक्षः' इत्यादौ कारकविभक्तित्वमेव अस्तिक्रियाध्याहारेण गम्यते इति। एवं पक्षद्वये विनिगमकं किमिति चेत् - एतत्सूत्रस्थवार्तिकयोः 'देवदत्तः पचति' इत्यादौ तिङाभिहितत्वात्, तिङ्सामानाधिकरण्यसद्भावाच्च प्रथमा सूपपादा। 'प्रातिपदिकार्थमात्रे प्रथमा' इति सूत्रं मास्तु इत्याशयवर्णने न कोपि विरोधः -

इत्यादौ "अनभिहिते" इत्यत्र 'वृक्षः प्लक्षः' इत्यादौ, चारितार्थ्यमुपपाद्यैव कृतः कटः द्वितीया स्यात् इति शङ्कायां परत्वात् प्रथमैव नो चेत् कथमपि विप्रतिषेधः दुरुपपाद एव इत्युक्तिस्वारस्यात् एतत् सूत्रस्थमेव सिद्धान्तभाष्यम्।

प्रातिपदिकार्थसूत्रस्थभाष्यमेकदेश्युक्तिः इति विषयविभागे तु मुनित्रयसिद्धान्तः एकरूपतामेवाश्नुते।

एतादृशविचारेण किं प्रयोजनम्? इति केषांचित् शङ्का जायेत इति किञ्चित् प्रसङ्गात् उच्यते - बुद्धिवैशद्यमित्युक्तिः काममस्तु! महत्तरमिदं प्रयोजनं विभावनीयम्।

प्रतिशास्त्रमेतादृशाशयभेदाः दरीदृश्यन्ते खलु! परस्परदोषोद्भावनेन सभायां केशाकेशि मुष्टीमुष्टि प्रवर्तते। अत्र तु योजनाभेद एव; नार्थविरोधः। प्रकृते न कापि लक्ष्यासिद्धिश्च।

न खल्वत्र भट्टोजीदीक्षिताः नागेशभट्टश्च विभिन्नमतीयाः ; तथैव इदानीं प्रसिद्धतया विद्यमानेषु द्वैताद्वैतविशिष्टाद्वैतमतेष्वपि महतामाचार्याणामभिप्रायभेदः अस्त्येवेत्येतत् सहजं खलु! तावन्मात्रेण रागद्वेषादीनामवकाशो नास्त्येव। तदेवोक्तं महाभारते -

> 'शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः।
> स एव सर्वशास्त्रज्ञः यस्य शान्तं मनस्सदा।'

इति। एवं एकस्मिन्नेव शास्त्रे मतभेद इव परस्परं वेदान्तत्रये प्रधानार्थस्यैक्येऽपि, विषयान्तरे मतभेदः युज्यत एवेति ज्ञात्वा सर्वेषामाचार्याणां ग्रन्थपरिचये सति बुद्धि वैशद्यं, परोक्त दोषपरिहारार्थं स्वमतपरिशीलनेन आनन्दाधिक्यञ्च सम्भवति सर्वत्र कामक्रोधादिपरित्यागेन सुखेनैव कालक्षेपो भवतीति परमो लाभः।

अत्र विचारे परीक्षकैः तात्पर्ये परं, दृष्टिर्विधेया; न तु शब्दार्थे केवले। यतश्च प्रोक्तं कुमारिलेन वार्तिकारम्भे-

> 'न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।
> दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥'

इति तस्य वचनं स्मारयित्वा विरमामि।

# वाक्यपदीयश्लोकद्वयविचारः

T.S. श्रीनिवासशास्त्री

सर्वे तीर्थकरा वाक्यपदीयब्रह्मकाण्डस्थं
"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥" (वा.प. 1.115)

इति पद्यं स्वकीयग्रन्थेषूल्लिखन्ति। तेषां मध्ये केचन खण्डनाय, केचन मण्डनाय, केचन स्वसिद्धान्तपोषणाय तं श्लोकं निर्दिशन्तीत्येव विशेषः। "कविः करोति काव्यानि अर्थं जानाति पण्डितः" इत्यभियुक्तोक्तरीत्या सर्वे शास्त्रकाराः स्वस्वमतिविभवानुसारेणोदाहृतपद्यस्यार्थं विवृण्वन्ति। अस्मिन् लेखे भर्तृहरेः सिद्धान्तं स्थापयितुमथवेतरशास्त्रकाराभिहितदूषणानि निरसितुं न ममोद्यमः, अपि त्वस्य पद्यस्य भर्तृहर्यभिप्रेतोऽर्थः कीदृशः, इतरैर्भर्तृहर्यभिप्रेतत्वेन वर्ण्यमानोऽर्थः कीदृश इति प्रतिपादयितुमेव॥

भर्तृहरिः

"शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत॥" (वा.प. 112)

इति श्लोकस्य स्वोपज्ञवृत्तौ

"आम्नाये संहृतभोग्यभोक्तृशक्तेर्वागात्मनो
बहुधा कारणत्वमाम्नातम्" (पृ.184.2)

इत्युक्त्वा शब्दस्य सर्वप्रपञ्चोपादानत्वं द्रढयितुमृङ्मन्त्रमुदाहरति

"वागेव विश्वा भुवनानिजज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम्।
अथेद्वाग्बुभुजे वागुवाच पुरुत्रा वाचो न परं यच्च नाह॥ (पृ 185.5-6)

इति। अस्य मन्त्रस्यायमर्थः:- वागेव वाक्तत्त्वमेव विश्वा भुवनानि सर्वाणि भुवनानि जज्ञे जाता। वाच इत् वाच एव, इदिति अवधारणेऽव्ययम्। यत् अमृतं यदा कल्पान्तं स्थायि वियदादिकं यच्च मर्त्यं मध्ये एव विनाशि कार्यजातं तत् सर्वं जज्ञे जातम्। अथ वाक् इत् वागेव बुभुजे भोक्त्री आन्तरज्ञातृरूपेणावस्थिता। वाग् एव पुरुत्रा बहुभिः प्रकारैः, बह्वर्थात् पुरुशब्दात् त्राप्रत्ययः प्रकारे। उवाच वक्त्री यच्चन चनेति अप्यर्थे निपातः यत्किंचिदपि आह वक्ति जनः तत् सर्वं वाचो न परं न भिन्नं, किं तु वागात्मकमेव, वागुपादानकत्वात्, इति।

सर्वोऽपि लोकोऽर्थं बुध्वा प्रवर्तते। तादृशस्यार्थसंवेदनस्य बीजं शब्दभावनैव। शब्दभावनायामुद्बुद्धाया-मेवानुभवरूपं स्मृतिरूपं वार्थसंवेदनमुपजायते। अतो शब्दः प्रकृतिरर्थज्ञानं च विकृतिः। भावनात्मना विद्यमानात् सूक्ष्मशब्दात् परिणामिकारणाद्बुद्धावुत्पन्नं यदर्थसंवेदनं तस्माद्गौरित्यादिरूपः स्थूलो वैखरीशब्द उपजायत इत्यर्थज्ञानं प्रकृतिर्वैखरीशब्दो विकृतिः। एतदभिप्रेत्यैव भर्तृहरिर्वृत्तौ

"संज्ञानं शब्दप्रकृतिविकारभावेनाविर्भावतिरोभावावजस्रं प्रत्यनुभवति" (पृ190.1-2)

इति वदति ॥

'न सोऽस्ति' इति पद्यस्य भर्तृहर्यभिप्रेतोऽर्थो वर्ण्यते । लोके स प्रत्ययो नास्ति यः शब्दतादात्म्यशून्य इति यत्र यत्र शब्दतादात्म्यं नास्ति तत्र प्रत्ययत्वं नास्तीति व्यतिरेकव्याप्तिः "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति पूर्वार्धेन प्रदर्श्यते । "अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" इत्युत्तरार्धेनान्वयव्याप्तिः प्रदर्श्यते । तथा हि - अत्र ज्ञानमुद्देश्यम् । शब्देनानुविद्धत्वं विधेयम् । 'भासते' इत्यस्यान्यग्रन्थेषु 'गृह्यते' 'गम्यते' इति पाठान्तरमस्ति । 'भासते' 'गृह्यते' 'गम्यते' इति सर्वस्य पदस्यानुभूयमानमित्यर्थः । इदमुद्देश्यस्य ज्ञानस्य परिचायकम्, नोद्देश्यतावच्छेककोटौ प्रविशति । शब्देनेत्यत्र तृतीयायाः प्रतियोगित्वरूपवैशिष्ट्यमर्थः । तत्र प्रकृत्यर्थस्य शब्दस्याधेयता संबन्धेनान्वयः । शब्दनिष्ठप्रतियोगित्वस्य अनुविद्धत्वपदार्थे तादात्म्ये निरूपकतासंबन्धेनान्वयः । तथा च "ज्ञानं शब्देनानुविद्धम्" इत्यस्य "शब्दप्रतियोगिकतादात्म्यवज्ज्ञानम्' इत्यर्थः । "सर्वशब्दस्योद्देश्यतावच्छेदकनिरूपिते विधेयगते व्यापकत्वे शक्तिः । प्रकृते सर्वशब्दो ज्ञानत्वरूपोद्देश्यातावच्छेदकनिरूपितं शब्दानुविद्धत्वरूपविधेयगतं व्यापकत्वं बोधयति । यथा "सर्वे घटा रूपवन्तः" इति वाक्यात् "घटत्वव्यापकरूपविशिष्टा घटाः" इति बोधस्तथा "सर्वं ज्ञानं शब्देनानुविद्धम्" इति वाक्यान्निर्विकल्पकसविकल्पकसाधारण ज्ञानत्वावच्छिन्नव्यापकशब्दतादात्म्यवज्ज्ञानम् इति बोधः । "इवशब्दः एवार्थे वर्तते । अत्र एवार्थोऽयोगव्यवच्छेदः । "शङ्खः पाण्डर एव" इत्यत्र "पाण्डरत्वासंबन्धाभाववान् शङ्खः" इति बोधवत् "सर्वं ज्ञानं शब्देनानुविद्धमिव" इत्यत्र "ज्ञानं ज्ञानत्वव्यापक शब्दतादात्म्यासंबन्धाभाववत्" इति बोधः फलति । न च इवशब्दस्य एवार्थः कुत्रापि न प्रसिद्ध इति शङ्कनीयम् । ऋङ्मन्त्रे इवशब्दः एवार्थे वर्तते । तथा हि

"श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः" (ऋ.वे. 1.184.3)

इति मन्त्रस्य सायणभाष्यमत्र लिख्यते -

"सविता सूर्यो दुहितरं सूर्याख्यां प्रदातुमनाः देवानाहूय सामर्थ्यसमीक्षणाय आजिं परिकल्प्य यः इमं जेष्यति स एतां कन्यकामृक्सहस्रक्लृप्तं स्तोत्रं च लभते इत्यकल्पयत् । तमग्निः प्रथममजयत् तमनु अश्विनावपि जित्वा अग्निं प्रधृष्य ऋक्सहस्रं कन्यकां च अलभेताम् । तत इन्द्रः उषाश्च अजयताम् । तौ च तैरग्न्यादिभिः प्रार्थितौ स्वशस्त्रस्य कंचित्कंचिद्भागं तेभ्यः परिकल्प्य सूर्यां स्वरथेऽधारयतामिति । अयमितिहासो ब्राह्मणे 'प्रजापतिर्वै सोमाय राज्ञे' (ऐ.ब्रा.4.7) इत्यत्राम्नातोऽस्माभिः प्रथमाष्टके 'आ वां पतित्वं सख्याय (ऋ.सं. 1.119.5) इत्यत्र प्रपञ्चितः । अत्राह। हे पूषन् पोषक सूर्य । एतच्चन्द्रस्याप्युपलक्षणं सूर्याचन्द्रमसोरेवाश्विवात् । 'सूर्याचन्द्रमसावित्येके' (निरु.12.1) इति यास्केनोक्तत्वात् । अतः पूषन्नित्युक्ते हे पोषकावश्विनावित्युक्तं भवति । हे पोषकौ हे नासत्या असत्यरहितौ देवा देवौ युवां श्रिये श्रेयसे शस्त्रस्य कन्यायाश्च लाभायेत्यर्थः । इषुकृतेव । इवशब्दः एवार्थे । आजिधावनाय इषुवच्छीघ्रमृजुगामिनौ कृतावेव सन्तौ सूर्यायाः एतन्नामिकायाः सवितुः पुत्र्याः । कर्मणि षष्ठी । सूर्यां वहतुं रथे धारयितुम् आजिमुदजयतामित्यर्थः ।"

सर्ववेदविद्भर्तृहरिरस्मिन् श्लोके इवशब्दं एवार्थे प्रयुङ्क्ते । तथा च यत्र यत्र ज्ञानत्वं तत्र शब्दतादात्म्यमित्यन्वयव्याप्तिः । अत्र ज्ञानत्वमस्तु शब्दतादात्म्यं मास्त्वित्यप्रयोजकशङ्कायां बाधकतर्कमाह"

''वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥'' (वा.प.1.116)

इति । अस्यायमर्थः- अवबोधस्य ज्ञानस्य शाश्वती नित्या वाग्रूपता शब्दतादात्म्यं उत्क्रामेत् चेत् यद्यपगच्छेत् तदा न प्रकाशः प्रकाशेत ज्ञानस्य ज्ञानत्वमेव न स्यात् हि यतः सा वाग्रूपता प्रत्यवमर्शिनी इदमित्थमित्यर्थ-प्रकाशत्वसंपादिका इति । अस्य श्लोकस्य वृत्तौ भर्तृहरिः

''यथा प्रकाशत्वमग्नेः स्वरूपं चैतन्यं वान्तर्यामिणस्तथा
ज्ञानमपि सर्वं वाग्रूपमात्रानुगतम्'' (पृ.190.5-6)

इति वदन् यथाग्नेः प्रकाशकत्वं स्वरूपं तद्विनाग्नेरग्नित्वमेव नास्ति, आत्मनः चैतन्यं स्वरूपं तद्विनात्मन आत्मत्वमेव नास्ति, तथा ज्ञानस्य वाग्रूपत्वं स्वरूपं तद्विना ज्ञानस्य ज्ञानत्वमेव नास्तीति स्पष्टं प्रतिपादयति ।

सोमानन्दः शिवदृष्टौ शब्दानुवेधपदस्य शब्दतादात्म्यार्थकत्वमिवशब्दस्यैवार्थकत्वं चाभिप्रेत्य ''न सोऽस्ति प्रत्ययः इति पद्यमुल्लिखति । शिवदृष्टिव्याख्यायामुत्पलदेवः

''न सः घटपटादिप्रत्ययः लोकव्यवहारेऽस्ति यो
वाचकशब्दानुगमवर्जितः । वाग्रूपतां विना न ब्रह्मतत्त्वप्रकाशोऽपि प्रकाशेत'' (शि.दृ. 2.10)

इति सोमानन्दाभिप्रायं द्रढयति ।

जयन्तभट्टमारभ्य सर्वे शास्त्रकारा भर्तृहरिणा स्वोपज्ञवृत्तौ ''न सोऽस्ति'' इति श्लोकस्य यादृशोऽर्थ उपवर्णितस्तद्विरुद्धार्थमुपवर्णयन्ति । तथा हि- जयन्तभट्टो न्यायमञ्जर्यां

''ननु संकेतावगमसमये गौरित्यादिशब्दः श्रुत आसीत्, स
इदानीमतिक्रान्त इति कथं तत्कृत एव प्रत्ययः स्यात् ।
उच्यते तदानीमश्रूयमाणस्य शब्दस्य स्मृत्यारूढस्य तत्प्रत्ययहेतुत्वात् ।
स्मृतिविषयीकृतशब्दजनित एष प्रत्यय इत्यभ्युपेतव्यः ।

यथा परोक्षेऽपि शब्द उच्चरित आत्मानं प्रकाशयत्यर्थं च तथा प्रत्यक्षे विषये स एव स्मर्यमाण आत्मानमर्थं च प्रकाशयतीति वाचकावच्छिन्नवाच्यप्रतिभासश्चैवंविधासु बुद्धिषु नूनमेषितव्यः ।

शब्दविशिष्टार्थप्रतिभास उक्तो भवति । न च शब्दानुसंधानरहितः कश्चित् प्रत्ययो दृश्यते, अनुल्लिखितशब्दकेष्वपि प्रत्ययेष्वन्ततः सामान्यशब्द समुन्मेषसंभवात् तदुल्लेखव्यतिरेकेण प्रकाशात्मिकायाः प्रतीतेरनुत्पादात् । तथाह भर्तृहरिः

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥'' (न्या. म. 75.16-76.3)

इति भर्तृहरिमतमनूद्य तन्मतखण्डनावसरे

"न चात्र शब्दावच्छिन्नार्थः प्रकाशते" (न्या म. 76.15) इति कथयति। अत्र (1) सर्वोऽपि प्रत्यय उपायेन शब्देन जनितः, (2) वाचकशब्दस्य वाच्यार्थस्य च वास्तवो भेदः (3) प्रत्यये वाचकावच्छिन्नवाच्यार्थो विषयः, (4) शब्दानुसंधानं विना न कोऽपि प्रत्यय उदेति, इति यद्भर्तृहरिमतत्वेन जयन्तभट्टेन प्रतिपादितं तत् सर्वथा भर्तृहर्यनभिप्रेतम्।

जयन्तभट्टादर्वाचीनः आचार्यवाचस्पतिमिश्रस्तात्पर्यटीकायां प्रत्यक्षसूत्र भाष्यव्याख्यानावसरे

"सर्वेऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयान्विताः। नास्ति सोऽर्थो यः कदाचित् क्वचित् कथंचिन्नामधेयेन वियुज्यते। तदनेन नामधेयतादात्म्यमर्थानां प्रतिजानीते। अत्र हेतुमाह तैरर्थसंप्रत्यय इति। अर्था हि प्रतीयमाना नामधेयैरुपेतास्तत्सामानाधिकरण्येनावगम्यन्ते गौरित्यर्थोऽश्व इत्यर्थ इति। न चोपायतया सामानाधिकरण्यं घटते। न हि चक्षुरादिसामानाधिकरण्यं रूपाद्यनुभवति। नापि ज्ञायमान उपाय उपेयसामानाधिकरण्यमनुभवति। न हि भवति धूमोऽयं वह्निरिति किं तु धूमोऽयं धूमवत्त्वाद्वह्निमानिति। अपि चाशब्दोपायेऽनुमेयादौ न शब्द-संभेदेनाधिगमो भवेत्, अस्ति तु। तस्मात्तैर्नामधेयैः सह समानाधिकरणस्यार्थस्य प्रत्ययो यत इति तस्मान्नामधेयात्मानोऽर्थाः। किं च गवादिषु षड्जादिषु च शब्दापकर्षेऽर्थप्रत्यया पकर्षात् तदुत्कर्षे त्वर्थप्रत्ययोत्कर्षात् प्रत्ययस्य च प्रत्येतव्योत्कर्षाधीनोत्कर्षत्वात् नामधेयोत्कर्षेणार्थस्योत्कर्षोऽर्थस्य तादात्म्यं गमयति। तथा चार्थानां नामधेयात्मकत्वात्तद्गोचरमालोचनमपि नामधेयगोचरमित्यर्थवत् नामधेयेन व्यपदिश्यमानं शाब्दं प्रसज्यत इति। न शब्द प्रमाणकतया शाब्दम्, अपि तु शब्दे जातं शाब्दम्। शब्दश्चात्र विषयत्वेन जनकोऽर्थतादात्म्यात्। तथा च नाविकल्पकं शब्दरहितमस्तीति तात्पर्यार्थः। तथा चाहुः

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते॥'

बालमूकादीनामपि विज्ञानं शब्दानुव्याधवदेवानादिशब्दभावनावशात्। यदवोचत्

'आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्। (ता.टी.पृ. 125.14-127.2)

इति"

इति भर्तृहरिमतं प्रतिपादयति। (1) शब्दो ज्ञानस्य विषयत्वेनैव जनकः (2) शब्दार्थयोस्तादात्म्यम् (3) सर्वस्मिन् ज्ञाने वाचकशब्दतादात्म्यापन्नोऽर्थो विषयः इति वाचस्पतिमिश्रेण यद्भर्तृहरिमतमनूदितं तदपि भर्तृहर्यनभिप्रेतम्। "बालमूकादीनामपि विज्ञानं शब्दानुव्याधवदेव" इति वदन् वाचस्पतिमिश्रोऽनुविद्धमिव ज्ञानमित्यत्रेवशब्द एवार्थक इत्यभिप्रैति। उदयनाचार्यस्तु परिशुद्धौ

"अनुविद्धता संश्लेषलक्षणार्थेनैव विज्ञानस्य नास्ति,
कुतस्तरां तदात्मनापि शब्देन भविष्यतीत्यत उक्तं इवेति।
यथा ह्यर्थो ज्ञानान्तर्निविष्ट इव विषयतया परिस्फुरति तथा शब्दोऽपीत्यर्थः"

इति ग्रन्थेन 'अनुविद्धमिव ज्ञानं' इत्यत्र इवशब्दो न एवार्थक इति स्पष्टं प्रतिपादयति। उदयनाचार्यव्याख्यानमपि भर्तृहर्यभिप्रायविरुद्धम्॥

नैयायिकाः - 'वृक्षो महीरुहः' इति व्याख्यानवाक्याद्वृक्षत्वावच्छिन्ने महीरुहत्वावच्छिन्नाभेदान्वयबोधो न संभवति, उद्देश्यतावच्छेदक- विधेयतावच्छेदकयोरैक्येऽभेदान्वयबोधस्याव्युत्पन्नत्वात् । अतो वृक्षपदस्य वृक्षपदप्रतिपाद्ये लक्षणया 'वृक्षपदप्रतिपाद्यो महीरुहः' इति व्याख्यानवाक्यस्य 'घटो घटः' इति निराकाङ्क्षवाक्यतुल्यता स्यात इत्यापत्तिप्रदर्शनेन शक्यतावच्छेदकरूपेण लक्ष्यार्थभानमङ्गीकुर्वतो वैयाकरणन् दूषयन्ति ।

नैयायिकाक्षेपसमाधानावसरे नव्यवैयाकरणाः- सर्वस्मिन्नपि ज्ञाने तत्तद्वाचकशब्दानुविद्ध एवार्थो भासते । तदुक्तं हरिणा ।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥"

इति । एवं च वृक्षविशेषणतया वृक्षशब्दस्य महीरुहविशेषणतया महीरुहशब्दस्य भानेन वृक्षमहीरुहशब्दयोरुद्देश्यतावच्छेदक विधेयतावच्छेदकयोर्भेदेन न 'वृक्षो महीरुहः' इति वाक्यस्य निराकाङ्क्षता - इति वदन्ति । "न सोऽस्ति" इति श्लोकस्येतरशास्त्र- वासनावासितान्तःकरणैर्नव्यवैयाकरणैर्योऽर्थ उपवर्णितः सोऽपि

"यथा प्रकाशकत्वमग्नेः स्वरूपं चैतन्यं वान्तर्यामिणस्तथा ज्ञानमपि सर्वं वाग्रूपमात्रानुगतम्"

इति भर्तृहरिवर्णितेनार्थेन विरुध्यते ।

वृषभदेवोऽपि पद्धतौ पूर्वोक्तभर्तृहरिवाक्यव्याख्यानावसरे "
यथाग्नेरन्तर्यामिणश्च स्वरूपं प्रकाशश्चैतन्यरूपता च
तथा ज्ञानस्यापि वाग्रूपता" (वा.प.पृ.190.20-21)

इति वदति ॥

श्रीरघुनाथशर्मा स्वरचिताम्बाकर्त्रीव्याख्यायां "न सोऽस्ति" इति श्लोकार्थमेवं विवृणोति सः कश्चनोपदेष्टृबुद्धिस्थः प्रतिपत्तृबुद्धिस्थो वा प्रत्ययः लोके नास्ति यः शब्दानुगमादृते शब्दानुवेधशून्यः । अत्रार्थेऽनुभवमेव प्रमाणत्वेनोपन्यस्यति उत्तरार्धेन अनुविद्धमिव इति । यतः सर्वं ज्ञानं उपदेष्टुः प्रतिपत्तुर्वा शब्देन अनुविद्धमिव भासते तादात्म्यसंबन्धेन तन्मूलकेन वाच्यतासंबन्धेन वार्थे विशेषणीभूतेन शब्देनानुविद्धमिव सर्वं ज्ञानं स्वग्राहकेण ज्ञानेनानुव्यवसायेन साक्षिणा वा निमित्तेन भासते इति । अत्र इवशब्दप्रयोगः वस्तुतः शब्दार्थयोस्तादात्म्यस्याभावेन तन्मूलकवाच्यतासंबन्धस्य चाप्यभावेन - इति । श्रीरघुनाथशर्मा तादात्म्यसंबन्धेन तन्मूलकवाच्यतासंबन्धेन वा शब्दविशिष्टार्थविषयकत्वं प्रत्ययस्य प्रतिपाद्य वस्तुतः शब्दार्थयोस्तादात्म्यस्य तन्मूलकवाच्यवाचकभावसंबन्धस्य चाभावादनुविद्धमिवेति इवशब्द प्रयोग इति वदति । अत्रेदमवधेयम् - नव्यवैयाकरणाः शब्दार्थयोर्वाच्यवाचक भावाख्यमतिरिक्तं संबन्धमङ्गीकुर्वन्तस्तद्ग्राहकत्वेन शब्दार्थयोस्तादात्म्यं प्रतिपादयन्तीति । श्रीरघुनाथव्याख्यापि भर्तृहर्यभिप्रेतार्थं न प्रतिपादयति ।

"अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥" (श्लो.वा.4.112)

इति प्रत्यक्षसूत्रभट्टवार्त्तिकस्य व्याख्यानावसरे भट्टोम्वेको वदति-

"ननु सविकल्पकं विज्ञानमाक्षिप्तं, तदेव च साध्यत्वेन प्रतिज्ञातम् । तदनन्तरं निर्विकल्पकज्ञानसाधनमसंबन्धमुच्यते। ("विकल्पस्याप्यर्थरूपोपकारिणः" (श्लो.वा. 4.111)

इति श्लोकस्थात्) अपिशब्दात् तस्यापि प्रतिज्ञानात् तेन च विना सविकल्पकस्यानुत्पत्तेः सद्भावादारभ्य विप्रतिपत्तेश्च नासंबन्धत्वम्। तथा चाहुः

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥"

इति । प्रथममित्यनेनाप्यस्तित्वं निर्विकल्पकत्वं च युक्त्या साधयति । वाचकशब्दस्मरणसमनन्तरं हि सविकल्पकज्ञानमुत्पद्यते; प्रबुद्धश्च संस्कारः स्मृतिमुपजनयति; अर्थदर्शनं च संस्कारोद्बोधकमिष्यते । वाचकस्मरणाच्च पूर्वं यदर्थदर्शनं तदेव शब्दसंजल्परहितत्वान्निर्विकल्पकं शब्दसंबन्धग्रहणाभावेन बालमूकयोरिव विज्ञानम्; शुद्धवस्तुजमितीदं च शब्दसंजल्पव्युदासेनेन्द्रियजत्वसिद्ध्यार्थसामर्थ्येनोत्पन्नतां दर्शयति ।" (पृ.147.10-148.10)

इति । उम्वेकस्यायमभिप्रायः - यद्विषयिणी विप्रतिपत्तिर्वर्तते तस्य साधनं क्रियते । सविकल्पकज्ञानमाक्षिप्तम्। अतस्तत्साधनं युक्तम्। निर्विकल्पकज्ञाने विप्रतिपत्त्यभावान्निर्विकल्पकज्ञानसाधनमसङ्गतं क्रियते इत्याक्षेपस्य परिहाराय "विकल्पस्याप्यर्थरूपोपकारिण" इति पूर्वश्लोकस्थापिशब्दान्निर्विकल्पकस्यापि प्रतिज्ञानात् तन्मूलविप्रतिपत्तिसद्भावेन निर्विकल्पकसाधनं नासङ्गतम् । वाचकशब्दस्मरणपूर्वकमर्थविषयकं सविकल्पकज्ञानमुत्पद्यते । वाचकशब्दस्मरणात्पूर्वमर्थविषयकं दर्शनं निर्विकल्पकं बालमूकयोर्विज्ञानमिवोत्पद्यत इति वस्तुस्थितिः। भर्तृहरिस्तु सविकल्पकं निर्विकल्पकं च सर्वं ज्ञानं वाचकशब्दस्मरणपूर्वकमेवोत्पद्यत इत्यभिप्रैति । तन्न साधीयः - इति। एतदपि भर्तृहरिवर्णितार्थविरुद्धम् ॥

मोक्षाकरगुप्तोऽपि तर्कभाषायां - "एतेन यदुक्तं सांख्येन' (भर्तृहरिणा),

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इति तन्निरस्तम्। तथा हि घटे पुरोवर्त्तिन्युच्चार्यमाणे तत्समीपवर्त्ति- भूतलादिज्ञानमुच्चारणरहितमनुभूयत एव। न च तत्र शब्दानुगमोऽस्ति" (पृ.8.8.-13) इति वदति । एम्बार् कृष्णमाचार्यः तर्कभाषाव्याख्यायां "अयमाशयः - पुरःस्थितं पश्यतः पुरुषस्य भवतु नामायं घट इति नामानुविद्धप्रत्ययः, तेनैवं यदा घटोऽनुभूयते तदाश्रयीभूतं भूतलं नयनगोचरीभूतमनुभूयत एव, न च तन्नाम्नोच्चार्यते, तन्नोपपद्यते सर्व एव प्रत्ययो नामानुविद्ध इति "(पृ.52) इति वदति । मोक्षाकरगुप्तोऽपि सर्वं ज्ञानं वाचकशब्दोच्चारणसहितमेवोत्पद्यत इति भर्तृहरिर्वर्णयतीति मन्यते । एतदपि भर्तृहरिविरुद्धम् ॥

सर्वे शास्त्रकारा भर्तृहरिश्लोकस्यार्थं स्वस्वमत्यनुसारेणोपवर्ण्य खण्डयन्ति । यदि तैर्वाक्यपदीयश्लोकार्थवर्णनं भर्तृहरिभावावबोधविहितमभविष्यत्तदा तदस्मान्नादोष्यत् इति विचारकुशलानां विदुषां पुरतः सविनयं विनिवेदयामः॥

| | |
|---|---|
| त.भा. | तर्कभाषा मोक्षाकरगुप्तविरचिता<br>GOS. 1942 |
| ता.टी | तात्पर्यटीका वाचस्पतिमिश्रविरचिता KSS. 24, 1925 |
| न्या.म | न्यायमञ्जरी जयन्तभट्ट विरचिता<br>KSS. 106, 1971 |
| परि | परिशुद्धि उदयनाचार्यविरचिता |
| वा.प | वाक्यपदीयम् (ब्रह्मकाण्डम्) भर्तृहरिविरचितम्<br>Deccan College, Pune, 1966 |
| शि.दृ. | शिवदृष्टिः सोमानन्दपादविरचिता<br>काश्मीरग्रन्थमाला |
| श्लो.वा. | श्लोकवार्त्तिकव्याख्यातात्पर्यटीका उम्वेककृता<br>Madras University, 1971 |

# शक्तिविचार:

पण्डितराजः - एन्.टि. श्रीनिवासय्यंगार्यः

'प्रमेयसिद्धिः प्रमाणाद्धि' इत्यभियुक्तानामुक्तिमनुसृत्य प्रमेयनिरूपणे प्रवृत्ताः सर्वे प्रथमं प्रमाणनिरूपणे उद्युञ्जते।

प्रत्यक्षानुमानयोरिव शब्दस्यापि अतिरिक्तं प्रमाणत्व मङ्गीकुर्वन्ति नैयायिकाः, मीमांसकाः, वेदान्तिनः, वैयाकरणाश्च।

''प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'' (न्यायसू) इति सूत्रयन् तत्रभवान् गौतमः शब्दं नाम चतुर्थं प्रमाणं स्पष्टमाह शब्दश्चाप्तोपदेशरूपः प्रमाणम्। आप्तोपदेशः, आप्तश्चासौ उपदेशश्च इति तन्त्रेण समासद्वयाश्रयणात् वेदानामपौरुषेयत्वं वदतामपि मते वेदशब्दस्यापि आप्तोपदेशरूपत्वमक्षतमिति प्रामाण्यसिद्धिः। आप्तोपदेशरूपस्यैव शब्दस्य प्रामाण्यं न शब्दमानस्येति ''य स्त्वप्रमत्तगीतः तत्प्रमाणम्'' इति महाभाष्ये पतञ्जलिराह। आप्तो नाम अनुभवेन वस्तुतत्त्वस्य कात्स्नर्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः सः इति चरके पतञ्जलिः।

'शब्दं श्रृणोमीति' सकलजनानुभवविषयः शब्दः दुरपह्नवः। उक्तानुभवस्य अन्यविषयकत्वबाधात् शब्दविषयकत्वे एव पर्यवसाने शब्दसिद्धिः। तस्य च शब्दस्य शाब्दप्रमिति जनकत्वमपि अवश्य मङ्गीकार्यम् आगोपालमापण्डितं च'' चैत्रवाक्यात् अमुमर्थं प्रत्येमी''ति प्रतीतेः। अस्याश्च प्रतीतेः प्रत्यक्षविषयकत्वासम्भवेन प्रत्यक्षातिरिक्तप्रमितिस्वीकारः, शब्दस्य च तत्करणत्वस्वीकारश्च आवश्यकः। सा प्रमितिः अनुमानविधया वा शब्दविधया वेति विप्रतिपद्यन्ते कतिचन। सौगता वैशेषिकाश्च अनुमानविधयेति वदन्ति। नैयायिकादयस्तु शाब्दविधयेति सङ्गिरन्ते।

तत्र कृत्स्नस्यापि शब्दस्य (वाक्यस्य) अनुमानरूपतामाहुः सौगताः वैशेषिकाश्च। बौद्धमते वैशेषिकमते च शब्दस्यानुमानविधयैव प्रामाण्यम्। प्राभाकराः पुनः शब्दप्रमाणं स्वीकुर्वाणा अपि लौकिकशब्दाना मनुमानविधयैव प्रामाण्यमाशेरते। अनुमानविधयेति वदतां पक्षो न रोचते नैयायिकादिभ्यो दोषगर्भत्वात्। तथाहि -

शब्दस्यानुमानत्वे कथमनुमानप्रयोगः इति विचारः कर्तव्यः शाब्दबोधविषयत्वेनाभिमतस्यार्थस्य शब्दधर्मेण साकं व्याप्यव्यापक भावे सत्येव शब्दादर्थानुमानं स्यात्। शाब्दबोधविषयस्तु गामानयेत्यादौ 'गवनयनव्यापारस्त्वया कार्यः' इत्यर्थः। तद्रूपसाध्यव्याप्तिमत् गामानयेति शब्दजाले किमस्ति? तत्तद्वाक्यप्रमेयस्य विशिष्टार्थस्य पूर्वमगृहीततया अपूर्वत्वात् साध्यज्ञानस्यैव पूर्वमभावेन व्याप्तिः कथं ग्राह्या भवेत्? एवम् एकैकवाक्यप्रतिपाद्यस्यार्थस्य अपूर्णत्वात् न कुत्रापि व्याप्तिग्रहसम्भवः शब्दस्यातिरिक्तप्रमाणत्वे तु नैष दोषः। अनुमानस्य बोधकत्वं च व्याप्तिग्रहमन्तरा न भवतीति हेतुसाध्ययोः व्याप्तिरूपः सम्बन्धः आवश्यकः। शब्दे तु व्याप्तिग्रहं विना बोधकत्वरूपः सम्बन्धः वर्तते। व्युत्पन्नानां गवनयनादिवाक्यश्रवणकाले अन्तरेण

व्याप्तिग्रहावलम्बं बोधकत्वस्यैव दर्शनात् । तथा च शब्दे केवल बोधकत्वसम्बन्धः अनुमाने तु व्याप्तिरिति सम्बन्धभेदात् शब्दानुमानयोरस्ति भिदा । तस्मात् बौद्धानां वैशेषिकाणां च पक्षः न समीचीनः ।

अयं शब्दसमुदायः ईदृशार्थ ज्ञानपूर्वकं वक्त्रा प्रयुक्तः ईदृश पदसमुदायत्वात् इत्यनुमानेनापि न निस्तारः । अस्य हेतोः अस्य साध्यस्य च अन्य त्र कु त्राप्यभावात् व्याप्तेरेवाभावः । किञ्च घटमानयेत्यादौ व्यवहारादिना प्रथममर्थग्रहो जातः । तत्र बहुकृत्वः तद्वाक्यश्राविणामपि तदनन्तरं जायमानं ज्ञानम् 'इदं वाक्यमेतदर्थसम्बद्धं घट मानयेति वाक्यत्वात् पूर्वश्रुततद्वाक्यत्ववत्' इत्यर्थानुमानजं न भवति । तत्तद्वाक्य विशेषत्वस्य व्याप्तिविशिष्टत्वरूप लिंगत्वेन ज्ञानाभावेपि अर्थग्रहणात् । न चेदं स्मरणरूपम् । पूर्णगृहीतवाक्य तुल्यानु पूर्वीक वाक्यान्तरात् पूर्वगृहीतघटतुल्य घटान्तरानयनकार्य ताया एव प्रतीयमानत्वात् । अतो न कुत्रापि शब्दादर्थानुमितिः ।

लौकिकवाक्यस्यानुमानरूपतां वदन्तः प्राभाकराः ''विप्रतिपन्नानि पदानि, स्मारितार्थ ज्ञान संसर्गपूर्वकाणि, पदत्वादि''त्यनु मान प्रवृत्तिं वदेयुः, तथापि न विशेषसिद्धिः । संसर्गस्य सामान्यतो ज्ञानेपि प्रकृतगवानयनादिरूप विशेष संसर्गस्य अनुमितत्वं न भवति । शब्द जन्यज्ञाने च विशेष एव विषय इति कथमेतस्यानुमितत्वम्? यदि वा ''विप्रतिपन्नानि पदानि संसर्गविशेष ज्ञानपूर्वकाणि, संसर्गविशेषवन्ति'' इति वा वदेयुः तदानीमपि संसर्गविशेषो न प्रसिद्ध इति कथं व्याप्तिग्रहः? अनेनैव वाक्येन प्रसिद्धश्चेत् अन्योन्याश्रयः । अव्युत्पन्नेषु पदेषु च व्यभिचारः । न ह्यव्युत्पन्नानि पाठ मालावगतानि पदानि स्मारितार्थ संसर्गज्ञान पूर्वकाणि भवन्ति । अत्र व्यभिचार वारणार्थमुक्तानुमाने 'पदत्वात्' इति हेतुं परित्यज्य व्युत्पन्नपदत्वात् इति हेतुरुच्यते यदि, तदा केयं व्युत्पत्तिरिति वक्तव्यम् । अभिधानशक्ति ग्रहणमितिचेत्? तर्हि पदसङ्घातेनैव वाक्यार्थसिद्धि र्भवतीति किमनया अनुमानकुसृष्ट्या? वाक्यात् वाक्यार्थ प्रतिपत्तिरितिहि लौकिका मन्यन्ते । पूर्व मनुमानं पश्चाद्वाक्यार्थप्रतिपत्तिरनुवाद रूपतयेति चेत्? न । अदर्शनात् । नहि प्रयुक्तेवाक्ये द्विवारमर्थ प्रतिपत्तिर्दृश्यते । अतो वेद इव लोकेऽपि वाक्यादेव साक्षादर्थप्रति पत्तिरिति प्राभाकरमतं नादरणीयम् ।

एवमेव वैशेषिकस्यापि मते उपलम्भ विरोधोप्यस्ति । सर्वेहि व्यवहर्तारः शब्दादेव साक्षात् अर्थ प्रतीतिमुपलभन्ते । शब्दात् साक्षादर्थप्रतीतिरिति कल्पने लाघवं च । वक्तृज्ञानानुमानपृष्ठलग्नवाक्यार्थ प्रतीतिरिति कल्पने कल्पनागौरवम् । इति वैशेषिक मत मप्युपेक्षामर्हति ।

पदानामर्थनियमाभावात्, वाक्यानामपि तैस्तैः अन्यथान्यथा अर्थवर्णनाच्च सर्वं वाक्यं (शब्दः) अप्रमाणमेवेति केचित् । तदपि नयुक्तिसहम् । ''विप्रतिपन्नवाक्यं, प्रमाणं, कारण दोष-बाधक प्रत्ययाभावात् प्रत्यक्षनुमानवत्'' इत्यनुमानेन प्रमाणत्वसिद्धेः । ''विमतं वाक्यमप्रमाणं, वाक्यत्वात्, अन्यथागृहीतार्थवाक्यवत्'' इति प्रत्यनुमानेन अप्रमाणत्वं सिध्यतीति चेत्? मैवम् । स्वोक्ति बाधात् । त्वदीयस्यैतद्वाक्यस्यापि बाधापत्तेरिति यावत् । लोकव्यवहारादिकं सर्वं भज्येत । तस्मात् शब्दः अतिरिक्तं प्रमाणमेव भवितु मर्हति इति वेदान्तिनः । (रामानुजीयाः)

नैयायिका अपि एनमेवभिप्रायं भङ्ग्यन्तरेण प्राहुः - पृथगेव शब्दो मानम् । नत्वनुमानम् । शब्दस्यार्थाव्याप्यत्वात् । यत्र शब्दः न हितत्र घटानयनादिरूपः अर्थः । शब्दस्याकाश वृत्तित्वात् । घटादेरर्थस्याकाशावृत्तित्वात् । साध्यहेत्वोर्वैयधिकरण्यात् अव्यभिचरित सामानाधिकरण्यरूपा व्याप्तिः शब्दे न

सम्भवति। किञ्च पदनिष्ठ व्याप्तिज्ञानशून्यानामपि दृश्यते शब्दात् अन्वयानुभवः। न ह्ययं व्याप्तिज्ञानशून्यकालीनः शब्दप्रयोज्योऽनुभवः अनुमितिरूपः। अनुमितेः व्याप्तिधीजन्यत्वात्। नन्वियं व्याप्तिज्ञानाजन्या विलक्षणैवानुमितिरस्तु। तत्रानु मितित्वास्वीकारे, समाने विषये शाब्दसामग्र्याः बलवत्वात् अनुमितिं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवम्। अनुमितित्व स्वीकारे च तत्र तदप्रतिबन्धकत्वेन प्रतिबन्धकत्वा कल्पना प्रयुक्तं लाघवं वर्तते इति चेत्? मैवम्। अनुभवविरोधात्। प्रतियन्ति च लौकिकाः "असाक्षात्कृतम् अननुमितं श्रुतमिद" मिति।

ननु शब्दस्यानुमानानन्तर्गतत्वेन शब्दः स्वातन्त्र्येण मानं यदि तदा घटमानयेत्यतः शब्दात् पामराणामपि अर्थप्रत्ययः स्यात् अनुमानान्तर्गतत्व वादिनस्तु, नायं दोषः। तत्र व्याप्तिज्ञानाभावादर्थ प्रत्ययो नेति वक्तुं शक्यत्वादिति चेत्? नैवम्। अर्थप्रत्ययं प्रति शक्तिग्रहस्यापि सहकारित्वाङ्गीकारेण घटादिपदे अगृहीतशक्तिकानां पामराणां शाब्दबोधापत्तेरभावात्। इतर कारण चक्रसमवहितस्यैव कारणस्य फलोपधायकत्वेन केवल शब्दसत्वे शक्तिज्ञान रूप सहकारि विरहात् नतत्र अर्थप्रत्ययरूपं फलम्। तदुक्तं न्यायसूत्रकृता भगवता गौतमेन "सामयिकत्वात् शब्दार्थ संप्रत्ययस्येति" शब्दाधीनस्यार्थ संप्रत्ययस्य शक्ति ग्रहाधीनत्वात् इतितदर्थः। तस्मात् शब्दोऽतिरिक्तं प्रमाणं, शाब्द प्रमिति श्चानुमितिभिन्नेति च सिद्धम्"

शाब्दबोधे शब्दस्य सहकारिभूता शक्तिः का नाम? इति विषयः सांप्रतं विचारणीयो वर्तते। शाब्दबोधे शक्तेरावश्यकतां समर्थयतामपि दार्शनिकानां शक्तिस्वरूपविषये नास्ति ऐकमत्यम्। शक्तेः स्वरूपमन्यथान्यथा वर्णयन्ति। स्वं स्वमभिप्रायमेव युक्ततरं मन्यन्ते च।

नैयायिकाः- अर्थ स्मृत्यनुकूलः पदपदार्थ सम्बन्धः शक्तिः। साच "अस्मात्पदादयमर्थो बोद्धव्यः" इतीश्वरसंकेतः। ईश्वरसंकेतोनाम ईश्वरेच्छैव। एवम् इदं पदमिमर्थं बोधयतु इतीश्वर संकेतोपि वा भवितुमर्हति। पदप्रकारकार्थ विशेष्यकः अर्थप्रकारक पदविशेष्यको वा अस्तु। एतादृशस्य संकेतस्य ईश्वरेच्छारूपत्वमेवेति कथम्? ईश्वरज्ञानरूपत्वं किं न स्यात् कृतिरूपत्वं वा किं न भवेदिति न शङ्क्यम् अस्मदाद्याधुनिक समवेतस्य डित्थादि विषय संकेतस्य इच्छोरूपत्वेन घटादिविषयकसंकेतस्यापि इच्छरूपत्वे शाब्दबुद्धित्वावच्छिन्नंप्रति एकरूपेण लाघवात् (संकेतज्ञानत्वेन) कार्यकारणभावस्य कल्पयितुं शक्यत्वात्। एषा शक्तिरेव अभिधा शब्देनापि व्यवह्रियते। अत्र इच्छामात्रस्यैवाभिधारूपत्वे पामरादि संकेतिताः गरीत्यादयः शब्दा अपि अभिधायकाः स्युः। तथा च "न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः" इति वचन निरोधः। इच्छायाः संकेतस्य अपभ्रंशानपभ्रंशसाधारणत्वात् इति अनुपपत्तिः। तदर्थम् ईश्वरेच्छैवाभिधा इति वक्तव्यम्। एतेन अभिधानाम संकेतातिरिक्तः पदार्थः अङ्गीकार्यः। साचाभिधा अपभ्रंशेषु न विद्यते। अनतिरिक्तत्ववादिनस्तु पामरादिसंकेतितेष्वपि संकेतरूपायाः शक्तेः सत्वात् "न म्लेच्छितवै" इतिवचन विरोधः इत्यपास्तम्। अनतिरिक्तत्ववादिनोऽपि ईश्वरेच्छाया एव संकेतत्वोपगमेन अनुपपत्तेर भावात्। न ह्यपभाषितेषु गगर्यादिषु ईश्वर संकेतोऽस्ति मानाभावात्। शास्त्रनिष्णातबुद्धीनां गगर्यादिशब्दात् शाब्दरूपफलाभावेन अपभ्रंशेषु न तादृशेश्वर संकेत इति विभाव्यते। 'नाप भाषितवै' इति वचनमपि संकेताभावद्योतकम्। ननु संकेतरूप शक्त्यभावे कथं तर्हि अपशब्देभ्योऽन्वय बोध इति चेत्? तादृशस्थले शक्तिभ्रमादेव बोधः। भ्रमप्रमा साधारण शक्ति ज्ञानस्य हेतोः सवात्। ननु प्रमेयत्वा दिना शक्तिज्ञानेपि शाब्द बोधानुदयात् शक्तित्वेन तज्ज्ञानं हेतुरिति वाच्यम्। शक्तित्वंच तादृशेश्वर

संकेतत्वम्। ईश्वरमविदुषां पामराणां मीमांसकादीनां च कथं तर्हि ततोऽर्थप्रत्ययः इतिचेत्? ईश्वर संकेतस्य शक्तित्वेपि नेश्वर संकेतत्वेन ग्रहः कारणमुच्यते किन्तु संकेतत्वेन। अस्ति च तेषामपि संकेतत्वेन ज्ञानम्। तथाच तेषामपि संकेतत्वप्रकारकज्ञानसत्वात् अर्थप्रयय: सुलभः। ननु चैत्र शब्दादयमर्थो बोद्धव्य' इति आस्माकीनेच्छाविषयेषु चैत्रादि शब्देषु उक्तशक्तेरभावात् का गतिरिति चेत्? तत्रापि 'एकादशे द्वादशेऽहनिपिता नाम कुर्यात्' इति सामान्यतः ईश्वरसंकेतस्य सत्वात्। तस्मादीश्वरेच्छैव संकेतः, सैव शक्तिः इति सिध्यति।

नन्वेवं विषयतासम्बन्धेन इच्छावत्वमेव वाचकत्वम्, वाच्यत्वं वा वाच्यम्। तस्य च इच्छाविषये पदे, अर्थे, सम्बन्धे च सत्वात् वाचकत्ववाच्यत्वयोर्व्यवस्था नोपपद्यते इति चेत्? न, बोधनिष्ठ जन्यतानिरूपित जनकतावत्त्वेन शक्तिविषयो वाच्यः इति व्यवस्थोपपत्तेः। सोऽयं संकेतः कथं ग्राह्य इति चेत्? प्रथमं व्यवहारात् अनन्तरमुपमानादितः। यद्यपि प्रथमं शक्तिग्रहः वाक्ये एवेति पदेषु शक्त्यसिद्धिः, तथापि आवापोद्वापाभ्यां शास्त्र कृत्कल्पिताभ्यां तत्तत्पदशक्ति ग्रहोपपत्तिः।

ननु शक्तिः पदेन सह अर्थस्य सम्बन्धः। सच ईश्वरेच्छारूप इत्युक्तम्। एवं सति ईश्वरेच्छाया एकत्वात् घट शब्दात् घटो बोद्धव्य इतीश्वरेच्छा पटेऽप्यस्तीति अतिप्रसङ्गः। एवं गङ्गापदजन्य बोधविषयत्व प्रकारकेच्छायास्तीरेपि सत्वात् शक्त्यैव तीर बोधोपपत्तेः लक्षणोच्छेदापत्तिरिति चेत्? अत्रोच्यते - घट पदवाच्यत्वव्यहारस्य पटे अभावात् गङ्गापद वाच्यत्वव्यवहारस्य तीरे अभावाच्च तत्तत्पद जन्य बोधविषयतात्वावच्छिन्नप्रकारतानिरूपित विशेष्यतासम्बन्धेनैव ईश्वरेच्छाशक्तेः हेतुत्वस्वीकारात् नातिप्रसङ्गः, न वा, लक्षणोच्छेदापत्तिः इति वदन्ति॥

ईश्वरेच्छायाः, ईश्वरज्ञनस्य, ईश्वरकृतेर्वा शक्तिरूपत्वमित्यत्र विनिगमनाविरहात् इच्छाया इव ज्ञानकृत्योरपि अविशेषात् शक्तित्वमुररीकुर्वन्ति तार्कि कैकदेशिनः।

नव्यास्तु ज्ञानेच्छाकृतीनां तिसृणां शक्तित्वाङ्गीकारे गौरवात् अन्यतमाया विनिगमनाविरहेण शक्तित्वं समर्थयितुमशक्यत्वात् अतिरिक्तैव इति भावयन्ति।

मीमांसकास्तु - ईश्वर संकेतस्य शक्तित्वे ईश्वरानङ्गीकर्तृनये शाब्दबोधानुपपत्तिः। ईश्वर संकेत रूपशक्तौ ईश्वरस्य विशेषणत्वेन विशिष्टबद्धौ विशेषणज्ञानस्य कारणत्वात् ईश्वरमनङ्गीकर्तुर्मीमांसकस्य ईश्वरज्ञानासम्भवेन ईश्वरसंकेतरूपशक्तेरपि ज्ञानं न सम्भवति। तथा च शाब्दबोधानुपपत्तिः, शाब्दबोधं प्रति शक्तिज्ञानस्य कारणत्वात्। यदि तु शाब्दबोध कारणतायाम् संकेते ईश्वरीयत्वं न निवेश्यते येन ईश्वरमजानतः शक्तिज्ञानाभावेन शाब्दबोधानुपपत्तिः प्रसज्येत, किन्तु संकेतः कारणमित्युच्यते। ईश्वरीयत्वस्य त्यागेन आधुनिक संकेतज्ञानादपि शाब्दबोधनिर्वाहः इति अपरो लाभः इत्युच्यते, तथापि संकेतस्य शब्दार्थसम्बन्धत्वे मानाभावेन वृत्तित्वं न घटते। पदार्थोपस्थापक सम्बन्धस्यैव वृत्तिरूपत्वात्। अयमस्य पिता, अयमस्य पुत्रः, इत्येवं यत्र प्रतीतिः तत्रैव जन्य जनक भावादेः सम्बन्धत्वं भवति। अत्र तु न तथा। अर्थवत् पदम् इति प्रतीतिसत्वेपि, पदवानर्थः, इति प्रतीत्यभावात् न संकेतस्य पदपदार्थसम्बन्धत्वम्। न च भूतलवान् घट इति प्रतीत्यभावेपि घटवद्भूतलम् इति प्रतीतिमात्रेण घटभूतलयोः संयोगस्य सम्बन्धत्वमिव, पदवानर्थः इति प्रतीत्यभावेपि अर्थवत् पदमिति प्रतीतिमात्रेण संकेतस्य पदपदार्थसम्बन्धत्वं भवितुमर्हति इति वाच्यमः, वैषम्यात्। अयं भावः - प्रतियोग्यंशे नित्यसा कांक्षस्य सम्बन्धत्वं न त्वतथा भूतस्य। संयोगः प्रतियोग्यंशे नित्यसाकांक्षः संयोग इत्युक्ते भवति नियमेन जिज्ञासा कस्येति। संकेतस्तु

इच्छैव नैयायिकमते । इच्छा च प्रतियोग्यंशे नित्यसाकांक्षा न भवति । अतः संकेतस्य सम्बन्धत्वसम्भवो न । सम्बन्धत्वाभावात् पदार्थोपस्थापकत्वं नेति वृत्तित्वाभावः । तस्मात् ईश्वरेच्छा शक्तिरिति तार्किकमतं न युक्तम् । किन्तु शक्तिः पदार्थान्तरम् । पद पदार्थयोः वाच्यवाचक भावनियामकः सम्बन्धः । अयमेव अभिधाशब्देन व्यपदिश्यते, शक्तिशब्देन च । एषा वैशिष्ट्याख्येन सम्बन्धान्तरेण अर्थनिष्ठा, प्रतियोगितासम्बन्धेन पदनिष्ठा च । वह्नेरौष्ण्यादिशक्तिवत् रूपादि ज्ञाने चक्षुरादेः शक्तिरिव, योग्यताख्या शब्दशक्तिः । सा स्वाभाविकी । विज्ञातैवार्थकारिणी इति अभिप्रयन्ति ।

प्राचीनवैयाकरणा अपि तार्किक संमतं शक्तिपदार्थं न परिगृह्णन्ति । पदार्थान्तरमेव शक्तिमाचक्षते । किन्तु बोधजनकतावच्छे दकरूपां मीमां सकाभिमतां नाद्रियन्ते, लाघवात्बोधजनकतां रूपां शक्तिं वदन्ति ।

इन्द्रियाणां स्वविषयेष्वनादि र्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥

चक्षुरादीनामिन्द्रियाणां स्वविषयेषु चाक्षुषप्रत्यक्षादिषु घटादिषु यथा अनादिर्योग्यता, न चेदानीन्तनी, तथा अर्थैः वाच्यैः सह शब्दाना मपि अनादिरेवार्थः बोधकता रूपा योग्यता । इन्द्रियनिष्ठा इन्द्रिय विषय घटादि निरूपिता या कारणता सा यथा अनादिः तथा सकल शब्दनिष्ठा घटादिनिरूपिता योग्यतापि अनादिः । न च घटादे रिन्द्रिया जन्यत्वात् घटादि निरूपितेन्द्रियनिष्ठा कारणतेत्यसंगतमिति वाच्यम् घटादि ज्ञानगत कार्यत्वस्य घटा दावारोपेण तथोक्तैः । घटादि ज्ञानंप्रति चक्षुरादेः कारण त्वं निर्बाधम् । सा च नित्यायोग्यता नाम सामर्थ्यं सैव शक्तिः । घटादि बोध जनन सामर्थ्यमेव घटादिपदानां शक्तिरित्यर्थः । इन्द्रियाणि कारकत्वात् अज्ञातान्येव ज्ञानं जनयन्ति । शब्दस्तु ज्ञापकत्वात् स्वज्ञनेनान्यधीहेतुः ।

शब्द कौस्तुभे घटादि बोधजननसामर्थ्यमेव शक्तिरिति दीक्षितः ।

ननु अनादिभूतं बोध कारण त्वं शक्तिरित्युच्यते यदि तदा आधुनिक पित्रादि संकेतविषये देवदत्तादि पदे अनादित्वविशिष्ट बोध कारणत्वस्याभावात् व्यभिचारः । बोध कारणत्वस्य सत्वेपि बोधगतानादित्वस्या भावेने विशेषणाभावप्रयुक्त विशिष्टा भावात् । देवदत्तादि पदेपि अनादि त्वविशिष्ट बोधकारणत्व स्वीकारे पित्रादि संकेत ज्ञानस्य तदग्राहकतया पित्रादि संकेत ज्ञाना भावेपि देवदत्तादिपदात् शाब्दबोधापत्तिः । नच बोध कारणत्वमेव शक्तिः अनादि भूतेति प्रसिद्धि प्रदर्शनमात्रार्थकम् । न हि शक्तिशरीरे प्रविष्टं तत् । अतः अनादित्व विशिष्टबोध कारण त्वस्य हेतुता नास्ति किन्तु बोध कारण त्वस्यैवेति देवदत्तादि पदे बोध कारण त्वाज्ञान सम्भवात् न. व्यभिचार इति तटनिरुपितापि शक्तिः स्यात् । तत्रापि अनादि भूतस्य बोधजन कत्वस्य सत्वात् । यदितु अव्युत्पन्नानां बोध वारणाय संकेत ग्रहोऽपि अपेक्ष्यते यथा प्रत्यक्ष स्थले चक्षुरादेरर्थ प्रत्यायकत्वे सत्यपि इन्द्रियार्थ संनिकर्षोपि अपेक्ष्यते । तथा च संकेत ग्रहसचिवस्यैव बोधकत्वम् । तथा च लक्ष्य तटादि निरूपित संकेत ज्ञाना भावात् नातिव्याप्तिरित्युच्यते तर्हि संकेत ज्ञानस्यापि हेतुत्व मुक्तं भवति । संकेत ज्ञानस्य हेतुत्वे आवश्यके सति संकेत एव शक्तिरस्तु कृतं संकेत विशिष्ट बोधक त्वस्य शक्ति कल्पनया । संकेतश्चतार्किकोक्तः अस्माच्छब्दादयमर्थो बोद्धव्यः इत्याकार केच्छारूपः । संकेतस्य शक्तित्वादेव 'अर्थबोधकं पदं शक्तमिति' व्यवहारः । सच संकेतः आधुनिक संकेत विषये देवदत्ता दौ पित्रा देः । गवादौच ईश्वरस्येति चेत् ? मैवम् । संकेतः अज्ञातः वह्निरिव स्वरूपतः सत्तामात्रेण हेतुर्न भवति ।

अगृहीत संकेत रूपशक्तिकादपि अर्थबोधप्रसङ्गत्। सामान्य रूपेण ज्ञातः सन् हेतुरित्यपि न, प्रमेयत्वा दिना तज्ज्ञानेऽपि बोध प्रसङ्गात्। ईश्वरीय संकेतत्वेन विशेषधर्मेण ज्ञातो हेतु रिति वक्तुं सर्वथा न शक्यते। संकेत ईश्वरीयत्वमविदुषां व्यावहारिकपदार्थमात्रविषयकज्ञानवतां पामराणां, मीमांसकाना मीश्वरमनङ्गीकुर्वतां च गंगादिपदेभ्यः बोधानुदय प्रसङ्गत्। माभूत् ईश्वर संकेतत्वेन हेतुः, किन्तु संकेत त्वेन संकेतो हेतुः इति न दोष इत्यपि न, गवादौ आधुनिक संकेतकर्तुर भावात् ईश्वर संकेतस्यैव सम्भवेन ईश्वरानङ्गीकर्तृमते ईश्वर ज्ञानराहित्यात् संकेत त्वेनापिरूपेण संकेत ज्ञानस्य अभावात् उक्तदोषः तदवस्थ एव। किञ्च असत्यपि संकेतज्ञाने गवादि पदं, 'गवाद्यर्थ विषयक बोधजनकम् इत्याकारकज्ञानवतामपि गवाद्यर्थ बोधोदयस्यानुभव सिद्धत्वात् व्यभिचारः। तस्मात् संकेतस्य शक्तित्वं नैव घटते। न च संकेतत्वेन संकेतस्य ज्ञानं हेतुरित्युक्तौ किल, अनुपपत्तिः न तथोच्यते, किन्तु, अर्थधीजनक तावच्छेदकत्वेन संकेत ज्ञानं हेतुरित्युच्यते संकेतित पदस्यैव अर्थधी जनकत्वेन पदनिष्ठजनकतायां संकेतस्या वच्छेदकत्वात् इति वाच्यम्। अर्थधीजनकतावच्छेदक त्वरूपधर्मादपि अर्थधीजनकत्वेनैव हेतुतायां लाघवात् तावन्मात्रमस्तु। इदं पद मर्थधीजनकमिति ज्ञानस्यैव अर्थधीजनकता त्वावच्छिन्न प्रकारताक ज्ञानत्वेन हेतुत्व मुचितं लाघ वादिति भावः। ननु तत्तदर्थविषयक बोध जनकत्वज्ञानस्यैव हेतुत्वाभ्युपगमे यत्राधुनिक देवदत्तादौ संकेतत्वेन संकतेज्ञानात् बोधः तत्र व्यभिचारः, तत्र अर्थधीजनकत्व ज्ञानस्याभावात् इति चेत्? न। संकेत मात्रा दर्थ बोधस्थलेपि अर्थधीजनकत्वज्ञानं वर्तते एव 'इदं पदमेनमर्थं बोधयतु' इतीच्छारूप संकेतस्य 'इदं पदमेतदर्थ विषयक बोध जनकतावत्' इत्यर्थकत्वेन, संकेतस्य अर्थ बोध जनक त्वप्रकारकपद विशेष्यकतया तज्ज्ञानस्यापि अर्थविषयक बोधजनकत्व प्रकारकपद विशेष्यकत्वमक्षतम्। इच्छाविशेषरूपसंकेतविषयकं यज्ज्ञानं तत्र स्वविषयी भूतायामिच्छायां यत्प्रकारकत्वं यद्विशेष्यकत्वं तादृशेच्छा ज्ञानेपि तत्प्रकारकत्वस्य तद्विशेष्यकत्वस्य भान मिति नियमात् इति भावः तथा च न व्यभिचारस्यावकाशः। शक्तित्वेनाभ्युपगतं बोधजनकत्वं च पित्रादि संकेतज्ञानादेव गृह्यते। अतः तज्ज्ञानात् पूर्वं न बोधः।

न चैवमपि लाक्षणिकोच्छेदापत्तिरूपो दोषो नोद्धृतः इति चेत्? उच्यते शाब्दिकानां मते लक्षणा नामातिरिक्ता वृत्ति नास्त्येव। गङ्गायां घोष इत्यादौ तीरेपि गङ्गापदस्य शक्तिरेव। शक्ति ग्राहकस्य अर्थ बोधनाय शब्द प्रयोगरूप प्रयोजनक वृद्धव्यवहारस्य मुख्य लक्ष्य साधारण्यात्। इयान् विशेषः गङ्गापदशक्यत्वेन प्रवाहस्यार्थस्य प्रसिद्धत्वात् मुख्यत्वम्। तीरस्या प्रसिद्धत्वात् अमुख्य त्वम्। अतएव तस्य लक्ष्यत्वम्। शक्तिर्द्विधा प्रसिद्धा अप्रसिद्धा चेति। आमन्दबुद्धिवेद्यत्वं प्रसिद्धत्वम्। सहृदयहृदयमात्रवेद्यत्वमप्रसिद्धात्वम्। किन्तु कार्य कारण भाव कल्पनायां शाब्द बोधं प्रति शक्तिजन्योपस्थितेः, लक्षणा जन्योपस्थितेश्च प्रत्येकं कारण त्वकल्पनापेक्षया शक्तिजन्योपस्थितेरेकस्या हेतुत्वकल्पनायाँ लाघवमपि।

तस्मादर्थ बोध जनकत्वमेव शक्तिरिति युक्तमिति प्राञ्चः वैयाकरणाः प्रतिपादयन्ति।

तदिदं प्राचीन वैयाकरणमतं न सहन्ते नव्याः। बोधजनकतैव योग्यता सैव शक्तिः इति मतं प्रमाणानुभवविरुद्धम्। प्रत्यक्ष स्थले घटादि ज्ञाने चक्षुरादेः शक्तिरिव घटाद्यर्थ प्रतिपादने घटादि शब्दनिष्ठा शक्तिरेव सामर्थ्यमेव शक्तिः बोधजनकतारूपा इति वक्तुं नावकाशः। चक्षुरादीन्द्रियाणां रूपादि विषयज्ञानजनने योग्यतायाः सत्वेपि इन्द्रिय विषय सम्बन्धाभावे न हि रूपादि विषय ज्ञानजनकत्वम्। दीपगतायाः प्रकाशकत्वशक्तेरपि दीपालोकवस्तु सम्बन्धे सत्येव कार्यकारित्वम् एवमेव शब्दनिष्ठाया अर्थधीजनकत्वरूपायाः शक्तेरपि शाब्द बोधरूप

फलोपधायकत्वं शब्दार्थ सम्बन्धे सत्येव। तस्मात् अवश्यापेक्षितः कश्चित् पद पदार्थयोः सम्बन्धः स एव हि वाच्यवाचक भाव इत्युच्यते। वाच्यवाचक भावः सम्बन्धः एव शक्तिरित्युचितम्। उक्तं च हरिणा-

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौशक्तिः गुणानामप्यसौगुणः इति।

अस्यार्थः यत्र उपकार्योपकारकयोः उपकारस्वभावः सम्बन्धः अस्ति।

तत्र धर्मः सामर्थ्यरूपः (शक्तिरूपः) अनुमीयते कार्यं दृष्ट्वा। असौ सम्बन्धः शक्तीनामपि कार्यजनने शक्तिः उपकारकः गुणानामपि गुणः द्रव्याश्रितत्वनियामकः। यत्रोपकारस्वभावः सम्बन्धोऽस्ति तत्र शक्त्याख्यो धर्मः अनुमीयते इत्यर्थः। असम्बद्धानां शक्तिसत्वेऽपि कार्यजनकत्वा भावात्।

एतेन पदपदार्थयोः बोध्य बोधकभावनियामिका शक्तिरिति वदतां मतं नादरणीयम्॥

नव्यास्तुनागेशादयः पद पदार्थयोः ईश्वरेच्छादिभिन्नँ सम्बन्धान्तरमेव शक्तिः। साच वाच्य वाचकभावरूपा। वाच्यवाचकभावस्य शब्दार्थो भयनिष्ठत्वात् सम्बन्धत्व मुपपद्यते। शक्तिग्राहकं च इतरेतराध्यासमूलकं तादात्म्यम्। इतरेतराध्यासो मूलँ ज्ञापकं यस्य तदित्यर्थः। लोहितपदार्थस्फटिकपदार्थयोः तादात्म्यमध्यासमूलकं न वास्तवम्। तथैव पदपदार्थयोरपि अयं घटः इत्याकारकं तादात्म्यमध्यासमूलकमेव। शब्दार्थौ परस्परतादात्म्यवन्तौ इतरेतराध्यासवत्वात् यथा गुणगुणिनौ। यत्र यत्रे तराध्यासः तत्र तत्र तादात्म्यम् य था गुणगुणिनोः। यत्र न तादात्म्यं न तत्रेतरेतराध्यासः यथाघटपटयोः गुणगुणिनोश्चेतरेतराध्यासः नीलो घट इत्यदौ प्रत्यक्षादिप्रतीतौदृष्टः। शब्दार्थयोरपि इतरेतराध्यासः। "शब्दार्थ प्रत्ययानामितरेतराध्यासात् संकटः इति पातञ्जलसूत्रे गौरिति शब्दः, गौरित्यर्थो, गौरितिज्ञानम् इत्यवनुभव प्रदर्शनेन भाष्यकारेण स्पष्टीकृतः। अध्यासो नाम इतरस्मिन् इतरधर्माव भासः। यथा स्फटिके जपा कुसुमलौहित्यावभासः। तादात्म्यं सम्बन्धः तस्य च सम्बन्धत्वं रूपवान् घटः, जातिमान् पटः इत्यादौ आश्रयताबुद्धिनियामकत्वात् प्रसिद्धम्। उभयनिरूपित तादात्म्यवान् उभय इति अर्थपदयोः व्यवहार दर्शनात् तादात्म्यसम्बन्धः सर्वैः स्वीकर्तव्यः।

दीपादिगतप्रकाशकत्वशक्तेः, दीपालोकविषययोः सम्बन्धसत्वे एव वस्तुप्रकाशकत्वं न तु तदभावे यथा, तथैव पदशक्तेरपि शब्दार्थयोः सम्बन्धे सत्येवार्थबोधकत्वम् नान्यथा। शब्दार्थयोश्च सम्बन्धः संयोगादेरसम्भवात् तादात्म्यमेव। तादात्म्यरूपः सम्बन्धः, पदनिष्ठायाः शक्तेरुपकारकः अर्थप्रतीतिजनने, इति उपकारकत्वात् तादात्म्यस्यापि शक्तिरिति व्यवहारो भाक्तः।

इतरेतराध्यास एव संकेतः। ईश्वरसमयः। तन्मूलकं तादात्म्यम्। उक्तं हि पातञ्जलेभाष्ये "संकेतस्तु पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको (स्मर्यमाणो) यो यः शब्दः सोऽर्थो योऽर्थः स शब्दः" इति।

कः शब्दः? कोऽर्थः? इति प्रश्ने घट इत्ययं शब्दः, घट इत्ययमर्थः इत्याकारोत्तरदर्शनात् तयोः शब्दार्थयोरध्याससिद्धिः। भाष्यवचने स्मृत्यात्मकः संकेतः इत्युक्तत्वात् ज्ञातस्यैव संकेतस्य शक्ति बोधकत्वमित्युक्तं भवति। अयं भावः - प्रत्यक्षतो दृश्यमाने एव घटे कोऽयमिति किं नामकोयम् इति वा प्रश्ने घटोऽयमित्युपदेशेन घटं घटपदाभिन्नत्वेनावगच्छति। तदभिन्नत्वं च तदात्मकत्वं, तदात्मकत्वग्रहे च तत्र बोधात्मकघटाद्यभिव्यक्तिशक्तिमिव।

अथ प्रयोगादिना पदज्ञाने जाते शक्तिविषयक संस्कारोद्बोधे च शाब्दबोधो जायते । स्वशक्त्या स्वसम्बद्धस्यैवाभिव्यक्तिदर्शनात् घटादिपदशक्त्या घटादिपद सम्बद्धस्यैव घटादेः शाब्दबोधरूपाभिव्यक्तिर्वाच्या। ततश्च तादात्म्य सम्बन्धसिद्धिरिति ।

यत्र घटपदं घटस्य वाचकम् इत्युपदेशः, तत्र अभेदसहचरितस्यैव भेदस्य ग्रहो भवति। न तु शुद्धभेदस्य ग्रहः। शुद्धभेदग्रहे शक्तिग्रहानुपपत्तेः । एवं च व्यवहारादेरपि शक्त्यनुमानम् इतरेतराध्यासात्मकसंकेतानुमानपूर्वकमेव इतरेतराध्यासात्मकसं केतश्च योर्थः स शब्दः यः शब्दः सोर्थ इत्याकारकः ईश्वरकृतः वाच्यवाचकभाव रूपां शक्तिं ग्राहयति । तदुक्तं पातञ्जले सूत्रे । "स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्धः । संकेतस्तु ईश्वरस्य स्थितमेवार्थम भिनयति । यथा अवस्थितः पिता पुत्रयोः सम्बन्धः संकेतेन वा द्योत्यते अयमस्य पिता अयमस्य पुत्र इति । अनेन चेश्वरसंकेतस्य शक्तिग्राहकत्वं स्पष्टमुक्तं भवति । उपदेशरूपस्य संकेतस्य इतरेतराध्यासोल्लेखित्वात् तादात्म्यग्रहपूर्वकशक्तिग्रहजनकत्वम् । अतः ईश्वरसंकेतस्यैव शक्तित्वं वदतां नैयायिकानाँ वादः न संगतः । अयमेतच्छक्यः । अत्रास्य शक्तिः इति संकेतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात् । यथा घटशब्दो घटस्य वाचकः इत्युपदेशरूपः संकतः शक्तितो भिन्नः, तथैव स्वर्गादिभुजां महर्षिदेवतानाम् ईश्वरेण साक्षादेव कृतः उपदेशरूपः संकेतः शक्तितो भिन्नएव वाच्यः । दृष्टानुसारेणैव कल्पनाया उचितत्वात् । तस्मात् इन्द्रियशक्तिवत् पदशक्तिरपि भिन्नैव । तद्ग्राहकं चेतरेतराध्याससिद्धं तादात्म्यमित्यवोचाम । तस्य च तादात्म्यस्य निरुपकत्वेन विवक्षितोऽर्थः शक्यः आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते ।

शब्दार्थयोस्तादात्म्यादेव श्लोकमशृणोत् अथार्थं श्रृणोति, अर्थं वदति इति व्यवहारः, ओमित्येकाक्षरं ब्रह्म, रामेतिद्व्यक्षरं नाम मानभङ्गः पिनाकिनः इति सामानाधिकरण्येन प्रयोगश्चोपपन्नो भवति । तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्; इति भेदाभेद समनियतम् । अभेदस्याध्यस्ततया भेदाभेदयोर्न विरोधः। भेदस्योद्भूतत्वविवक्षया अस्या र्थस्यायं वाचकः तस्य वाचकः प्रणवः इत्यादौ षष्ठी । अभेदस्योद्भूतत्व विवक्षया तु प्रथमा, यथा ओमित्येकाक्षरं ब्रह्म, रामेति द्व्यक्षरं नामेत्यादौ । वस्तुतो भेद एव । अभेदस्त्वारोपितः । शब्दार्थयोस्तादात्म्याङ्गीकारे मधुशब्दोच्चारणे मुखे माधुर्यरसास्वादापत्तिः, वह्नि शब्दोच्चारणे मुखे दाहापत्तिः इति तार्किकोक्तदूषणस्य नावकाशः, तादात्म्यस्य भेदा भेदरूपत्वात् ।

वस्तुतस्तु वैयाकरणनिकाये बौद्धएवार्थः शक्यः, बौद्ध एव च शब्दः शक्तः । बुद्धिविषयावेवार्थशब्दौ वाच्यवाचकौ न वास्तवौ । तयोरेव तादात्म्यम् इति न दोषगन्धः । तत्र बौद्धे वह्न्यादावर्थे दाहादिशक्तिमत्वाभावात् नानुपपत्तिः । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति सूत्रमपी ममेवार्थं माह । शब्दज्ञानमात्रेण बुद्धौ अनुपतन शक्तिः बाह्यार्थरहितः विशेषेण बुध्या परिकल्प्यते अर्थः इति तदर्थः । शक्योऽर्थः बुद्धिसत्तासमादिष्ट एव न तु बाह्यसत्ता समाविष्टः इति यावत् । युक्तं चैतत् । बौद्ध पदार्थानङ्गीकारे घट इत्यतएव सत्तावगमेन घटोस्तीति प्रयोगे गतार्थत्वात् अस्तीति प्रयोगानापत्तेः । सत्ताया विरोधात् घटो नास्तीत्यनापत्तेश्च । बौद्धार्थस्वीकारे तु बुद्धिसतोपि वस्तुनो बाह्यसत्ता तदभावबोधनाय अस्तिनास्तीति प्रयोगः संगच्छते ।

तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रे भाष्ये न सत्तां पदार्थो व्यभिचरति इति भाष्यप्रतीकमुपादाय कैयट आह" यावत् बुध्या पदार्थो न विषयीकृतः तावत्पदस्य प्रयोगाभावः । तस्मात् बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेध जननादिभिः सम्बध्यते वृक्षोऽस्ति, वृक्षो नास्ति वृक्षो जायते इति । अत्यन्तासतोऽपि बहिः शशविषाणादीनर्थान्

बुध्या विषयीकृत्य शशविषाणादिप्रयोगः। तस्माद्बुध्यारूढेषु उपचरिता सत्ता शब्दप्रयोगाश्रयत्वात् अव्यभिचारेत्यर्थः। सैव बुद्धिसत्ता प्रयोक्तृ प्रतिपत्तृणां बहीरूपतया अवभासते। यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात् तदा वृक्षः इत्यतः सत्तावगमात् अस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात्। नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाप्रसंगः। अङ्कुरो जायते इति च प्रयोगो न स्यात्। सतो जन्मविरोधात्। उपचार सत्तायां तु नैते दोषा अवरतन्ति बुद्धिसत्तासमाविष्टस्य बहिःसत्वासत्वजननप्रतिपादनाय अस्ति, नास्ति, जायते इति प्रयोगयोगात्' इति।

बौद्धपदार्थाङ्गीकारे 'उपदेशेजनुनासिक इत्' इति सूत्रस्थं भाष्यमपि मानम्। तत्र हि - को देवदत्तः इति प्रश्ने अङ्गदी कुण्डलीव्यूढोरस्को वृत्त बाहुरीदृशो देवदत्त इत्युक्तम्। कुण्डल्यादिपदैः देवदत्तस्यैव अभिधानात् ईदृशशब्दस्य वस्तुद्वयप्रयोगविषये एव प्रयोगदर्शनात्, एकव्यक्तौ भेदा भावात्, ईदृशइत्यस्यासंगतिः बौद्धपदार्थमनङ्गीकुर्वतः। तदङ्गीकुर्वाणस्य तु कुण्डल्यादिपदैः बौद्धदेवदत्तस्याभिधानात् ईदृशपदघटकेदंशब्देन तस्य परामर्शात् अयं देवदत्त इत्यनेन बाह्यस्योपस्थानात् नोक्तदोषः॥

बुद्धिसिद्धं तु तदसत् इति सूत्रयन् गौतमोऽपि बौद्धपदार्थमङ्गीकरोति। उत्पत्तेः प्राक् कार्यं नासत्। असतः उत्पत्तेरसम्भवात्। अन्यथा शशविषाणादिरप्युत्पद्येत। स्याच्च सिकतादावपि तैलम्। न च सत् सतश्चोत्पत्तेरसम्भवात्। पुनरप्युत्पादप्रसंगाच्च न सदसत्। सदसतोर्वैधर्म्यात् सत्वासत्वयोः सामानाधिकरण्यासम्भवात्। इत्याशङ्क्य सिद्धान्तित मनेन सूत्रेण। अस्यार्थः - उत्पत्तिधर्मकं प्रागुत्पत्तेरसत्। कस्मात्? कार्यस्योत्पादो विनाशश्च दृश्यते। तेनोत्पत्तेः प्रागसत्वं सिद्धम्। न चासतः उत्पत्तौ अनियमप्रसंगःकुतः? तत्कार्यमुत्पत्तेः प्राक् नाशोत्तरं चासदपि बुद्धिविषयतया सिद्धम् इति॥

अत एव "एष वन्ध्यासुतो याति खपुष्पधृतशेखरः।
कूर्मक्षीरचये स्नातः शशशृंगधनुर्धरः॥

इत्यादौ वन्ध्यासुतादीनां बाह्यार्थशून्यत्वेपि बुद्धिपरिकल्पितं वन्ध्या सुतशब्दवाच्यार्थमादाय अर्थवत्वात्प्रातिपदिकत्वम्। अन्यथार्थवत्वा भावेन प्रातिपदिकत्वाभावात् स्वाद्युत्पत्तिर्न स्यात्॥

एवँ शक्तिमतिरिक्तां समर्थयन् नागेशः तार्किकसम्मतं शक्तिपदार्थं दोषाविलत्वात् त्याज्यमाह। ईश्वरेच्छायाः सम्बन्धत्वासभ्भवात् शक्तित्वमपि न घटते। शाब्दबोधौपयिकत्वे सति सम्बन्धस्यैव वृत्तित्वस्वी कारात्। सम्बन्धत्वं चाधाराधेयभावनियामकस्येव दुष्टं सर्वसँमतंच। अत्र च इच्छीयविषयताश्रयबोधनिष्ठजन्यतानिरूपितजनकताख्य विषयतासम्बन्धेन। अयमर्थः इच्छावान्, अयं शब्दः इच्छावान् इतिव्यवहारादर्शनात् तस्याः सम्बन्धत्वकल्पनं मनोरथमात्रमेव स्यात् "सम्बन्धो हि प्रतियोग्यनुयोगिरूपसम्बन्धिभ्यां भिन्नः उभयाश्रितः प्रतियोग्यनुयोग्युभयनिष्ठः विशेषणविशेष्यसम्बन्धरूपविषयत्रितयाव गाहिविशिष्टबुद्धि नियामकश्च" इत्यभियुक्तानां व्यवहारात् सम्बनन्धिभि न्नत्वे सति द्विष्ठत्वे सति विशिष्टबुद्धिनियामकत्वं सम्बन्धस्य लक्षणमुक्तं भवति। यथा घटवत् भूतलम् इत्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यांभिन्नः द्विष्ठः घटनिरूपितसंयोगाश्रयो भूतलमिति विशिष्टबुद्धि नियामकश्च भवतीति संयोगस्य सम्बन्धत्वं सूपपन्नम्। इच्छासुखादीनामात्मगुणत्वात् अचेतनरूपे पदे पदार्थे वा असत्वात् सम्बन्धत्वमिच्छाया नोपपद्यते। न हि लोके इच्छावत् पदमिति इच्छावान् घट इति प्रतीतिरस्ति, इति वर्णयति।

सा च शक्तिः साधुष्विव अपभ्रंशेष्वपि विद्यते उत न ? नास्ति चेत् कथमप भ्रंशेभ्यो बोधः ? इत्यस्मिन्नपि विषये विप्रतिपत्तिरस्त्येव।

**अत्र नैयायिकमीमांसकादयः-**

नास्त्येव अपभ्रंशेषु शक्तिः। कथं तर्हि तेभ्यो बोध इति चेत्? उच्यते - द्विविधा हि बोद्धारः व्युत्पन्ना अव्युत्पन्नाश्चेति। साधु शब्दं जानतां व्युत्पन्नानां असाधुशब्देभ्यः साधुशब्दस्मरणात् बोधः। इत्थं च अपभ्रंशानां शब्दानां लिपिवत् साधुस्मरणे उपयोगः। अपभ्रंशानां साक्षात् बोधकता नास्ति शब्दजनकसाधुत्वस्याभावात् असाधुत्वज्ञानस्य प्रतिबन्धकत्वाद्वा। अव्युत्पन्नानां तु अपशब्देषु शक्तिभ्रमादेव बोधः।

ननु नेंद युक्तम्। रजतत्वं जानत एव शुक्तौ भ्रमो भवति न त्वजानत इति पामराणां साधुशब्दपरिचयाभावात् भ्रमासम्भव इति चेत् ? न। कदाचित् व्युत्पन्नो ऽसाधुशब्दं साधुशब्दं बुध्वा व्यवहृतवान्, तं दृष्ट्वा पामरास्तथैव व्यवहर्तुमारब्धाः इति पूर्वपूर्वभ्रमादुत्तरोत्तर भ्रम इत्याशयात्। अथवा घटमानयेति केनचिदुक्तम्। तदानीमेव उच्चरितं गगरीशब्दं श्रुत्वा अन्येन घटमानयन्तं च दृष्ट्वा गगरीशब्दादेवास्य बोधः इति पामरस्य भ्रमो जातः तत एवोत्तरोत्तरेषां भ्रमः भवति। हरिणापि उक्तम् -

"असाधुरनुमानेन वाचकः कैश्चिदिष्यते।
ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः॥"

इति अनुमानमत्र स्मृतिः अनु-पश्चात् मानं-मितिरिति व्युत्पत्तेः। न तु व्याप्तिज्ञानमिह विवक्षितम्। तच्छून्यानामपि शाब्दबोधदर्शनात्। गाव्याद्यपभ्रंशाः गवादिशब्दविकृतित्वेन उद्बोधकविधया झटिति प्रकृतिस्मारकाः सन्तः अर्थज्ञानहेतवो भवन्ति।

"तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः।
न शिष्टैरनुगम्यन्ते पर्याया इव साधवः॥

ययोः शब्दार्थयोः परस्परं लोके शिष्टव्यवहारे तादायमुपलभ्यते तयोरेव वाच्यवाचकभावः। यदर्थस्य यत्र शब्दे तादात्म्यं तदर्थनिरूपिता तस्मिन् शब्दे शक्तिः। अपभ्रंशस्य तु शिष्टव्यवहारविषयत्वाभावात् नार्थेन सह तादात्म्यम्। परन्तु असाधुशब्दा अपि अर्थेन सह तादात्म्यमुपगता इव अर्थप्रकाशका भवन्ति। तथा च बोद्धुः अपभ्रंशे अर्थतादात्म्यभ्रमात् शक्तिभ्रमेण बोध उपपादितः। असाधवो न वाचकाः। यतः ते अपभ्रंशाः पाणिन्यादिभिः शिष्टैः साधवः पर्याया इव स्मृत्यादिना न प्रतिपाद्यन्ते।

अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते।
अव्यक्तं तद्विदा तेन व्यक्ते भवति निर्णयः॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते॥

मात्रादिभिः अम्बा अम्बा इति कथयेति शिक्ष्यमाणो बालो यदा अशक्त्या म्बा म्बा इति अव्यक्तमस्पष्टाक्षरं भाषते, व्यक्तविदां तेनाव्यक्तेन व्यक्ते ज्ञाते सति अर्थज्ञानं भवति। एवं साधौ प्रयोक्तुमर्हेऽपि प्रयुक्तेन अपभ्रंशेन साधुस्मरणद्वारकः प्रसिद्धोऽर्थः प्रत्याय्यते।

इत्थं च असाधूनामवाचकत्वमेवेति भावः।

ननु शक्तिकल्पकेषु मुख्यस्य व्यवहारस्य अपभ्रंशेऽपि तुल्यत्वात् अपभ्रंशानां साक्षादवाचकत्वे किं मानमिति चेत् तत्तद्देशभेदेन भिन्नेषु तेषु तेषु शक्तिकल्पने गौरवात्। संस्कृतस्य सर्वत्रैकानुपूर्वीकत्वेन बोधकतया तत्रैव लाघवात् शक्तिकल्पना न च एकस्यार्थस्य यथा अनेके साधवः पर्यायाः तथा अविशेषात् अपभ्रंशा अपि सन्त्विति वाच्यम्। साधु पर्यायानां विष्णुनारायणादिशब्दानां सर्वदेशेषु एकरूपेण बोधकत्वात् विनिगमनाविरहेण सर्वत्र शक्तिकल्पना। न हि अपभ्रंशे सर्वदेशेष्वेकरूपता अस्ति। यदि अपभ्रंशेष्वपि शक्तिः कल्प्येत तदा भाषाणां पर्यायतया गणनापत्तिः। अतः न अपभ्रंशानां वाचकत्वम् इति संचक्षते।

वैयाकरणास्तु

शक्तिः साधुष्विव अपभ्रंशेष्वपि विद्यते। शक्तिग्राहकशिरोमणेः व्यवहारस्य तुल्यत्वात्। अपभ्रंशानामशक्तत्वे ततो बोध एव न स्यात्। न हि असाधु शब्देन साधुशब्दस्मरणद्वारा अर्थबोध इति रीतिः साध्वी तद्वाचकसाधु शब्दमजानतां पामराणामपि बोधात्। पामराणां साधुशब्देभ्यो बोधानुदयाच्च। यदा प्रत्यक्षश्रुतात् साधुशब्दात् न बोधः कथं तर्हि स्मृतात्तस्मात् साधोः बोधः स्यात्? शक्तिभ्रमात् असाधुभ्यो बोध इत्यपि न युक्तम्। निःसन्देहप्रत्ययस्य बाधकं विना भ्रमत्वायोगात्। यत्रोत्तरकाले बाधो भवति तत्रैव भ्रमः स्वीक्रियते। तद्वति तदभावप्रकारकज्ञानस्य भ्रमत्वात्। अत्र तथा नास्ति। न हि गगरीशब्दश्रवणानन्तरं गगरीशब्दो वाचकत्वाभाववान् इति कस्यचिदपि पामरस्योत्तरकाले बुद्धिरुदेति। अपशब्दे पामराणां बोधजनकत्वप्रकारकनिश्चयात्म-ज्ञानविषयतायाः सत्वेन बोधजनकत्वाभावरूपबाधज्ञानसम्भावना। तदभाववत्ताज्ञानं प्रति तद्वत्तानिश्चयस्य प्रतिबन्धकत्वात्। अतो भ्रम इति वक्तुं नावकाशः। असाधूनामपि शक्तत्वादेव उच्चारिते साधौ स्त्रीशूद्रबालादीनामर्थसंशये तदपभ्रंशेन अर्थनिर्णयः। किं च स्त्रीशूद्रबालादिभिरुच्चारिते संस्कृते शब्दे अशक्त्या अज्ञानेन वा यथावत् स्फुटमप्रयुक्तया विदुषोऽर्थबोधे संशये सति तत्प्रयुक्तैः साधुशब्दैः असाधूनां स्मरणद्वारा अर्थनिर्णयो भवति। अपभ्रंशानामवाचकत्वे नैतदुपपद्येत। अतः अपभ्रंशा अपि साक्षात् अर्थबोधकत्वात् वाचका एव।

उक्तं च वाक्यपदीये-

"पारम्पर्यात् अपभ्रंशाः विगुणेष्वभिधातृषु।
प्रसिद्धिमागता ये तु तेषां साधुरवाचकः॥ इति"

अस्यार्थः- वक्तृषुवागिन्द्रियदोषवशात् उच्चारणसामर्थ्य रहितेषु सत्सु तादृशवक्तृपरम्परातः येषु अर्थेषु प्रसिद्ध मागताः अपभ्रंशाः तेषामर्थानां साधु शब्दस्मरण द्वारा वाचको न भवति किन्तु अपभ्रंशा एव साक्षात् बोधका भवन्ति। किं च विनिगमनाविरहात् संस्कृते इव भाषायामपि शक्तिररत्ये व।

ननु तासां भाषाणां नानात्वात् तत्र शक्तिकल्पने गौरवम्। संस्कृतस्य एकतया लाघवमेव विनिगमकमिति चेत्? सर्वासामपि भाषाणां प्रत्येकं संस्कृतवत् सर्वत्र एकत्वेन विनिगमनाविरहतादवस्थ्यात्। ननु आनुपूर्वी वाचकतावच्छेदिका। सा च साधु शब्देषु एका। अपभ्रंशानां तु नानात्वात् नानानुपूर्वी शक्ततावच्छेदिका। एकैकस्य शब्दस्य बह्वोऽपभ्रंशाः - यथा एकस्य गोशब्दस्य गावी-गोणी-गोपोतविका इत्येवमादयः अपभ्रंशाः इति

गौरवमस्तीति चेत् ? मैवम् । बोधजनकतावच्छेदिकायाः आनुपूर्व्याः नानापर्यायनिष्ठायाः यथा साधुषु स्वीकारः तथा नानपभ्रंशनिष्ठायाः अपि नानानुपूर्व्याः शक्ततावच्छेदकत्वस्वीकारे किं बाधकम् ? आनुपूर्व्यन्यत्वे समाने साधुशब्दानुपूर्व्या एव शक्ततावच्छेदकत्वं न तु असाधु शब्दानुपूर्व्या इत्यत्र किं मानम् ? शवतिर्गतिकर्मा काम्बोजेष्वेव भाषितो भवति विकारे एव एनमार्या भाषन्ते शव इति, हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु इत्यादि भाव्यवचनं च संस्कृत शब्दानामपि देशभेदेन भेदं प्रकाशयति । अतः तत्रापि समानानुपूर्व्या अभावात् शक्ततावच्छेदकजानात्व गौरवं तुल्यम् । ननु अपशब्दानां वाचकत्वे अविशेषात् साधुपर्यायतया कोशादौ गणनापत्तिः इति चेत्? नैवम् साधूनामेव तत्र पाठाङ्गीकारात् न पुनर्वाचकानाम् । अपभ्रंशानां वाचकत्वादेव ''समानायामर्था वगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः शब्देनैवार्थोऽभि धेयो नापशब्देनेति एवं क्रियमाणमभ्युदयकारि भवति'' इति भाष्यं संगच्छते । समानायामर्थावगतौ इति - स्पष्टमुक्तत्वात् अपभ्रंशेषु वाचकत्वविषये न संशयरयास्ति अवकाशः। ''साधूनेव प्रयुजीत'' साधुभिर्भाषितव्यमिति विधिः ''न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः इति निषेधश्च साधुशब्दप्रयोगेण पुण्योदयः असाधुशब्दप्रयोगेण च पापोदयः अतः साधून् प्रयुज्यात्मानं पुण्येन योजयेत असाधून् प्रयुज्य पापेन नात्मानं योजयेत् इति बोधने चरितार्थौ । अत एव ''वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः'' इति हरिकारिका संगच्छते ।

न्यायभाष्यकारोपि'' आप्तोपदेशः शब्दः इति सूत्रे, अर्थसाक्षात्कारवान् आप्तः यः यथादृष्टार्थबुबोधयिषया यं प्रयुङ्क्ते स प्रमाण शब्दः इति ऋष्यार्यम्लेच्छानां समानमाप्तलक्षणमित्याह । तत्र ऋषिः वेदः म्लेच्छः अपशब्दवक्ता । अनेन च अपभ्रंशेऽपि शक्तिरस्तीति अवगम्यते ।

आर्यम्लेच्छाधिकरणमपि अपशब्देषु वाचकत्वं समर्थयति । तथाहि ''यवमयश्चरु'' र्भवतीत्यत्र यवशब्दे अर्थसन्देहो जातः । दीर्घशूको वा प्रियङ्गुर्वेति? संशयहेतुश्च आर्यम्लेच्छाभ्यां क्रमात् दीर्घशूके प्रियङ्गौ च व्यवहारात् । एवं संशये, यद्यपि आर्या यव शब्दं दीर्घशूके प्रयञ्जते, म्लेच्छास्तु, प्रियङ्गौ प्रयुञ्जतं, तमेव च बुध्यन्ते, तथापि आर्यप्रसिद्धर्बलवतात् वेदे दीर्घ शूकपरतैवेति सिद्धान्तितम् ।

यदि साधुष्वेव शक्तिः नासाधुषु, तदा यवशब्दात् म्लेच्छसमवेतस्य प्रियङ्गुविषयकस्य बोधस्य शक्तिभ्रमजन्यतया भ्रान्ति विषय रजतज्ञानस्येव व स्त्वसाधकतया वस्तु साधकयोः द्वयोः समवधाने एव बलाबलविचारस्य युक्तत्वेन आर्यम्लेच्छप्रसिद्धयोः कस्या बलवत्वमिति विचारासंगतिः स्पष्टैव ।

नन्वेवं सति असाधूनामपि साधुत्वापत्तिः शकस्यैव साधुत्वादिति चेत् ? मैवम् । न शत्कत्वमेव साधुत्वम्, किन्तु व्याकरणा त्वाख्येयत्वं पुण्यजनकताव च्छेदक धर्मवत्वं वा । तद्भिन्नं पापजनकतावच्छेदकधर्मवत्वं वासाधुत्वम्। यस्मिन्नर्थे यः शब्दः व्याकरणेन व्युत्पादितः तस्मिन्नेवार्थे सः शब्दः साधुः तदन्यस्मिन्नर्थे असाधुः । अत एव गोशब्दः अश्वादौ प्रयुकः असाधुरेव । अश्व इत्यर्थे प्रयुक्तः अस्वशब्दः असाधुरिति गण्यते । साधुशब्द प्रयोगेण पुण्योद्भवः इति एकः पूर्वपरयोरिति सूत्रे पतञ्जलिराह - ''एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गेलोके कामधुक् भवति ।'' इति । सम्यक्ज्ञातः - साधुत्वेनज्ञातः, शास्त्रान्वितः शास्त्रव्युत्पादनमार्गेणानु संहितः सुप्रयुत्कः - शिक्षोकरीत्या प्रयुकः शब्दः अभीप्सि तार्थसम्पत्रये भवतीति तदर्थः ।

''यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावत् व्यवहारकाले सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ।'' इति मन्त्रोपि वाग्योगवित् साधून शब्दान् प्रयुञ्जानः परत्रानन्तं जयमाप्रोति, अपरः अपशब्दान्

प्रयुञ्जानः दोषभाग्यवतीत्येवावोचत्। यद्यपशब्दैः अर्थबोधो न स्यात् तेषां प्रयोगप्रसक्तिः का नाम? अर्थबोधार्थं ननु शब्दप्रयोगः ?

किं च भक्ष्यं नाम क्षुत्प्रतिघातार्थमुपादीयते। शुक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्। तत्र नियमः क्रियते इदं भक्ष्यमिदमभक्ष्यमिति। किं च तथा खेदा स्त्रीपु प्रवृत्तिर्भवति समानश्च खेदविगमो गम्यायामगम्यायां च। तत्र नियमः क्रियते इथं गम्येति। एवमिहपि समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयः नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवति इति भाष्यपर्यालोचनया अपशब्दानामर्थबोधकत्वमस्तीति सुस्पष्टम्। श्वमांसादिभिः क्षुन्निवारणमिव, अगम्यागमनेन खेदविगम इव अपशब्देनावश्यमर्थबोधो भवेदेव। अन्यथा दृष्टान्तप्रदर्शनमसंगतं स्यात्।

ननु अपभ्रंशानां शक्तत्वे वृतया अर्थविषयकबोधजनकत्वात् 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रेण प्रातिपदिक संज्ञापत्तिः इति चेत् ?

अत्र केचित् - तेषां प्रातिपदिकत्वमिष्यते एव। असाधूनामपि प्रातिपदिकत्वस्याभिमतत्वादेव महाभाष्ये पस्पशाह्निके भाष्ये ''यर्वाणस्तर्वाणो नाम ऋष्यो बभूवुः ... ते तत्र भवन्तो यद्वानस्तद्वानः इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते। याज्ञे पुनः कर्मणि नापभाषन्ते इत्युक्तिः संगच्छते। तत्र यर्वाणः तर्वाणः इति णकारान्तात् बहुवचनजस्प्रत्यये यर्वाणः तर्वाणो नामेति उपपद्यते। जसन्तत्वाभावे तु तर्वाणो इत्यत्र रुत्वादि कथम् ? बभूवुरित्यनेन सामानाधिकरव्यं च कथम् स्यात् ? न च जसः प्रत्ययस्य व्याकरणशास्त्रानुमतस्यसंचारात् यर्वाणः तर्वाणः इत्यस्य साधुत्वम् इति वाच्यम्। प्रकृति प्रत्यययोरुभयोरपि शास्त्रविषयत्वे एव साधुत्व बोधनात्। प्रकृते प्रत्ययमात्रस्य शास्त्र विषयत्वात्।

नन्वेवं तर्हि गगरीति अपभ्रंशादपि शब्दात् सुबुत्पत्तिः स्यात् इति चेत् ? मैवम्। गगरीत्यादेः असाधुशब्दस्य घटः इति सुबन्तस्यैव अपभ्रंशरूपत्वेन पुनः ततः सुबुत्पत्तेरनवकाशात्। असाधुशब्दानां सुबन्ततिङन्तरूपपदप्रकृतिकत्वेन, सुबन्ततिङन्तार्थस्यैव अपभ्रंशशब्देनोक्तत्वात् उक्तार्थानामप्रयोगः इति न्यायादेव वारणमित्याशयः। नन्वेवमपि गगरीत्यनेन अपभ्रंशेन प्रथमान्तार्थस्योक्तत्वेपि कर्मत्वार्थं बोधयितुं द्वितीयाविभक्तिप्रत्ययः आवश्यकः इति चेत्? इष्टमेवैतत् गगरीं गगरीः इति वदन्ति।

नागेशभट्टस्तु - ''साधनुशासनेऽत्र शास्त्रे'' इति भाष्योक्तेः अर्थवत्वेन साधूनां शब्दानामेव संज्ञाविधौ उद्देश्यत्वमिति असाधूनां प्रातिपदिकसंज्ञा नास्ति। तथा च यर्वाणः तर्वाणः इति जसन्तोप्यसाधुरेव। साधुशब्दप्रकृतिक प्रत्ययस्यैव साधुत्वाङ्गीकारात्। अत एव 'परश्च' इति सूत्रे भाष्ये'' किमस्य द्वयसम्'' इत्यसाधुवृत्तिजः सादृश्येऽपि अवृत्तिजत्वात् इत्युक्तम्। प्रकृत्युद्देशेनैव प्रत्ययानां विधानात् केवलानामसाधुत्वं बोध्यमित्याशयः। एवं च गगरीम् इति शास्त्रविहितत्वाभावात् अमः असाधुत्वमेव। साधूनामेव प्रत्ययविधौ उद्देश्यत्वे न प्रकृतित्वम्।

नन्वेवं तर्हि व्युत्पन्नात् सुबुत्पत्तिः इति न वाच्यम्। सर्वं नाम च धातुजमाह इति निरुक्तात् सर्वेषां व्युत्पन्नत्वात्। यानि तर्हि अग्रहणानि प्रतिपदिकानि एतेषामपि स्वरवर्णनुपूर्वीज्ञानार्थमुपदेशः कर्तव्यः मञ्चको मञ्चक इति मा

भूत् इति भाष्येणैव तेषामपि साधुत्वबोधनात् इत्याह। देशभाषानुसारेण कृतानां कूची अप्पी इत्यादीनामसाधुत्वमेव। टि घु भ आदि सञ्ज्ञानां तु शिष्टप्रयुक्तत्वात् साधुत्वमेवेति भावः ॥

सैषा शक्तिः त्रिधा, रूढिः योगः योगरूढिश्चेति शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थ निरूपिता शक्तिः रूढिः यथा मजिनूपुरः। शब्दार्थकात् भौवादिकात् मणधातोः औणादिके इन् प्रत्यये मणिः इति। एवं णू स्तुतौ नुवनं नूः सम्पदादित्वात् क्विपि नूः इति। पुर अग्रगमने अस्मात् इगुपध इति कप्रत्यये पुरः इति नुवः पुरो नूपुरः। नहीमौ शब्दौ शब्दकर्तृरूपार्थं, स्तुतिसम्बध्यग्रगमनकर्तारं वा बोधयतः किन्तु रत्न भूणविशेष वेति रूढिशक्तिमत्वगनयोः।

शास्त्रकल्पितावयवार्थान्विता शक्तिः योगः यथा पाचकादौ। यत्र शास्त्रकल्पितावयवार्थान्वित विशेष्य भूतार्थनिरूपितं समुदाये बोधकत्वं सा योगरूढिः। यत्रावयवशक्तिसमानाधिकरणा समुदाय शक्तिः तत्रेति भावः। यथा पङ्कजपदे पङ्कजनिकर्तृ पद्ममिति बोधः।

ननु पङ्कजपदादपि क्वचित् कुमुदादिबोधः इष्टत एवेति सर्वसाधरणी शक्तिरेवास्तु पद्मरूप विशेषपरतायान्तु लक्षणैवाभ्युपगम्यताम् इति चेत् ? मैवम्। अनुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विना बोधात् न लक्षणावसरः।

क्वचित् तात्पर्यग्रहवशात् केवलरूढार्थस्य केवलयीगार्थस्य च बोधः। भूमौ पङ्कजमुत्पन्नमित्यादौ योगार्थस्य बाधात् केवलरूढ्यर्थस्य बोधः। कल्हारकैरवमुखेष्वापि पङ्कजेषु इत्यादौ केवलयोगार्थबोधः। कल्हारकुमुदप्रभृतिषु रूढ्यर्थस्यानुपपत्तेः।

यत्र तु यौगिकार्थरूढ्यर्थयोः स्वातन्त्येण बोधः तद्यौगिकरूढम्। यता अश्वगन्धापदम् ओषधिविशेषबोधे रूढम्। अश्वसम्बन्धवत्तया वाजिशालाबोधे तु यौगिकम्। एवं मण्डपपदं गृहविशेषे रूढम्। मण्डपानकर्तरि यौगिकम्। अतः इदमपि यौगिकरूढमित्युच्यते। ननु एनादृशस्थले योगाद्रूढिर्बलीयसीति रूढेः प्रतिबन्धकत्वस्वीकारात् अश्वगन्धादिशब्दात् कथं वाजिशालादिबोधः इति चेत् प्रकरणाद्य भावे एव योगाद्रूढेर्बलवत्वेनादोषात्। रूढेः बलवत्वे नीजं तु अवयवार्थानुसन्धानमूलकयौगिकार्थापेक्षया रूढ्यर्थस्य प्रथमोपस्थितत्वमेव। यत्र तु यौगिकार्थस्य प्रथमोपस्थितत्वं तत्र तस्यैव बलवत्वम्। यथा "वाजिभ्यो वाजिनम्" इत्यत्र वाजिशब्दस्य प्रकरणादिना वाजम् अन्नमामिक्षारूपमस्ति येषामिति यौगिकार्थस्यैव प्रथमोपस्थितत्वात् बलवत्वेन विश्वदेवानां बोधः न तु अश्वस्य।

सैषा शक्तिः संयोगादिभिर्नानार्येषु नियम्यते।

तदुक्तं हरिणा-

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।
सामर्थमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति ॥

एते संयोगादयो नानार्थेषु शब्देषु शब्दार्थस्यानवच्छेदे संदेहे तदपाकरणद्वारा विशेषार्थनिर्णायका इति तदर्थः। उदाहरणानां शास्त्रज्ञेषु अभिप्रायभेदाभावेन प्रदर्शनं नापेक्षितमिति उपेक्ष्यते।

एवमेव-

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इति परिगणितानां शक्तिग्राहकाणामपि विषये विवादाभावात् न तद्विवरणस्यावश्यकता इति विरम्यते।

समासस्थले क्लृप्तावयवशक्त्यैव आकांक्षादिवशात् विशिष्टार्थबोधो भवति, समुदाये नातिरिक्ता शक्तिः कल्पनीयेति नैयायिकमीमांसकादयः ॥ तत्र विशिष्टे एव (समुदाये) शक्तिः नत्ववयवे। आवश्यकी च विशिष्टशक्तिरिति वैयाकरणाः।

तत्र वैयाकरणाः समासादिपञ्चसु विशिष्टे एव शक्तिर्नत्ववयवे। रथन्तरं, सप्तपर्णः, शुश्रूषेत्यादौ अवयवार्थानुभवाभावात्। अत एव भाष्ये व्यपेक्षापमुद्भाव्य अथैतस्मिन्व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इत्युक्तम्। धवखदिरौ, निष्कौशाम्बिः, गोरथो, घृतघटो, गुडधानाः, केशचूडः, सुवर्णालङ्कारो, द्विदशाः, सप्तपर्ण, इत्यादौ साहित्य - क्रान्त - युक्त - पूर्ण - मिश्र - संघात - विकार - सुच्प्रत्ययलोप - वीप्साद्यर्था वाचनिका वाच्या इति तद्भाष्याशयः इति वदन्ति।

नैयायिकमीमांसकादयस्तु न समासे शक्तिः। राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनि लक्षणयैव राजसम्बन्धवदभिन्नः पुरुष इति बोधात्। अत एव राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धस्येत्यादिविशेषेणान्वयः। "पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन" इत्युक्तेश्च। 'सविषेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न इत्युक्तेश्च। न वा घनश्यामो, निष्कौशाम्बिः गोरथ इत्यादाविवादिप्रयोगापत्तिः। लक्षणयैवोक्तार्थतया "उक्तार्थानामप्रयोगः" इति न्यायेन इवादीनामप्रयोगात्। नापि 'विभाषा' इति सूत्रमावश्यकम् लक्षणया राजसम्बध्यभिन्न इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्य च प्रयोगनियमसम्भवात्। पङ्कजशब्दवत् समासे भिन्नैव शक्तिरिति पङ्कजशब्ददृष्टान्तः न सङ्गतः। तत्र अवयवशक्तिमजानतोऽपि बोधात् अगत्या समुदाये शक्तिकल्पनेऽपि अन्यत्र तत्कल्पने मानाभावात्। शक्त्यग्रहादेव लक्षणया पङ्कजशब्दात् विशिष्टार्थप्रत्ययः न सम्भवति। न च चित्रगुरित्यादौ लक्षणासम्भवेऽपि प्राप्तोदक इत्यादि द्वितीयाद्यर्थबहुव्रीहौ लक्षणायाः असम्भवः तत्र ग्रामकर्मकप्राप्तिकर्त्रभिन्नमुदकमिति विग्रहार्थः। उदककर्तृक प्राप्तिकर्मीभूतो ग्राम इति समासार्थः अभिमतः। प्राप्तिकर्त्रभिन्नमुदकमिति बोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्मग्रामः इत्यर्थालाभात्। प्राप्तेति क्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति चेत् तर्हि समानाधिकरणप्रातिपदिकार्थयोरभेदान्वय- व्युत्पत्तिभङ्गापत्तेः, प्राप्तेर्धात्वर्थतया कर्तृतासम्बन्धेन भेदेनोदकस्य तत्रान्वयासम्भवाच्च।

अथोदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं तत्सम्बन्धिग्रामो लक्ष्यते इति चेन्न, प्राप्तेर्धात्वर्थतया क्तार्थकर्तारं प्रति विशेष्यताया असम्भवात्, "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्" इति व्युत्पत्तेः प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्या एव नामार्थत्वेनोदकेन सममभेदान्वयापत्तेश्च।

विशिष्टे शक्तौ तु उदककर्तृकप्राप्तिकर्मत्वविशिष्टे प्राप्तोदक इति समुदायस्यैव शक्तिरिति अभिमतार्थसिद्धिरिति वाच्यम्। प्राप्तोदक इत्यादौ उदकपदे एव लक्षणास्वीकारात्। पूर्वपदस्य यौगिकत्वेन तत्र

लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबेधकत्व-व्युत्पत्त्यनुरोधाच्च इति वदन्ति।

किन्तु नेदं साधु। समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्वाभावेन प्रातिपदिकत्वं न स्यात्। अत एवार्थवत्सूत्रे भाष्ये अर्थवदिति किम्, अर्थवतां समुदायोऽनर्थकः - दश दाडिमानि षडपूपाः कुण्डमजाजिनम् इति प्रत्युदाहृतम्। एवं च राजपुरुषपदयोः त्वन्मते प्रत्येकमर्थवत्वेऽपि समुदायस्य दशदाडिमानिवदनर्थकत्वात् प्रातिपदिकत्वानापत्तेः। न च ''कृत्तद्धित'' इति सूत्रे समासग्रहणात् तत्संज्ञेति वाच्यम्। तस्य नियमार्थताया भाष्यकृतैव प्रतिपादितत्वात्। अन्यथासिद्धिं विना नियमायोगत्। अत एव राज्ञः पुरुषः देवदतः पचतीत्यादिवाक्यस्य मूलकेनोपदंशंमित्यादेश्च न प्रातिपदिकत्वम्।

किञ्च समासे शक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अपि असम्भवेन लाक्षणिकार्थवत्वस्यापि असम्भवेन सर्वथा प्रातिपदिकत्वाभाव एव निश्चितः स्यादिति स्वाद्यनुत्पत्तौ ''अपदं न प्रयुञ्जीत'' इति भाष्यात्समस्तप्रयोगविलयापत्तेः।

यत्तु 'पदार्थः पदार्थेन' इति 'वृत्तस्य विशेषणयोगो न' इति वचनद्वयेन ऋद्धस्येत्यादिविशेषणान्वयो न भवति; तत्तु समासे एकार्थीभावे स्वीकृतेऽवययवानां निरर्थकत्वेन विशेषणान्वयासम्भवात् फलितार्थपरम् अस्माकं, युष्माकं तु अपूर्ववाचनिकमिति गौरवम्।

यत्तु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरिति, तन्न, उपकुम्भम् अर्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्। मम तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः विशिष्टोत्तरमेव प्रत्ययोत्पत्तेः विशिष्टस्यैव प्रकृतित्वात् विशिष्टस्यैवार्थवत्वाच्च न दोषः।

किं च राजपुरुषादौ, राजपदादेः सम्बन्धिनि सम्बन्धे वा लक्षणा, नाद्यः। राज्ञः पुरुष इति विवरणविरोधात्। वृत्तिसमानार्थवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्मात् शक्तिनिर्णयो न स्यात्। नान्त्यः, राजसम्बन्धरूपपुरुष इत्यन्वयप्रसङ्गात्।

**अत एव हरिणा उक्तम् -**

''समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्'' इति। तस्मात् समासे विशिष्टे एव शक्तिरुचिता इति वैयाकरणाः आशेरते।

शक्तिग्रहस्यापि सहकारित्वात् पामराणां घटमानयेत्यतः अर्थप्रत्ययो नेत्युक्तम्। यदि शक्तिग्रहः सहकारी तदानीमपि यस्य शक्तिग्रहो घटे वर्तते तस्य घटशब्दात् पटप्रत्ययः किं न स्यात्? यः शब्दः यस्यार्थे गृहीतशक्तिकः सः तदर्थं बोधयति। तदर्थविषयकशाब्दत्वावच्छिन्नं प्रति तच्छक्तपदज्ञानत्वेन हेतुत्वमिति कार्यकारणभावात् न घटशब्दात् पटप्रत्ययस्यावकाशः इति चेत्, तर्हि काश्यां गौरस्तीति वाक्यात् देशान्तरीयस्थगोः प्रत्ययो न स्यात्। न हि तस्य देशान्तरस्थपुंसः काशीस्थायां गवि शक्तिग्रहोऽस्ति असंनिकृष्टत्वात् तस्या गोरप्रतीतेः। गौः काशीवृत्तिरिति वाक्यजन्यशाब्दबोधे काशीस्थगौरेव विशेष्या। एवं च देशान्तरीयपुंसः तादृशगोरसंनिकृष्टत्वेन तव शक्तेरग्रहात् शाब्दबोधानुपपत्तिरिति हेतोः तद्विशेष्यकशाब्दत्वावच्छिन्नं प्रति तद्विशेष्यकशक्तिग्रहत्वेन कारणता

दुर्वचेति शाब्दत्वशक्तिज्ञानत्वाभ्यामेव कार्यकारणभावो वाच्यः। योग्यताबलाच्चागृहीतशक्तिकव्यक्तेरपि भानमुपेयम्। एवं च घटपदात् पटशाब्दबोधापत्तिः जागरूकैवेति अनुपपत्तिः। यदि शब्दप्रमितिरनुमितिरूपा अभ्युपगम्यते तदा घटपदात् न पटशाब्दबोधापत्तिः तन्निरूपितव्याप्तिज्ञानादेरभावात् इति वक्तुं शक्यते इति प्रसक्तमाक्षेपं परिहर्तुं शाब्दप्रमितेरतिरिक्तत्वमङ्गीकुर्वाणाः सर्वेऽपि निर्दुष्टं कार्यकारणभावं प्रकल्पयिष्यन्तः प्रथमं शक्तिविषयशक्यार्थनिर्णये प्रवर्तन्ते।

शक्तिस्वरूपविषये इव शक्यार्थविषयेऽपि शास्त्रज्ञानां नैकोऽभिप्रायः। अस्त्येवात्रापि विप्रतित्तिः। किं पदानामाकृतौ शक्तिः, जातौ शक्तिः उत व्यक्तौ शक्तिः, अथवा जातिविशिष्टव्यक्तौ आकृतौ जातौ व्यक्तौ च पृथक्शक्तिः, आहोस्वित् एकैव शक्तिः तिसृषु इत्यादयो बह्वो विचाराः सन्ति। तत्र जात्यकृतिव्यक्तिशक्तिवादिनः केचित्। जातिमात्रशक्तिवादिनः केचित्। आकृतिमात्रशक्तिवादिनः केचित्। व्यक्ति मात्रशक्तिवादिनः। जातिविशिष्टव्यक्तिशक्तिवादिनः, जातिव्यक्त्योः विशकलितशक्तिवादिनः, जातौ व्यक्तौ वैशिष्ट्ये च शक्तिवादिनः, जातौ व्यक्तौ वा शक्तिवादिनः, जातौ - व्यक्तौ - लिङ्गे - संख्यायां - कारके च शक्तिवादिनः, इति सन्ति अनेके वादिनः।

तत्रभवता सूत्रकारेण गौतमेन पदानां कुत्र शक्तिरिति निपुणं परिशील्य जात्याकृतिव्यक्तिषु शक्तिरिति कृतो निर्णयः। तथा च सूत्रम्- ''जात्याकृतिव्यक्तयः पदार्थः'' इति।

अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते। तत्र न ज्ञायते किमन्यतमः पदार्थः? उत सर्वे इति। व्यक्तिर्नाम जात्याश्रयो द्रव्यम् गवादिः। आकृतिः यथा जातिः, जातिलिङ्गानि च प्रख्यायन्ते सा। नियतावयवव्यूहा खलु सत्वावयवा जातिलिङ्गम्। शिरसा पादेन गामनुमिन्वन्ति। नियते च सत्वावयवानां व्यूहे सति गोत्वं प्रख्यायते। अवयवसंस्थानविशेषः जातिः समानाकारबुद्धिजननयोग्या नित्या अनेकसमवेता गोत्वादिः।

व्यक्तावेव प्रयोगदर्शनात् व्यक्तिरेव पदार्थ इति ज्ञायते, यथा - गौर्गच्छति इति व्यवहारो व्यक्तावेव, जात्याकृत्योरमूर्तत्वात्। एवं गवां समूहः, गां ददाति, गां प्रतिगृह्णाति, दश गावः, गौर्वर्धते, कृशा गौः, कपिला गौः, गौः प्रसूता इत्यादिव्यवहाराणां च व्यक्तावेव सम्भवात् इति पूर्वपक्षः।

न व्यक्तिः केवला पदार्थः, जात्या विना व्यक्तिमात्रस्यानभिधानात्। व्यक्तिमात्रस्य शक्यत्वे हि गवापदात् यत्किञ्चिद्व्यक्तेः उपस्थितिः स्यात्। अतो गोत्वविशिष्टा व्यक्तिर्वाच्या। तथा च नागृहीतविशेषणा बुद्धि र्विशेष्यमुपसंक्रामति इति न्यायात् जातावेव शक्तिरस्तु। यष्टिं भोजय मञ्चाः क्रोशन्ति, गङ्गायां घोषः, इत्याद्यर्थमपेक्षितायाः लक्षणाया इहाप्याश्रयणेन व्यक्तेः भवति लाभः। अवश्यं च जातिः पदार्थः अङ्गीकार्यः। गाँ प्रोक्षय, गामानय, गां देहि इत्यादिषु स्थलेषु प्रोक्षणादीनां मृद्गवके व्यक्त्याकृतियुक्तेऽपि अप्रसञ्जनात्। अन्यथा मृद्गवकस्यपि व्यक्तित्वात् गवाकृतिसत्वाच्च वैधं प्रोक्षणादिकं स्यात् इति जातिवादिनामाक्षेपः। नागृह्यमाणायामाकृतौ व्यक्तौ च जातिमात्रं शुद्धं गृह्यते। जातिशाब्दबोधस्य आकृतिव्यक्तिविषयकनियमात् तयोरपि वाच्यत्वमावश्यकम्। शक्तिं विना तद्भानासम्भवात्। अतः आकृतिव्यक्ती अपि पदार्थः आवश्यकः इति आकृतिव्यक्तिवादिनां पर्यनुयोगः। एवं सर्वेषु पक्षेषु युक्त्यनुभवादेस्तुल्यत्वात् जात्याकृतिव्यक्तिषु तिसृष्वपि शक्तिरस्तीति निर्णयः। तत्रापि तिसृषु एकैव शक्तिः विभिन्नशक्तौ तु कदाचित् कस्य चिदुपस्थितिः स्यात्। अत एव

जात्याकृतिव्यक्तयस्तु पदार्थः इति एकवचनं प्रयुक्तम्। शक्तेः तुल्यत्वेऽपि व्यक्तेः विशेष्यत्वात् प्राधान्यम्। विवक्षानुरोधेन च जात्याकृतिव्यक्तिषु प्रधानाङ्गभावः आश्रीयते।

**मीमांसकाः-**

जातिशक्तिवादिनः। तेषां च वादसरणिर्मनोरमा वर्तते। पदानामाकृतौ शक्तिः। आकृतिश्च जातेरनतिरिक्ता। अतः जातिशक्तिवादिनो मीमांसकाः इति प्रवादः। "आकृतिः क्रियार्थत्वात्" इति सूत्रयन् सूत्रकारो जैमिनिः आकृतिं जातिमुपदिशति "सास्नादिविशिष्टा आकृरिति ब्रूमः "इति भाष्यकारः शबरस्वाम्यपि तथैव व्यवहरति।

"जातिमेवाकृतिं प्राहुः व्यक्तिराक्रियते यथा।
सामान्यं तच्च पिण्डानाम् एकबुद्धिनिबन्धनम्॥

इति वार्तिककारः श्लोकवार्तिके जात्याकृत्योरभिन्नतां स्पष्टमाह।

ते चाकृतौ शक्तिं समर्थयन्त्येवम्।

प्रयोगप्रतिपत्तिभ्यां किल शब्दार्थनिश्चयः। वृद्धाः स्वार्थेन व्यवहरन्तः यस्मिन्नर्थे गोशब्दं प्रयुञ्जते श्रोतारश्च यमर्थं ततः प्रतिपद्यन्ते सः तस्यार्थः। तत्र यदि गोशब्दः केसरादिमति न प्रयुज्यते सास्नादिमति च प्रयुज्यते, तद साधारणसंनिवेशविषय एवावगम्यते। प्रत्यक्षविषये गौरित्यादिपदं प्रयुज्यते। प्रत्यक्षं चाकृतिविषयम्। अश्वपिण्डसंनिवेशात् विलक्षणो हि गोपिण्डसंनिवेशः इन्द्रियेण प्रतीयते। तत्कृतमेव वस्तुषु इतरवैलक्षण्यम्। अतः प्रत्यक्षविषये पदं प्रवर्तमानम् आकृतावेव वतुमर्हति। प्रेषणादिक्रियायोगश्च व्यक्तिद्वारकः आकृतेर्भविष्यति। यदि व्यक्तिमात्रं शब्दार्थ इष्यते तर्हि प्रयोगप्रतिपत्तिविरोधः न हि यस्यां कस्यांचित् व्यक्तौ गोशब्दं वक्तारः प्रयुञ्जते। न च गोशब्दात् यां कांचित् व्यक्तिं श्रोतारः प्रतिपद्यन्ते। यदि व्यक्तिः शब्दार्थो भवेत् तदा व्यक्त्यन्तरे न प्रयुज्येत। अथ च व्यक्त्यन्तरेऽपि प्रयुज्यते। अतः सर्वव्यक्तिसाधारणः अर्थो वक्तव्यः। आकृतिरेव सोऽर्थो न व्यक्तिः।

किं च व्यक्तौ चेत् गोशब्दः प्रयुज्यते, कर्कादिव्यक्तावपि प्रयुज्येत। यत्रास्य प्रयोगो दृष्टः तत्रैव प्रयुज्यते नान्यत्रेति परिहारः नोपपन्नः। अद्य जातायां तर्हि गवि इयं गौरिति प्रयोगो न स्यात्। तत्र प्रयोगस्य अदृष्टत्वात्। प्रतिव्यक्ति प्रयोगदर्शनस्य असम्भवाच्च। अतः प्रयोगदर्शनम् अकारणम्।

अपि च व्यक्तौ पदार्थे इयं वा गौः, इयं वा गौरिति प्रतिपत्तिः स्यात्, न तु इयमपि गौरिति। भवत्येव इयमपि गौरिति प्रतीतिः। अत्र च नियामकं गोत्वमेवेति वक्तव्यम्। तच्च गोत्वम् अतिप्रसङ्गवारणार्थं अवगतमेव (ज्ञातमेव) नियामकं वक्तव्यम्। तदवगमश्च प्रमाणान्तरासंनिधानात् शब्दादेवेत्यवश्यमभ्युपगन्तव्यम्। शब्दाच्चेत्तर्हि शब्दः प्रथमतरं गोत्वे वर्तितुमर्हति। "नागृहीतविशेषणा बुद्धि र्विशेष्य उपजायते" इति न्यायात्। किं च गामानयेत्युक्ते गोव्यक्तिषु का गौरानेया इति भवति संशयः इति न व्यक्तीनामविधेयता, शब्दस्य निश्चयजनकत्वात्। गोसामान्यस्य जातेस्तु गोशब्दात् निश्चयात्मिका बुद्धिर्भवतीति स्यात्तस्या अभिधेयता।

विशिष्टे शक्तिस्वीकारे गौरवात् विशेषणे गोत्वे एव शक्ति स्वीकारः उचितो लाघवात्। विशेषणत्वेन आकृतिं (जातिं) विशेष्यत्वेन व्यक्तिं वहति गो शब्दः इति कल्पना नोचिता शब्दस्यातिभारप्रसङ्गात्। शब्दाज्जायमाना व्यक्ति प्रतीतिरपलपितुं न शक्येति अगत्या शब्दे भारः सोढव्य इति चेत्? न। शब्दा द्भवन्ती व्यक्तिप्रतीतिर्नापलप्यते,

व्यक्तिप्रतीतेः प्रत्यात्मवेदनीयत्वात् किन्तु अभिधात्री शक्तिः जातिविशिष्टव्यक्तौ शब्दस्य नेत्युच्यते। अन्यतरप्रतीत्या चान्यतरस्यसिद्धेः। तत्र कया प्रतीत्या कस्याः सिद्धिः इति चेत् ? जातेर्विशेषणत्वात् पूर्वतरं प्रतिपत्तिः तस्या एवेति तस्याः शब्दार्थत्वे जातिप्रतीत्या च व्यक्तेः सिद्धिर्भवितुमर्हति।

किञ्च ''विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे'' इति न्यायेन व्यक्तेः शब्दार्थत्वं नास्ति। जातौ च शब्दादवगतायां तत एव व्यक्त्यवगमः सेत्स्यतीति नोभयत्र शाब्दो व्यापारः। व्यक्तेरशक्यत्वे कथं व्यक्तेः बोधविषयत्वम् ? अशक्यस्यापि शाब्दबोधविषयत्वोपगमे घटशब्दात् पटादेरपि बोधापत्तिरिति चेत्? जात्या व्यक्तेराक्षेपाल्लाभः। तत्तजात्याश्रयव्यक्तेरेवाक्षेपाल्लाभेन घटशब्दात् पटादिबोधप्रसक्तिर्नेति भावः। इति।

जातिशक्तित्वविषये सर्वेषां मीमांसकानामैकमत्येपि व्यक्तिलाभप्रकारे नास्ति एकोऽभिप्रायः। आक्षेपाद्व्यक्तिलाभ इति वदतामपि मीमांसकानां व्यक्तिसाधकाक्षेपपदार्थेऽपि अस्ति विप्रतिपत्तिः। एकेनोक्तमपरः निराकृत्य स्वमतं साधु मन्यते। तमपरः खण्डयति। दिङ्मात्रमिह प्रदर्श्यते।

ननु कोयमाक्षेपो नाम? अनुमानमेवाक्षेपः। अनुमानरूपेणाक्षेपेण व्यक्तेः लाभः इति वक्तुं नावकाशः। अनुमानस्येहासम्भवात्। पक्षसाध्यहेतुप्रयोगासम्भवात्। तथाहि-

इयं गौः गोत्वात् इत्यनुमानं न घटते शब्दात् पक्षाज्ञानात्। गोत्वं गवाश्रितं गोत्वत्वादिति अनुमानमपि नोपपद्यते। पक्षतातच्छेदकहेत्वोरैक्येन सिद्धसाधनात्। अथ गोत्वं, व्यक्त्याश्रितं, जातित्वात् इत्यनुमानेन पक्षधर्मताबलात् गोत्वाश्रयव्यक्तिसिद्धिरिति चेत् ? न, जातित्वादितिलिङ्गस्य पदादनुपस्थितेः। किं च व्यक्त्या हि प्रतिसन्धानमन्तरापि व्यक्ति बोधस्यानुभवसिद्धतया, अनुमितिविलक्षणशब्दानुभवविषयत्वाच्च व्यक्तेः अनुमानरूपादाक्षेपात् व्यक्तिलाभः इति वचनं सर्वथा विरुद्धमेव।

भट्टाः अर्थापत्तिरेवाक्षेपः। गोत्वं हि स्वाश्रयं विना आनयनाद्यन्वये अनुपपन्नं स्वाश्रयमाक्षिपति। अनुपपत्तिज्ञानजन्यार्थापत्यात्मकज्ञानेन, पीनत्वान्यथानुपपत्या दिवा अभुञ्जानस्य देवदत्तस्य रात्रिभोजनमिव, व्यक्तिः कल्प्यते। अनुपपत्तिज्ञानजन्यार्थापत्यात्मकज्ञाने व्याप्तिज्ञानस्यानपेक्षितत्वात् विनापि व्याप्तिज्ञानं व्यक्ति सिद्धिः। पदोपस्थितानामेव शब्दबोधे भानात् व्यक्तेः पदादनुपस्थितत्वेन अर्थापत्तिविषयत्वमेव, न शाब्दविषयत्वम्। ननु एवंरूपादाक्षेपात् व्यक्तिप्रतीतिरभ्युपगम्यते यदि, तदा गौरिति पदात् युगपदेव जातिव्यक्त्योः प्रतीतिः व्याहन्येत। एवं गोपदात् गोत्वधीः ततोऽनुपपत्तिज्ञानं, ततश्च व्यक्तिधीरिति ज्ञानधाराकल्पनं चेति गौरवमिति चेत्? मैवम्। गोपदस्य जातिमात्रवाचकत्वे सिद्धे जातिव्यक्त्योः युगपत्प्रतीतेरप्रसिद्धेः। ज्ञानधाराकल्पनस्य च फलमुख गौरवत्वेनादोषात् इति वदन्ति।

मण्डनमिश्रास्तु आक्षेपो नाम लक्षणैव विवक्षिता। गोपदस्य गोत्वे शक्तिः। व्यक्तौ लक्षणा। गामानयेत्यादौ गोत्वस्य जातेः आनयने अन्वयानुपपत्तेः सत्वात्। अनुपपत्तिर्हि लक्षणायां बीजम्।

''जातावस्तित्वनास्तित्वे न हि कश्चित् विवक्षति।
नित्यत्वात् लक्ष्यमाणायाः व्यक्तेस्ते हि विशेषणे॥''

अस्तित्वनास्तित्वे उत्पत्तिविनाशौ, गौरुत्पन्ना - गौर्नष्टा इत्यादौ गोत्वस्य नित्यत्वेन उत्पाद विनाशयोरसम्भवात् अवश्यं व्यक्तौ लक्षणा अङ्गीकार्या। एवं सति व्यक्तेः शाब्दबोधविषयत्वं चोपपन्नं भवति अनुमानेन वा अर्थापत्या

वा प्रतीतस्य शाब्दबोधविषयत्वं न संगच्छेत। नच जातौ शक्तिः व्यक्तौ लक्षणा चेत् युगपद्वृत्ति द्वयमाश्रयणीयम् । तन्नोचितं युगपद्वृत्ति द्वयनिरोधात् इति वाच्यम्। तात्पर्यज्ञानसत्वे गङ्गायां घोषमत्स्यौ स्तः इत्यत्रेव युगपद्वृत्तिद्वयस्य सम्भवात् युगपद्वृत्तिद्वयनिरोधे प्रमाणाभावाच्च इति वदन्ति।

गुरवस्तु अर्थापत्तिरूपादाक्षेपात् व्यक्तिलाभः इति भट्टमतं न युक्तम्। गामानयेत्यादौ गोत्वस्यानयने अन्वयानुपपत्त्या व्यक्तेः आक्षेपसम्भवेऽपि गौरस्तीत्यादौ गौत्वस्य अस्तित्वे अन्वयसम्भवेन अनुपपत्तिज्ञानस्यैवासम्भाविततया कथं तेन व्यक्तिलाभः स्यात्?

लक्षणा रूपादाक्षेपादित्येतदपि न चारु।
''शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा''

इत्युक्तेः व्यक्तौ लक्षणाया अनवकाशात्। गङ्गायां घोष इत्यत्र यथा शक्यात् प्रवाहरूपादर्थात् अन्येन रूपेण तीरत्वेन ज्ञाते तीरे लक्षणा वर्तते, न तथात्र सम्भवति। न ह्यत्र गोव्यक्तिः गोत्वातिरिक्तेन ज्ञाता। लक्ष्यतावच्छेदकरुपेणैव लक्ष्यस्य भाननियमात्। लक्ष्यतावच्छेदकं गोत्वमेव हि मिश्रमते शक्यम् इति शक्यादन्येन प्रकारेण ज्ञाते प्रवर्तमाना लक्षणा कथमत्रावकाशं लभताम्?

किञ्च जातिमात्रे शक्तिः व्यक्तौ लक्षणा इति तदा स्यात् यदि जातिमात्रे मुख्यः प्रयोगः। न चैवं वर्तते सर्वत्र गौर्जाता, गौः नष्टाः व्यक्तिः इत्यादौ व्यक्तावेव मुख्यप्रयोगदर्शनात्। गां पश्य गौरस्ति इत्यादौ मुख्यार्था न्वयानुपपत्यभावेन लक्षणायां मानाभावात् व्यक्तिबोधानुपपत्तिः। तस्मात् अन्यविधाक्षेपस्य दुर्वचत्वात् समानवित्तिवेद्यत्वमेव आक्षेपो वक्तव्यः। समानवित्तिवेद्यत्वं नाम एकज्ञानविषयत्वमेव। प्रत्यक्षस्थले व्यक्तिप्रत्यक्षं विना जातिप्रत्यक्षस्याभावेन यथा जातिधीः व्यक्तिं विषयीकरोति तथा शाब्दस्थलेऽपि जातिधीः व्यक्तिं विषयीकरोति।

ननु प्रत्यक्षस्थले संयुक्तसमवायादिरूपजातिप्रत्यक्षसामग्रीसत्वे संयोगादिरूपव्यक्तिभासकस्य सत्वात् अस्तु तथा। शाब्दे तु कथमेवं भवतिति चेत्? जातिभानसामग्र्या एव व्यक्तिबोधकत्वात्। जातिशाब्दत्वमेव जातिशक्तिज्ञानकार्यतावच्छेदकम्। जातिभाने च जायमाने व्यक्त्यविषयकस्य तस्याभावात् व्यक्तिरपि भासते। ''यद्येन विना न भासते तद्बोधकस्य तद्बोधकत्वनियमात् जातिभासक सामग्र्या एव व्यक्तिबोधोपधायकत्वात् व्यक्ति लाभः सुलभः।

अथवा जातिशक्तिरेव व्यक्तिमपि बोधयति। न चान्यश कृत्या अन्यबोधने अतिप्रसङ्ग इति वाच्यम् गोत्वशक्तं पदं गोत्वविशिष्टं बोधयतीत्यदोषात्। अयं भावः जातावेव शक्तिस्वीकारेण गोत्वविशिष्टविषयक शाब्दं प्रति गोत्वविषयकशक्तिज्ञानत्वेन हेतुत्वम् इति कार्यकारणभावाश्रयणात् अतिप्रसक्तेर्नावकाशः इति।

गुरुषु एकदेशिनः कुब्जशक्तिं स्वीकृत्य समानवित्तिवेद्यत्वमुपपादयन्ति। उक्तं हि - ''या स्वरूपसती शाब्द बोधे शक्तिः प्रयोजिका।

व्यक्तिनिष्ठा कुब्जशक्तिरिति प्राभाकरा विदुः॥ एतन्मते जातौ व्यक्तौ च शक्तिः। परंतु जातिविषयकशक्ति ज्ञानमेव जातिविशिष्टव्यक्तिविषयकशाब्दबोधे कारणम्। व्यक्तिशक्तिस्तु स्वरूपसती उपयुज्यते। ननु इत्येव किं न

स्यादितिचेत् ? तथासति देशान्तरस्थगोविशेष्यकशक्तिज्ञानाभावेन तद्बोधानापत्तेः । एवं च तत्पदशक्यविषयकशाब्दबोधं प्रति तत्पदनिरूपितजातिशक्तिज्ञानत्वेन कारणत्वात् गोपदात् घटादिबोधापत्तेरपि नावकाशः ।

ननु कुब्जशक्तिवादिमते व्यक्तिशक्तिज्ञानस्याहेतुतया व्यक्तिशक्ति स्वीकारो निरर्थक इति चेत्? मैवम् । यदि व्यक्तौ शक्तिर्नाभ्युपगम्येत तदा जातिविषयक शाब्दत्वमेव जातिशक्तिज्ञानस्य कार्यतावच्छेदकं, योग्यताबलाच्च व्यक्तिरपि भासते इत्येवोपेयं स्यात्, तथा च घटादेरपि भानापत्तिः अशक्यत्वाविशेषात् । व्यक्तौ शक्त्यङ्गीकारे तु व्यक्तेरपि शक्यत्वात् तत्पदशक्यविषयकशाब्दत्वस्यैव कार्यतावच्छेदकत्वेन अतिप्रसक्त्यभावात् ।

नैयायिकसंप्रदायविदस्तु गोपदस्य जातावेव शक्तिं स्वीकृत्य गोत्वविशिष्टविषयकशाब्दं प्रति गोत्वविषयक शक्तिज्ञानत्वेन हेतुत्वाङ्गीकारे गोत्वमस्तीत्यतोऽपि गोत्वविशिष्टप्रत्ययापत्तिः । गोत्वपदस्यापि गोत्वशक्तत्वेन गोपदगोत्वपदयोरविशेषात् गोत्वविशिष्टशाब्दबोधापत्तिः इति भावः ।

तस्मात् गवादिपदानां जातौ, व्यक्तौ, वैशिष्ट्ये च शक्तिः तृतीयाविभक्त्युपस्थाप्यकरणत्वैकत्वयोरिव जातौ व्यक्तौ च विशकलिततया शक्त्यङ्गीकारे गोत्वं, व्यक्तिश्चेति बोधप्रसङ्गः न तु गौरिति । अतः वैशिष्ट्येऽपि शक्तिः स्वीकार्या । एवम् अवयवसंयोगविशेषरूपाकृतौ तद्वैशिष्ट्ये च गोपदस्य शक्तिः गोपदात् जात्याकृतिविशिष्टस्यैव प्रतीतेः । अत एवोक्तं सूत्रकृता गौतमेन जात्याकृतिव्यक्तयः पदार्थः एका शक्तिरिति सूचनाय पदार्थ इत्येकवचनम् । विभिन्नशक्तौ कदाचित् कस्यचिदुपस्थितिः स्यात् । नन्वेवं सति तत्प्रकारकतद्विशेष्यक शाब्दबोधं प्रति तत्प्रकारकतद्विशेष्यकशक्तिज्ञानत्वेन हेतुत्वमित्यायातम् । तच्च, काशीस्थायां गवि शक्त्यग्रहात् बोधानापत्तिरूपबाधग्रस्तमिति चेत्? न, शक्तिग्रहाविषयीभूतव्यक्ति बोधानापत्तिरूपो दोषः न भवत्येतन्मते । गोत्वसामान्यलक्षणया सकलस्य गोरुपस्थिता सर्वत्रैव गवि शक्तिग्रहसंभवात् । तथा च सर्वत्रापि शक्तिग्रहात् शक्ति ग्रहाविषयव्यक्तेरलीकतया न तद्बोधानुपपत्तिः ।

अथवा सामान्यलक्षणाया अनङ्गीकारेऽपि नानुपपत्तिः । लौकिकसाक्षात्कार विषये एकत्रैव गवि शक्तिग्रहः अस्तु ।

न चैवं सति शक्तिग्रहाविषयगोबोधानापत्तिः । अन्यशक्तिग्रहात् अन्यव्यक्तिबोधाभ्युपगमे च गोपदात् घटादेरपि बोधापत्तिः शक्तिग्रहाविषयत्वस्याविशेषात् इति वाच्यम् गोत्वप्रकारकगोविशेष्यकशक्तिज्ञानत्वेन हेतुतया न अन्यगोबोधानापत्तिः, न वा घटादिबोधापत्तिः । पूर्वं तत्तद्व्यक्तित्वेनापि गोनिवेशः । इह तु गोत्वेनैव निवेशः इति विशेषः इति मन्यन्ते ।

नव्यास्तु एकस्य प्रवाहसम्बन्धस्य तीरतीरत्वयोरभावात् शक्यसम्बन्धरूपाया लक्षणाया एकस्याः लक्ष्यता वच्छेदकलक्ष्ययोरसम्भावितयालक्ष्यता वच्छेदकविशिष्टे लक्षणाया अनङ्गीकारेपि गङ्गायां घोष इत्यादौ स्ववृत्त्यनु पस्थितस्यापि तीरत्वस्य शाब्दबोधे भानवत् शक्यतागच्छेदके शक्त्ययभावेऽपि तादृशकार्यकारणबलादेव गोत्वभाननिर्वाहि कृतं तत्र शक्तिकल्पनया । गोपदस्य गव्येव शक्तिः नतु गोत्वेऽपि । केवलव्यक्तौ शक्तिस्वीकारे नैवोपपत्तौ जातिविशिष्टव्यक्तौ शक्तिकल्पना व्यर्था गौरवदोषग्रस्ता च ।

ननु गोत्वे शक्त्यस्वीकारे घटादेरिवाशक्यत्वात् गोत्वस्य शाब्दबोधाषयत्वापत्तिरिति चेत् ? मैवम् । गोत्व विशिष्टशाब्दबोधं प्रति गोत्वधर्मितावच्छेदककशक्तिग्रहस्य हेतुत्वेनादोषात् । गोत्वे एव शक्तिस्वीकारे तु गोत्व त्वधर्मि तावच्छेदककशक्तिग्रहस्य हेतुतया गौरवात् व्यक्तौ शक्तिरिति ध्येयमित्यभिप्रयन्ते ।

विशिष्टाद्वैतिनोऽपि जातिविशिष्टव्यक्तिवादिन एव । केवलजातौ, केवलव्यक्तौ च शक्त्यङ्गीकारे दोषानुत्पश्यन्तस्ते जातिविशिष्टव्यक्तावेव शक्तिं युक्ततरां मन्यन्ते । तेषां तत्समर्थनरीतिर्विशिष्यते । अतः तदभिप्रायोऽपीह प्रस्तावमर्हतीति संगृह्यते ।

गामानयेत्यादौ आनयनं न गोत्वस्य जातेः सम्भवति, किन्तु गोः व्यक्तेः इति अन्वयानर्हजातिमात्रे शक्तिर्नोपपद्यते । जातिं विहाय केवलव्यक्तौ यदि शक्तिः तदानुभवविरोधः । एकव्यक्तौ चेत् अन्यत्राप्रयोगः इति अनुवृत्तव्यवहारादिबाधः । अनेकव्यक्तिषु शक्तिकल्पने च गौरवम् अतीतानगतव्यक्तिषु अयुक्ता च शक्तिकल्पना । अतो जातिविशिष्टा व्यक्तिरेव शब्दार्थः ।

विशिष्टविषयकत्वस्वीकारे शब्दवैविध्यावगमो न स्यात् । केचिच्छब्दाः जातिमात्रवाचकाः जातिः सामान्यमित्यादयः । केचिद्व्यक्तिमात्रवाचका : व्यक्तिः स्वरूपमित्यादयः । अपरे पुनः जातिविशिष्ट व्यक्तिवाचकाः गौः अश्वः इत्यादयः । तत्र पूर्वकोटिद्वयविलक्षणतृतीयकोटिवाचकाः शब्दाः जातिविशिष्टवाचकाः नच व्यक्त्यानन्त्यप्रयुक्तशक्त्यानन्त्यपरिहाराय, व्यावृत्तिग्रहाय च जातेः शक्तिविषयत्वस्यावश्यकत्वात् तन्मात्रे शब्दस्य शक्तिरस्तु । व्यक्तिलाभस्तु व्यक्तिं विना जातिभानायोगात् आक्षेपादेव भवितुमर्हतीति न तत्र व्यक्तौ शक्तिः कल्पयितुमुचिता, "अनन्यलभ्यः शब्दार्थ इत्युक्तेः इति वाच्यम्, व्यक्तिलाभाक्षेपादित्यस्यैवासङ्गतत्वात् ।

तथा हि आक्षेप इत्यनेन कोऽर्थो विवक्षितः? अन्यथानुपपत्तिरूपार्थापत्तिप्रमाणं वा? अनुमानं वा? जातिव्य क्त्योर्मिथः सम्बन्धात्स्मृतिमात्रं वा? शब्दतो लक्षणा वा?

नाद्यः अर्थापत्तिप्रमाणस्यानुमाने एवान्तर्भावात् । न द्वितीयः । व्यक्तिं विना जातेः पृथगभाने कथं जात्या व्यक्त्यनुमानं घटते? न हि वह्निं विहाय धूमस्य पृथग्ग्रहण भावे धूमेन वह्निनुमानं स्यात् । न तृतीयः । सम्बन्धवशात् कथमपि स्मृतस्य सर्वस्य शाब्दबोधे भाना योगात् । अन्यथा गवादिशब्दप्रयोगे शब्दाधारस्याकाशस्य शब्द प्रयोक्तृपुरुषस्यापि बोधविषयत्वं स्यात् । उक्तानुपपत्तिपरिहाराय शब्दादनुपस्थितस्य न शाब्दबोधे भानमित्युच्येत, तर्हि व्यक्तेरपि स्मृतायाः शब्दादनुपस्थितत्वेन शाब्दबोधे भानं न भवेत् । न तुरीयः अनुपपत्तिर्हि लक्षणाबीजम् । पृथक् जातिभानाभावात् नानुपपत्तिग्रहणप्रसक्तिः । व्यक्तिशून्यां जातिं कदाचिदापि न स्पृशतिधिषणा । ते न जातौ प्रवृत्ता शब्दशक्तिः व्यक्तिमपि स्पृशतीति वक्तव्यम् । तथा चेत् शब्दानां जातिविशिष्टव्यक्त यवगाहनं स्थितमेव ।

किञ्च शक्तिकार्यं ज्ञानं कियद्विषयकमिति विभाव्य, कियतः शक्तिविषयकत्वमिति कार्यानुरोधेन कल्पनीयम् । बोधकत्वरूपा शक्तिः जाताविव व्यक्तावपि वर्तते । अतो जाति विषयकस्य बोधस्य नियमेन शक्तिविषयकत्वे शक्तिरुभयविषयेति सिद्धम् ।

अपि च जातेर्बोधस्तावत् स्वकारणवशात् भवति । जातेः प्रत्यक्षरूपबोधे कारणं च चक्षुरादीन्द्रियसंयुक्तव्य क्त्याश्रितत्वरूपः संनिकर्षः । तस्य व्यक्तिद्वारेण निरूप्यत्वात्, व्यक्तिप्रत्यक्षकारणस्यापि सत्वात् कार्यव्यक्तेरग्रहः स्यात्? संनिकर्षस्य व्यक्तिघटितत्वे कारणं च नहि जातिराश्रयं विना स्थातुमर्हतीति । एकस्या व्यक्तेरभावे जातिः

कुत्र स्यात्? अतः तदपृथक्स्थित्या तत्प्रकारतयैव प्रत्यक्षे भानम्। यथाभानमेव व्यवहारात् सर्वत्र व्यक्त्या सह भानमेव स्वरसम्। यथा गोत्वशब्दे गोर्भावी गोत्वमिति गोशब्दप्रतिपत्तिमन्तरेण प्रतिप्रत्तिर्नभवति गोशब्दमन्तरेण भावविषयस्य त्वप्रत्ययस्यानुत्पत्तेः एवं गोत्वस्य जातेः प्रत्ययः तदाधारभूतगोस्वरूपमन्तरेण न भवति।

किञ्च गोशब्दश्रवणे गोत्वं भासमानं यदि गोपारतन्त्र्यं विना भासेत तदा व्यक्त्या सम्बन्धस्यत्त्ग्रहात् व्यक्तिः न लक्ष्या स्यात्। (लक्षणयापि न प्रतीयेत। अश्वत्वापेक्षया वैलक्षण्यमपि न गृह्येत। शब्दात् गोत्वस्य व्यक्तिपारतन्त्र्यं यदि स्फुरति तदा शक्त्यैव व्यक्तेरपि भानं सिद्धम्। व्यक्त्यभाने जातेः पारतन्त्र्यं शब्देन बोधयितुं न शक्यं स्यात्। अतो गवादिपदशक्तिः व्यक्तिपर्यन्ता।

ननु जातेः व्यक्तिपारतन्त्र्येऽपि यदि सर्वत्र बोधे जातेरप्राधान्येनैव भानं स्यात् तदा विशिष्टे शक्तिरिष्येत। नैवं विद्यते। गवादिशब्दानां जातिमात्रविषयेऽपि व्यवहारस्य दर्शनात्। गौरस्ति, गां पश्य, गौर्न महिष इत्यादौ जातिमात्रस्य, गौर्गच्छति, गौर्जाता, गौर्नष्टा इत्यादौ व्यक्तेः व्यवहारो दृश्यते। तत्रोभयविधशक्तिकल्पने गौरवात् एकतरस्यैव शक्यत्वे लाघवात् जातौ शक्तिर्युक्ता न व्यक्तौ, व्यक्तीनामानन्त्यात् व्यक्तौ तु अभिमतस्थले लक्षणैव ज्यायसी। न च जातिशक्तत्वे गौः, गोत्वम् इत्युभयोरपि वैक्तक्षण्यं न स्यात् इति वाच्यम्। निष्कर्षकेभ्यः लक्षणयापि व्यक्तिषु अप्रयुज्यमानेभ्यः गोत्वादिशब्देभ्यः, गवादिशब्देषु निरुढाजहल्लक्षणावत्वस्यैव वैलक्षण्यस्य सत्वात्। अस्ति हि गवादिशब्देषु निरुढा (अनादिः) वाच्यार्थम् (जातिं) अजहती लक्षणा व्यक्तिविषया नतु गोत्वादि जाति शब्देषु। तत्र त्वप्रत्ययस्य निरूढलक्षणावारकत्वात् इति चेत्?

उच्यते - अपृथक्सिद्धिबलात् सर्वत्र व्यक्तेरपि नियमेन भानात् गौस्तिष्ठति, गां पश्येत्यादावपि जातिमात्र भाने हेतुर्नास्ति। गौर्गच्छतीत्यादाविव गोत्वे अस्तित्वाद्यन्वयानुपपत्तिर्नास्तीत्येतावदेव वैषम्यम् न तत् व्यक्तिभानप्रतिबन्धकम्। व्यक्तावपि अस्तित्वान्वयाबाधात् प्रतीतत्यागायोगात्।

किञ्च गोशब्दस्य गोत्वमात्रशक्तता तर्हि लक्ष्यार्थत्यागेन शक्यार्थमात्रे प्रयोगस्यावश्यकतया तत एव गोत्वमुख्यविशेष्यक बोधलाभे सति गोत्वमिति त्वप्रत्ययघटन मेवन स्यात्। नच ''गौर्नित्या'', ''रूपं नित्यम् ''इत्यादिप्रयोगे व्यक्तौ नित्यत्वायोगात् जातिमात्रार्थकत्वमेष्टव्यमिति वाच्यम्। क्वाचित्कतया तादृशप्रतीते रेव लक्षणाधीनत्वकल्पनौचित्यात्। वस्तुतस्तु गोत्वादिजातिर्नित्येति वदतां मते कल्पितोऽयं प्रयोगः। नित्यजातौ मानाभावात्। आकृत्यतिरिक्तजातेरेवाभावात्। आकृतेश्च संस्थानरूपतया नित्यत्वाभावात्। प्रवाहानादितया आकृतेर्नित्यत्वं तु गवादिव्यक्तिष्वपि तुल्यम् इति न व्यक्तित्याग उचितः।

अपि चैतन्मते द्रव्यस्य नित्यत्वात् अवस्थाया एवानित्यत्वात् गौर्नित्येत्यत्र न गोत्वपरतासम्भवः। पतञ्जलिरप्याह पस्पशायाम् द्रव्यस्य नित्यत्वमाकृतेरनित्यत्वम् ''द्रव्यं हि नित्यम्, आकृतिरनित्या। कथं ज्ञायते? एवं हि दृश्यते लोके - मृत्कयाचि दाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते। रुचकाकृति मुपमृद्य कटकाः क्रियन्ते। कटकाकृतिमुपमृत्य स्वस्तिकाः क्रियन्ते। पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या चान्या च भवति। द्रव्यं पुनस्तदेव। आकृत्युपमर्देऽपि द्रव्यमेवावशिष्यते इति॥

ननु व्यक्तिभानस्य लक्षणयापि निर्वाहसम्भवात् न तत्र शक्तिरुचिता, लक्षणया निर्वाहेऽपि यदि शक्तिरेव चेत् कल्प्येत तर्हि लक्षणा लुप्येत, गङ्गायां घोष इत्यादावपि शक्त्यैव तीरादेर्बोधसम्भवात् इति चेत्? मैवम्। नियत-

प्रतीतिविषये शक्तिः। कादाचित्कपाश्चात्यप्रतीतिविषये लक्षणेति व्यवस्थाश्रयणेन अनुपपत्यभावात्। प्रतीतिरेव सर्वत्र शरणम्। प्रतीतिश्च व्युत्पत्यधीना। व्युत्पत्तिश्च व्युत्पादकपारम्पर्यादेव नियतत:। व्युत्पादकाश्च गोशब्दं गोत्वाधार द्रव्यविषयतया व्युत्पादयन्ति। गोत्वशब्दं पुनर्भावविषयतया। अतः निष्कर्षकानिष्कर्षकनिर्णयसिद्धिः। (लक्षणारहितशब्दलक्षणाविषयशब्दनिर्णयसिद्धिः) तस्माच्छब्दाधीनबोधः धर्मप्रकारकधर्मिविशेष्यक एव स्वरस इति तत्रैव शक्तिः।

जातिशब्दवत् गुणशब्दस्यापि द्रव्यपर्यन्ताभिधानम्। नच गुणवचनानामपि द्रव्य पर्यन्ताभिधायित्वे ततो मत्वर्थीयप्रत्ययो व्यर्थः। अन्तरेणापि प्रत्ययमिष्टसिद्धेः। ततः गुणवचनानां मतुबनुशासनं, तस्य लुगनुशासनं च विरुध्येतेति वाच्यम्। द्रव्यपर्यन्ताभिधानशक्तिमत्सु गुणवचनेषु प्रवृत्तिः कदाचित् गुणमात्रपरत्वं शुक्लोगुण इति। कदापित् गुणिपर्यन्ताभिधानं शुक्लः पट इति। येषां शुक्लादिशब्दांनां निष्कृष्य मत्वर्थीयाभिधानं वैभवादेव, न पुन र्मत्वर्थीय प्रत्ययावश्यम्भावात्। लोकव्यवहारानुरोधेन शुक्लादिशब्दानां द्वयी हि प्रयोगे द्रव्यपर्यन्ताभिधान-शक्तिर्निरुध्यते तदा मत्वर्थीय प्रयोगः स्यात्। समानाधिरण प्रयोगे शुक्लः पट इत्यादौ द्रव्यपर्यन्ताभिधानम्। गुणवद्गुणिन्यपि शक्तिसद्भावादेव'' गुणे शुक्लादयः पुंसि गुणि लिङ्गास्तु तद्वति' इति कोशः सङ्गच्छते।

तथाच शब्दाः जातिविशिष्टव्याक्तिवाचिनः इति सिद्धान्तः॥

आलङ्कारिका उपाधिशक्तिवादिनः।

''तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा''

सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम इति शक्तिस्वरूपं प्रतिपाद्य

''संङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च''

इति शब्दानां शक्तिविषयं वर्णयन्ति। यद्यपि सकलप्रयोजनसम्पादकतया व्यक्तिरेव सङ्केतसहा, तथाप्यानन्त्याद् व्यभिचाराच्च न तत्र सङ्केतो युक्तः।

अपि च व्यक्तिशक्तिवादे गौः शुक्लवर्णवान्, चलनक्रियावान्, डित्थ नामा इत्यभिप्रायेण गौः शुक्लः चलो डित्थः इति प्रयोगे गवादिभिश्चतुर्भिरपि शब्दैः एका सैव गोव्यक्तिरुच्यते इति पदार्थभेदो न स्यात्। तत्र व्यक्तेरेव पदार्थत्वात् तस्याश्च प्रकृते एकत्वात्। तथा च विषयविभागाभावे गवादिशब्दार्थानां घटः कलश इत्यादीनामिवै कार्थवाचकत्वेन सहप्रयोगो न स्यात्। उपाधिशक्तिवादे तु जातिगुणक्रियासत्तानां प्रवृत्तिनिमित्तभेदेन गवादिशब्दानां पर्यायत्वाभावात् भवति सहप्रयोगः। तत्र जातिः गोत्वादिः संस्थानविशेषाभिव्यङ्ग्या प्रत्यक्षसिद्धा गवादिपदानामभिधेया। अनुमानासिद्धा च घ्राणत्वरसनत्वादिः घ्राण रसनादिपदानाम्। अयं जातिरूपः शब्दः प्राणप्रद इत्यभिधीयते। प्राणनं प्राणो व्यवहारयोग्यता तं ददाति सम्पादयतीति प्राणप्रदः तन्निर्वाहक इत्यर्थः। सर्व गोवृत्तिर्जातिरिति यावत्। प्राणप्रदउपाधिरेव जातिरित्युच्यते। प्राणप्रदत्वं च यावद्वस्तु स्थितिसम्बन्धित्वम्। तदुक्तं वाक्यपदीये - ''गौः स्वरूपेण न गौः नाप्यगौः गोत्वाभिसम्बन्धात्तु गौरिति''। अस्यार्थः - गौः गोपदोद्देश्यः सास्नादिमान् धर्मिस्वरुपेण जातिरहितव्यक्तित्वमात्रेण, अज्ञातगोत्वकेन धर्मिस्वरुप मात्रेण वा न गोव्यवहार निर्वाहकः। नाप्यगौः नापि गोभिन्न इति व्यवहारस्य निर्वाहकः। तथा सति दूरादनभिव्यक्तसंस्थानतया गोत्वाग्रह

दशायां गवि गौरिति, गोभिन्न इति वा व्यवहारः स्यात्। स्वरूपस्याविशेषात्। घटे गौरिति गवि चागौरिति वा व्यवहारः स्यात्।

गुणो विशेषाधानहेतुर्वस्तुधर्मः शुक्लादिः शुक्लादिपदानामभिधेयः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्तयन्ति। शुक्लादिना हि लब्धसत्ताकं गवादिकं वस्तु व्यावर्त्यते इति तात्पर्यम्। उत्पन्नस्य, द्रव्यस्य गुणेन पश्चाद्योगः। एवं चोत्पन्नस्य द्रव्यस्य क्षणमेकं निर्गुणत्वम्। जातियुक्तस्यैव द्रव्यस्योत्पत्तिः। जन्मना जायते जातिरित्युक्तेः। एवं जातिगुणयोर्महान् भेदः। केचित्तु शुक्लत्वादे र्नित्यत्वाभ्युपगमे गोत्वादिना समकालमेव सम्बन्धित्वम्। तथापि तस्य सम्बन्धः कदाचित् ( पाकाद्यवस्थायां) अपैत्यपि न तु गोत्वादेरिति विशेषः इत्याहुः।

द्रव्यशब्दाः एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः। क्रिया च भावना उत्पादयितुर्व्यापाररूपा साध्यत्वे नाभिधीयमाना। जात्यादिषु चतुर्षु मध्ये ये व्यक्तेरुपाधयो धर्मा जातिगुणक्रियास्वरूपाः तेष्वेव सङ्केतो गृह्यते। संज्ञाशब्दानां तु व्यक्तावेव सङ्केतग्रहः। द्रव्यस्य व्यतिरिक्तत्वाभावेन उपाधित्वा भावेन नानात्वाभावात् उक्तदोषानव काशात्।

ननु शुक्लदीनां गुणानां चलादीनां क्रियाणां च प्रतिव्यक्तिभेददर्शनात् आनन्त्यव्यभिचारदोषस्य सत्वात् कथं गुणे क्रियायां वा शक्ति रिति चेत्? न, गुणक्रिययोः जातिवदेकत्वमेव। प्रत्यभिज्ञाबलाच्चैकताया अभ्युपगमात्! भेदप्रतीतिस्तु आश्रयभेदादौपचारिकी।

तदुक्तं गुणक्रियायदृच्छानां वस्तुतः एकरूपाणामाश्रयभेदाद्भेद इव लक्ष्यते। यथैकस्य मुखस्य खड्ग मुकुरतैलाद्यालम्बनभेदादिति।

अपरे तु हिमपयःशङ्खादिषु शुक्लादिर्गुणः परमार्थतो भिन्न एव। पाकाच्छुक्लं रूपं नष्टं श्याममुत्पन्नमिति प्रतीतेः न चेयं भ्रान्तिः, बाधकाभावात्। तथा चानुगतप्रत्ययानुरोधेन तत्रापि शुक्लत्वादिः जातिरस्ति। तत्रैव च सङ्केतः। एवमेव गुडतण्डुलपाकादिष्वपि पाकत्वादिकम्। तथा तारत्वादिविरुद्धधर्माध्यासात् बालवृद्धाद्युदीरित डित्थादिशब्देष्विव डित्थाद्यर्थेष्वपि बालाद्यवस्थापरिणतनानापरिणामरूपविरुद्धधर्माध्यासात् भिन्नेषु डित्थत्वादिकं जातिः। सैव च डित्थादिपदशक्या। अथवा बालाद्युदीरितानां शब्दानामनेकत्वात् तद्भेदेन व्यङ्ग्यस्याप्यर्थस्य भेदः। तस्मात् सर्वशब्दानां जातिरेव सङ्केतविषयः इत्याहुः।

ननु उपाधौ शक्त्यङ्गीकारे व्यक्तिलाभः कथमिति चेत्? आक्षेपेण तल्लाभः। तदुक्तम्- "व्यक्त्यविनाभावात्तु जात्या व्यक्तिराक्षिप्यते" इति। यथा क्रियत इत्या दौ कर्ता, कुरु इत्यादौ कर्म। आक्षेपोऽत्र नानुमानम्। व्याप्त्यादिज्ञानव्यतिरेकेणापि व्यक्तेरनुभवात्, किन्तु स्मरणमेव। अत एवोक्तम्- "जातिशक्तं पदं व्यक्तिमेवानुभावयति स्मारयति चेति। जातिशक्तमित्यस्य उपाधिशक्तमित्यर्थः।

वैयाकरणमते शक्यार्थःक इति विचारे अस्त्यभिप्रायभेदः। तत्रभवान् पाणिनिः सूत्रकारः आकृतिं द्रव्यं च पदार्थं मन्यते। आकृतिरित्यनेन जातिरिह विवक्षिता। क्वचिदाकृतिशब्देन अवयवसंस्थानविशेषोऽपि गृह्यते। पाणिनेः जातौ वा व्यक्तौ वा नास्त्यभिनिवेशः। शब्दसाधुत्वासाधुत्वप्रकाशनाय, साध्वनुशासनाय वा प्रवृत्तत्वात्। केवल जातिपदार्थवादिनां केवलव्यक्तिपदार्थवादिनां च मतयोरन्यतरस्मिन् पक्षपातमात्मनोऽभिनिवेशं वा कुर्वन् उभयपक्षानुकूलं सूत्राणि स प्रणिनाय। जातिं वा व्यक्तिं वा पदार्थं विवक्षाधीनमभिप्रैतीव। तमेनमर्थं भगवान्

भाष्यकारः पतञ्जलिः स्पष्टमाह - ''किं पुनराकृतिः पदार्थः? आहोस्वित् द्रव्यम्? उभयमित्याह। कथं ज्ञायते? उभयथाह्याचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा ''जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् इत्युच्यते। आख्यानमाख्या = प्रत्यायनम्। जात्याख्यायामेकस्मिनर्थे बहुवचनमन्यतरस्यां भवति। जात्यर्थो बहुवद्भवतीति यावत्। घटादिशब्दानाम् आकृत्यधिकरणन्यायेन जातिवाचकत्वात् जातेश्चैकत्वात् एकवचनमेव स्यादिति बहुत्वप्रयुक्तकार्यलाभार्थमिदं सूत्रमारब्धम्।

द्रव्यं पदार्थं मत्वा। 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेष आरभ्यते इति। सरूपाणां शब्दानामेकविभक्तौ परतः एकशेषो भवति। एकः शिष्यते इतरे निवर्तन्ते। प्रत्यर्थं शब्दनिवेशात् नैकेनानेकस्याभिधानम्। तत्रानेकार्थाभिधाने अनेकशब्दत्वे प्राप्ते एकशेष आरभ्यते।

सकलशास्त्रव्यवस्था एकतरपक्षाश्रयणे न सिद्ध्यतीति पक्षद्वयाश्रयणं कृतम्। आकृतिपक्षे केवले अश्रीयमाने सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति नोपपद्यते। तत्र उद्देश्यतावच्छेदकजात्याक्रान्ते क्वचिच्चरितार्थयोः द्वयोः सूत्रयोः सत्प्रतिपक्षन्यायेन विरोधस्थले उभयोरप्यप्राप्तौ विप्रतिषेधे परं कार्यमिति सूत्रं विध्यर्थं न तु नियमार्थमिति सकृद्गताविति न सिध्यति। केवलेऽपि व्यक्तिपक्षे आश्रीयमाणे पुनः प्रसङ्गविज्ञानात्सिद्धमिति'' न घटते। व्यक्तिपक्षे तत्तव्द्यक्तिविषययोरपि शास्त्रयोरचारितार्थ्यात् पर्यायेणोभयप्राप्तौ नियमार्थं विप्रतिषेधसूत्रमिति ''पुनः प्रसङ्गविज्ञानादिति न सिध्यति। तस्माल्लक्ष्यसिद्धये क्वचित्प्रदेशे कश्चित्पक्षः परिगृह्यते। एष च सूत्रानुरोधेन निश्चितोऽभिप्रायः।

सत्यप्येवं शब्दशक्यार्थविषये नैकमत्यं भजन्ति पाणिनिव्याकरणानुसारिण एव वैयाकरणाः। नैयायिकेष्वि-व अस्ति पक्षभेदः शाब्दिकेष्वपि। जातिमात्रवादिनः केचित्। व्यक्तिमात्रवादिनः केचित्। उभय वादिनः केचित्।

केचित् जातिरेव शब्दार्थः जातिर्नाम तत्तत्पदार्थासाधारणो धर्मः प्रवृत्तिनिमित्तमिति यावत्। एषैव जातिः स्वार्थशब्देन शास्त्रेस्मिन् ᳵ व्यवह्रियते। जातिवादे एव व्याकरणशास्त्राचार्याणां सूत्रवार्तिकभाष्यकारासम्मतिं युक्तिं चोत्प श्यन्तः ते वैयाकरणाः जातिपक्षमेवाद्रियन्ते।

''जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् इति सूत्रम्, ''सवर्णे अण्ग्रहणमपरिभाष्यम् आकृतिग्रहणात्सिद्धम्'' इति वार्तिकम्,'' एका अवर्णाकृतिः उपदिष्टा सा सर्वमवर्णकुलं ग्रहीष्यति, तथा वर्णाकृतिः आकृतिं वाजप्यायनः, एका आकृतिः सा च शब्देनाभिधीयते'' इत्यादिसरूपसूत्रस्थं भाष्यं च जातिवाचित्वे प्रमाणं ब्रुवते। ''जातिरेव पदार्थो लाघवात्। पूर्वं व्यवहारेण व्यक्तौ शक्तिग्रहेपि आनन्त्यात् तावतीषु शक्तिग्रहासम्भवात् तत्तदाश्रयभेदभिन्ननानाशक्तिकल्पने गौरवात् पश्चाज्जातावेव निर्धार्यते'' इति जातिमात्रशक्तिवादिनां युक्तिमेवावलम्बन्ते।

सा च जातिः एकाकारप्रत्ययदर्शनात् अस्तीत्यवसीयते। शुद्धव्यक्तिवाच्यत्वे गौर्गौरित्येकाकारप्रतीतिर्न स्यात्। 'नागृहीतविशेषणन्यायेन च प्रथमत आकृतेरेवोपस्थित्या तत्रैव शक्तिरुचित च। तत्र गवादयाः शब्दाः भिन्न द्रव्यसमवेतां जातिमिदधति (अभिधाविषयत्वेन गृह्णन्ति) तस्यां जात्यां प्रतीतायां (शब्दशक्यत्वेन गृहीतायां तदावेशात् (तत्समवायात्) तदवच्छिन्नं द्रव्यं प्रतीयते। अविनाभावात् शब्दजन्यबोधविषयो भवति। शुक्लादयः शब्दा अपि गुणसमवेतां जातिमाचक्षते। गुणे तु तत्सम्बन्धात् प्रत्ययः। द्रव्ये च तत्सम्बन्धिसम्बन्धात्। संज्ञा-

शब्दानामपि उत्पत्तिप्रभृत्यविनाशात् पिण्डस्य कौमारयौवनाद्यवथाभेदेऽपि स एवायमित्यभिन्नप्रत्ययनिमित्ता डित्थ- त्वादिका जातिर्वाच्या। क्रियास्वपि जातिर्विद्यते। सैव धातुवाच्या। पठति पठतः पठन्ति इत्यादेः अभिन्नस्य प्रत्ययस्य सद्भावात् तन्निमित्त जात्यभ्युपगमः।

''चतुष्टयी शब्दानां प्रवृत्तिः - जाति शब्दाः, गुणशब्दाः, क्रियशब्दाः यदृच्छाशब्दाश्चतुर्थाः'' इति भगवता पतञ्जलिना यदृच्छाशब्दानामपि सद्भावोऽङ्गीकृतः। तत्पक्षमवलम्ब्य सत्ताशब्दस्थलेऽपि जातेर्वाच्यत्वमुक्तम् संज्ञाशब्दा एव यदृच्छाशब्दत्वेन व्यपदिष्टाः। अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्तते स यदृच्छाशब्दो डित्थादिरिति कैयटः स्वेच्छया एकस्यां व्यक्तौ संकेत्यमानः शब्दो यदृच्छाशब्द इति यावत्। ''अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'' इति सूत्रारम्भाच्च सन्ति यदृच्छाशब्दा इत्यवगम्यते, इति च कैयटः।

न सन्त्येव यदृच्छाशब्दाः, त्रयी शब्दानां प्रवृत्तिः जातिशब्दाः, गुणशब्दाः क्रियाशब्दाश्चेति पक्षान्तरं भाष्यकारेण दर्शितम्। अत्र पक्षे शास्त्राबोधिताधुनिकसंकेतरूपायां संज्ञायां पाणिन्यादिस्मृतिबोधितायाः शक्तेरभावात् लक्षणैव शरणम्। मुख्यपदार्थगतान् गुणक्रियादीन् आरोप्य तन्मूलकतयैव तत्तत्पदार्थगतस्य प्रवृत्तिनिमित्तस्यारोपेण तत्प्रकारतयैव बोधः। ततश्चैतादृशस्थले न शक्तिः। किन्तु लक्षणैव। स्वशक्तसङ्केतविषयत्वं सम्बन्धः। स्वस्मिन् मुख्यार्थे शक्तं यत्पदं, तस्य यः सङ्केतः तद्विषयत्वम्।

ननु सर्वशब्दानां जातिमात्रवाचित्वाभ्युपगमे 'गां दद्यात्'', 'व्रीहीनवहन्ति' इत्यादौ दानावहनन- कर्मत्वान्वयानुपपत्तिः, जाते स्तदन्वया योगात्। न च जात्याक्षिप्तव्यक्तौ दानकर्मत्वाद्यन्वय इति मीमांसक रीतिः साध्वी, वृत्यानुपस्थितत्वेन व्यक्तौ अन्वयानुपपत्तेस्तदवस्थत्वात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। पदार्थान्तरान्वयस्य चाक्षिप्तेऽ योगात्।

उक्तंच - ''गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम्।
शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत्॥

यथाकथञ्चिदुपस्थितार्थे प्रत्ययार्थान्वयो यदि घटं पश्यतीत्यादौ शब्दाश्रयतया उपस्थिताकाशेऽपि दर्शनकर्मत्वान्वयापत्तेः। तस्माज्जातिपक्षे क्रियाद्यन्वयानुपपत्तिरिति चेत्?

उच्यते - निरूढलक्षणया, जातिव्यक्त्योरभेदाद्वा व्यक्तेर्लाभः। एवं च व्यक्तेरपि भानात् तत्र दानादिक्रियाकर्मत्वान्वये न किमपि बाधकम्। प्रकृतिनिष्ठलक्षणाख्यवृत्युपस्थितत्वेन प्रकृत्यर्थताया निर्बाधत्वात् प्रत्ययार्थस्य तत्रान्वयस्य सुलभत्वात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व नियमविरोधस्य नावकाशः।

उक्तं च भट्टैः - 'तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धचोदना' इति।

ननु लक्षणाश्रयेण उक्तानुपपत्तिपरिहारः न सङ्गच्छते, व्यक्तौ यदि लक्षणाश्रियते तदा युगपद्वृत्तिद्वय विरोधनियमभङ्गः। गौरस्तीति वाक्यात् अनुभूयमानव्यक्तिबोधानुपपत्तिः। लक्षणाबीजस्यान्वयानुपपत्तेस्त त्राभावेन लक्षणाया अनवकाशात् इति चेत्?

मैवम्। सति तात्पर्ये गङ्गायां मीनघोषौ स्तः इत्यादौ वृत्तिद्वयस्य युगपत्सर्वैरेवाङ्गीकारात्। युगपद्वृत्तिद्वयविरोध इत्यस्य युगपच्छक्तिः तात्पर्याविषये लक्षणा च नेत्येवंपरत्वात् न विरोधः। गङ्गायां घोष इत्यत्र

घोषपदस्य मीने लक्षणाश्रयणेऽपि अन्वयानुपपत्तिपरिहारसम्भवेन तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वस्यावश्य कत्वात् युक्तत्वाच्च।

किञ्च नीलमानयेत्यादौ नीलपदस्य नीलरूपवति लक्षणाभ्युपगमेन व्यभिचारात् युगपद्वृत्तिद्वयविरोध इति नियमे मानाभावः।

यदितु युगपच्छक्तिः, तात्पर्यविषयेऽपि लक्षणा नोचिता, युगपद्वृत्तिद्वयविरोध इति वचनस्य तात्पर्याविषये लक्षणानेति सङ्कोचकल्पनापि न युक्ता, अभियुक्तवचनस्याप्रामाणिकत्वकल्पनमपि न युक्तमित्याग्रहः तर्हि मा भूद्व्यक्तौ लक्षणा उक्तस्थले, जातिव्यक्त्योः अभेदाश्रयणात् क्रियान्वयस्य प्रत्ययार्थान्वयस्यचोपपत्तिः। उक्तं च महाभाष्ये "अव्यतिरेकात् द्रव्याकृत्योरिति"। अव्यतिरे कादित्यस्य वास्तवभेदाभावादित्यर्थः। एतदवलम्ब्यैव

"व्यक्त्याकृत्योरभेदो वा वाक्यार्थेषु विवक्षितः।"

इत्याहुर्भट्ट पादाः। तस्मात् जातिरेव शब्देन प्रतिपाद्यते इति जाति वादिनां शाब्दिकानामाशयः।

वाजप्यायनो नामाचार्यः अकृतिशक्तिवादी। सच, एका आकृति रस्ति, साचाभिधीयते शब्देनेति मन्यते। तन्मतं भगवता भाष्यकारेण वर्णितं भाष्ये सरूपसूत्रे। वाजप्यायनः बहुभिः प्रकारैः जातिवादं समर्थयति। तदनुयायिनः इतरे वैयाकरणा अपि जातिमात्रवादिनः।

वाजप्यायनेन आकृतिवाचित्वस्यावश्यकत्वे प्रदर्शितासु युक्तिषु सर्वाभिनन्दनीयाः काश्चिदेवात्र प्रदर्शयामः-

1) अव्यपवर्गगतेश्च मन्यामहे आकृतिरभिधीयते इति। न हि गौरित्युक्ते व्यपवर्गो (भेदो) गम्यते शुक्ला-नी ला- कपिला कपोतिकेति।

2) ज्ञायते खल्वप्येकोपदिष्टम्। गौरस्य कदाचिदुपदिष्टो भवति। सः तमन्यस्मिन् देशे अन्यस्मिन् काले अन्यस्यां च वयोवस्थायां दृष्ट्वा जानाति अयं गौरिति।

3) धर्मशात्रं च तथा। एवं च कृत्वा धर्मशास्त्रं प्रवृत्तम्- "ब्राह्मणो न हन्तव्यः" "सुरा न पेयेति" ब्राह्मणमात्रं न हन्यते, सुरामत्रं न पीयते। यदि द्रव्यं पदार्थः स्यात् एकं ब्राह्मणमहत्वा, एकां च सुरामपीत्वान्यत्र कामचारः स्यात्। एकस्यैव द्रव्यस्य ब्राह्मणशब्दवाच्यत्वात्। एकः क इति चेत्? यो यस्य तद्वाक्यश्रवणकाले बुद्धिस्थः स इति भावः। तथा च एकैनैकस्या हनने जातः शास्त्रार्थ इति अन्यब्राह्मणविषये कामचारः स्यात्।

4) द्रव्याभिधाने सत्याकृतेरसंप्रत्ययः स्यात्। तत्र को दोषः? तत्र असर्वद्रव्यगतिः प्राप्नोति। असर्वद्रव्यगतौ को दोषः? गौरनुबन्ध्योऽजोऽग्नीषोमीय इति एकः शास्त्रोक्तं कुर्वीत अपरोऽशास्त्रोक्तं। अशास्त्रोक्ते च क्रियमाणे विगुणं कर्म भवति। विगुणे च कर्मणि फलानवाप्तिः।

अयं भावः - एकः शब्दः प्रत्यर्थनिवेशित्वात् एकं द्रव्यं गोरूपं बोधयेत्। तस्य केनचिदालम्भे कृते, परैः तेन वा गवान्तरालम्भे अशास्त्रार्थः स्यात्। अशास्त्रीये कर्मण्यनुष्ठिते फलं कथं स्यादिति।

तस्मादाकृतिरेव शब्दार्थो वक्तव्य इत्याशयः। अपरे तु पुनर्वैयाकरणाः व्यक्तिमात्रशक्तिवादिनः। ते किल एवं मन्यन्ते। केवलव्यक्तिरेव शब्दार्थः। केवलव्यक्तिपक्षस्यापि शास्त्रे बहुशो दर्शनात्। व्यक्तिपक्षे एव अणुदित्सवर्णस्य

चाप्रत्ययः इति सूत्रस्थमण्ग्रहणं सार्थकम्। अन्यथा अत्वादिजात्यवच्छिन्नसकलव्यक्ति भानसम्भवेन अण्ग्रहणं व्यर्थं स्यात् । एवं'' सरूपाणामेकशेषएकविभक्तौ ''इति एकशेषारम्भोऽपि व्यक्तिपक्षज्ञापकः । द्रव्याभिधानं व्याडिराचार्यो न्याय्यं मन्यते, द्रव्यमभिधीयते इत्यादि भाष्यमपि मानम् इति ॥

व्याडिर्नाम व्याकरणाचार्यः द्रव्यमेवाभिधीयते इत्याह । द्रव्यं व्यक्तिरिति पर्यायौ । तस्यायमाशयः । विकल्पाक्षमत्वेन जातिर्नाम नास्त्येव । जातिर्यदि द्रव्येषु व्यासज्यवृत्तिः एकाश्रयनाशे अप्रतीत्यापत्तिः । व्यासज्यवृत्तिर्जातिः सर्वव्यक्तिभिस्सम्भूय अभिव्यज्यते इति पक्षे अभिव्यञ्जकविनाशे जातेस्तिरोभावात् एकस्मिन् शुनि मृते पिण्डान्तरे श्वेतिप्रत्ययो न स्यात् शतप्रत्यय इवैकापाये । आश्रयापाये आश्रितस्यापाय इव जातेर्विनाशप्रसङ्गः। गामालभेतेत्यादिचोदनासु सर्वद्रव्यालम्भापत्तिः । प्रत्येकसमाप्तौ तु द्रव्यान्तरे तदनापत्तिः । तत्रापि सत्वे एका आकृतिरिति प्रतिज्ञाहानिः ।

व्यक्त्य भिध ने सत्येव लिङ्गवचनानि सिद्धानि भवन्ति ब्राह्मणी ब्राह्मणः, ब्राह्मणौ ब्राह्मणाः इति । आकृतिपक्षे इदं नोपपद्यते ।

चोदनासु च तस्य द्रव्यस्यारम्भान्मन्यामहे द्रव्यमभिधीयते इति । गौरनुबन्ध्योऽजोऽग्नीषोमीय इति । आकृतिवादिपक्षे शब्देनाकृतिश्चोद्यते द्रव्ये तु कार्यं प्रवर्तते । अयुक्तं चैतत् । नह्यन्यचोदने अन्यस्य कार्ये क्रियमाणे यथोक्तं कृतं भवति । तस्मात् द्रव्यमेव शब्देनोच्यते इति न्याय्यम् ।

अस्ति खल्वपि वैरुप्यम् - गौश्च गौश्चेति खण्डो मुण्ड इति । न ह्येकस्य भेदाभेदौ विरुद्धावुपपद्येते। तस्मात् द्रव्यमेव पदार्थः ।

द्रव्यपक्षे एव च गौश्च गौश्चेति विग्रहः उपपन्नो भवति । एकार्थत्वे पर्यायाणामिव सहप्रयोगो न स्यात् ।

आकृतावपि पदार्थे एकशेषो वक्तव्यः अक्षा इति । न हि शकटाक्षदेवनाक्षादिषु एकाकृतिसद्भावः अतः विजातीयानेकार्थरूपशब्देषु एकशेषः अकृतिवादिनोऽपि आवश्यक एवेति द्रव्यपेक्षे एकशेषारम्भप्रयुक्तगौरवमधिकं न । तस्मात् द्रव्यमेव (व्यक्तिरेव) पदार्थ इति व्याडिमतम् ।

तदनुसारिणः एते वैयाकरणाः द्रव्यं शब्दार्थं समर्थयन्तः शक्त्यभावेऽपि जातेर्भानमुपपादन्त्येवम् शक्यसम्बन्धरुपायाः लक्षणाया एकस्याः लक्ष्ये लक्ष्यतावच्छेदके च असम्भवेऽपि लक्ष्यार्थप्रतीतौ लक्ष्यतावच्छेदकभानवत् शक्यतावच्छेदके शक्त्यभावेऽपिशक्त्या शक्यव्यक्तिप्रतीतौ शक्यतावच्छेदकजातिभानं निष्प्रत्यूहम् । शक्तिपरिच्छेदकशिरोमणिना व्यवहारेण व्यक्तावेव तत्परिच्छेदात् व्यक्तावेव शक्तिर्न्याय्या । न च व्यक्तौ गृहीतापि शक्तिः अग्रे बाध्यते लाघवात् इति वाच्यम्, प्रथमगृहीतस्य बाध्यत्वे प्रमाणाभावात् । अनन्तव्यक्ति शक्तिकल्पनाभिया बाधो युक्त इति चेत् ? तथासति ''निषादस्थपतिं याजयेत्'' इत्यत्र प्रथमं जातस्य कर्मधारयनिश्चयस्य अग्रे अपूर्वविद्याकल्पनाभिया बाधः प्रसज्येतेति निषादस्थपत्यधिकरणविरोधः ।

ननु प्रथमगृहीतस्य बाधकज्ञानबाध्यत्वाभावे पूर्वं गृहीतस्य चन्द्रमण्डलप्रमाणस्यापि तर्हि बाध्यत्वं न स्यादिति चेत्? न, बाधो नाम अप्रामाण्यज्ञानम् । अप्रामाण्यज्ञानेन बाध्यते एव । चन्द्रमण्डलप्रमाणं पूर्वमिन्द्रियेण परिमिततया गृहीतमपि ज्योतिश्शास्त्रेण अपरिमित (महत्) प्रमाणमिति बोध्यमानतया बाध्यते न तु लाघवेन हेतुनेति युक्तं बाध्यत्वम् । अत्र तु व्यक्तिग्रहः न तथा अप्रामाण्यज्ञानेन बाध्यते, किन्तु लाघवज्ञानेनेति वैषम्यात् ।

किञ्च आकृतिवाच्यत्वे गां दद्यात् इत्यत्रानुपपत्तिः। गोत्वादेः दानाद्यसम्भवात्। लक्षणया तु न निर्वाहः। व्यक्त्यन्तरे शक्यसम्बन्धाग्रहात्। न च व्यक्तिशक्तिर्यदि, शक्त्यानन्त्यप्रसङ्गः व्यक्तीनामानन्त्यात् इति वाच्यम्, शक्यतावच्छेदकस्य (जातेः) ऐक्यात् शक्तिरप्येकैवेति न गौरवम्। शक्यतावच्छेदकभेदे एव शक्तेर्भेदाभ्युपगमात्।

ननु गोत्वादेर्जातेः यदि शक्यतावच्छेदकत्वं तर्हि जातिरपि शक्या स्यात्, शक्यत्वे सति शक्यविशेषणस्यैव शक्यतावच्छेदकत्वनियमात्। तथाच विशिष्टज्ञाने विषेषणज्ञानस्य कारणत्वेन उपजीव्यत्वात् नागृहीतविशेषणन्यात् जातिरेव वाच्या स्यात्। यद्यप्यस्मान्यात् विशेषणविशिष्टे शक्तिरित्येव लभ्येत, तथापि "विशेष्यं नाभिधा गच्छेत्" इति न्यायान्तरेण विशेषणे एव शक्तिबोधनात् इति चेत्? मैवम्। दण्डत्वस्यान्यथासिद्धत्वेन घटं प्रत्यकारणत्वेपि कारणतावच्छेदकत्ववत् तीरत्वस्यालक्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्ववत्, अव्यापकस्यापि व्यापकतावच्छेदकत्ववच गोत्वादेः अशक्यत्वे पि शक्यतावच्छेदकत्त्वं सम्भवति।

उक्तं च हरिणा - "आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।

शब्दः सुकरसम्बन्धो नच व्यभिचरिष्यति इति। व्यक्तीनां नानात्वात् अपरिच्छेद्यत्वेऽपि अनुगतजात्यादिधर्ममेकमुपलक्षणम्, अशक्यत्वेऽपि शक्यव्यावर्तकं कृत्वा अभ्युपगम्य गवाद्यात्मकः शब्दः सुग्राह्यगवादिनिष्ठवाच्यता-सम्बन्धो भवति। सुकरशक्तिग्रहो भवति। अत्र पद्ये सम्बन्धपदं शक्तिग्रहणपरम्। गोत्वादिसामान्यलक्षणया सर्वास्वेव व्यक्तिषु शक्त्यवधारणात् शक्तिग्रहाविषयव्यक्तिं न बोधयिष्यति इति कारिकार्थः।

जातेरुपलक्षणसत्वं हेलाराजोऽप्याह - व्याडिमते तु सर्वशब्दानां द्रव्यमर्थः। तस्यैव साक्षात् क्रियासमन्वयोपपत्तेः। वाक्यार्थाङ्गतया चोदनाविष डयत्वात् अनभिधीयमानापि जातिरुपलक्षणीक्रियते शब्दार्थे यथा गृहादौ काकादिरिति। तस्मात् व्यक्तिरेव शब्दार्थः इति व्यक्तिवादिनिर्णयः।

भाष्यतात्पर्यग्राहिणः वैयाकरणास्तु जातिविशिष्टव्यक्तिशक्तिवादिनः।" नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वा आकृतिर्नपदार्थः। उभयोरुभयं पदार्थः," इति सरूपसूत्रस्थभाष्यात् विशिष्टमेव वाच्यम्। तत्र जातेः कदाचित् प्राधान्येन मानं तात्पर्यग्रहणसापेक्षम्। कदाचित् तात्पर्यबलादेव द्रव्यस्य प्राधान्यम्। तत्राकृतेः प्राधान्ये "ब्राह्मणो न हन्तव्यः, सुरा न पेया" इति एकत्वं स्वरसतः उपपद्यते। द्रव्यप्राधान्ये च ब्राह्मणी, ब्राह्मणः, ब्राह्मणौ ब्राह्मणाः इति लिङ्गवचनयोगः स्वरसतः उपपन्नो भवति। जातेः प्राधान्ये च निरवच्छिन्न या एवा व्यक्तेः प्रकारताविशेष्यीभूतजात्या च तदनुगमः। न हि प्रकारीभूतमेवानुगमकमिति नियमोऽस्ति। तेन एक व्यक्तेः प्रकारत्वे व्यक्त्यन्तरे कार्यान्वयानुपपत्तिर्न। व्यक्तिनिष्ठप्रकारतायाः जात्यानुगतीकृतत्वेन तत्र कार्यान्वयसम्भवात्। न च विशेष्यार्थगतसंख्याया एवं विभक्त्याभिधानात् अनेकव्रीहितात्पर्येण संपन्नो व्रीहिरिति न स्यादिति वाच्यम्। तत्र सुप्रत्ययार्थैकत्वस्य स्वाश्रय (एकत्वाश्रय) प्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन व्रीहावन्वयेनादोषात् इति वदन्ति।

व्याकरणशास्त्रोदधौ प्रविष्टाः विमर्शनचणाः वैयाकरणाः एतावता सन्तुष्टाः लिङ्गसंख्याकारकाणि च प्रातिपदिकार्थ इति वदन्ति।

लिङ्गमपि नामार्थः प्रत्ययानां द्योतकत्वात्। अन्यथा वाग्, उपानत्, एवमादिशब्देभ्यः इयं तव वागिति स्त्रीत्वबोधानापत्तेः। लिङ्गस्य च नामार्थत्वे ह्रस्वो नपुंसके प्रातिपदिकस्य," "स्वमोर्नपुंसकात्", "राताहाहाः पुंसि" इत्यादीनि पाणिनिसूत्राणि प्रमाणानि। रमादिशब्देष्वपि प्रत्ययानां द्योतकत्वमेव। वाचकत्वे तु

''प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्यायार्थस्य प्राधान्यमिति लिङ्गस्य प्राधान्यापत्तिः। अयमिति व्यवहारविषयत्वं पुंस्त्वम्। इयमिति व्यवहारविषयत्वं स्त्रीत्वम्। इदमिति व्यवहारविषयत्वं क्लीबत्वमिति विलक्षणं शास्त्रीयं स्त्रीपुंनपुसकत्वम्। न तु 'स्तनकेशवती' इत्यादिलक्षितं लौकिकं लिङ्गम्। अन्यथा खट्वादिशब्देभ्यः टाबाद्यनुत्पत्तेः।

संख्यापि नामार्थः - विभक्तीनां द्योतकत्वात्। दधि मधु इत्यादौ विभक्तिं विनापि संख्याप्रतीतेरनुभवसिद्धत्वात्।

कारकमपि प्रातिपदिकार्थः - दधि तिष्ठति, दधि पश्येत्यादौ विनापि प्रत्ययं कर्त्रादिकारकप्रतीतेरनुभवसिद्धत्वात् अन्वयव्यतिरेकाभ्यां प्रत्ययवाच्यत्वमेवेत्यस्य नावकाशः। प्रत्ययलोपमजानतोऽपि बोधात् लुप्तप्रत्ययस्मरणेन प्रत्ययरहितस्थले प्रतीतिर्भवतीति वक्तुं न शक्यते।

इत्थं च पञ्चकं प्रातिपदिकार्थ इति सिद्ध्यति। स्वार्थद्रव्यलिङ्गसंख्याकारकाणां प्रातिपदिकार्थत्वम् ''अनभिहिते'' इति सूत्रभाष्ये स्पष्टम्।

अयमन्यो विशेषः वैयाकरणानां समये - यत् शब्देऽपि शक्तिः शब्दस्य। शाब्दबोधे शब्दस्यापि भानात्। 'युधिष्ठिर आसीत् इत्यादौ युधिष्ठिरशब्दवाच्यः कश्चिदासीदिति बोधस्य सर्वानुभवसिद्धस्यापलपितुमशक्यत्वात्।

उक्तं च हरिणा - ''न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते। इति विष्णुमुच्चायेत्यादौ अर्थोच्चारणासम्भवात् शब्दप्रतीतिरावश्यकी। अत एवानुकरणेन अनुकार्यस्वरूपप्रतीतिः। किन्तु शब्दे शक्तिः अर्थ प्रतिपादिकायाः शक्तेर्विलक्षणा। शक्तिः द्विविधा। ग्राह्याग्राहिका चेति। ग्राहिका अर्थे। ग्राह्या च शब्दे।

तदप्युक्तं हरिणा - ''ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा। तथैव सर्वशब्दानामेते पृथगवस्थिते। ''इति ग्राह्यत्वं बोध्यत्वम्। ग्राहकत्वं बोधकत्वम्। पृथगवस्थिते इत्यनेन दर्शयति। दीपादिरूपतेजसो विषयसंनिधाने शक्तिद्वयं लोके प्रत्यक्षसिद्धम्। तदसमवधाने तु ग्राह्यत्वमेव यथा, तथा शब्दानामपि अर्थाबाधे शक्तिद्वयम्। अर्थबाधसत्वे तु ग्राह्यत्वमेव। ''विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते'' शब्दस्य शाब्दबोधविषयत्वमसम्पाद्य शब्दैर्नार्थो बोध्यते इत्यर्थः॥

**शक्त्याश्रयविचारः**

शक्तिपदार्थे निरूपिते शक्त्याश्रयः क इति संप्रति विचार्यते शक्त्याश्रयविषयेऽपि विप्रतिपद्यन्ते विपश्चितः!।

रामादीनां प्रत्येकं वर्णाः शक्त्याश्रया न एकवर्णोच्चारणानन्तरमर्थप्रतीतेरदर्शनात्, द्वितीयादिवर्णोच्चारणवैयर्थ्यप्रसङ्गाच्च। नापि संहताः, उच्चरितप्रध्वंसिनां तेषां साहित्यासम्भवात्। तेषामुत्पत्तेरभिव्यक्तेर्वा क्षणस्थायित्वात्। वर्णानामुच्चरितप्रध्वंसित्वं सर्वानुभवसिद्धम्। ''परः संनिकर्षः संहिता'' इति सूत्र भाष्ये स्पष्टमुक्तमुच्चरितप्रध्वस्तानां संनिकर्षः पौर्वापर्यं चानुपपन्नमिति। तत्र हि 'पौर्वापर्यमकालव्यपेतं संहिता चेत् पूर्वापराभावात् संहितासंज्ञां न प्राप्नोति। न हि वर्णानां पौर्वापर्यमस्ति। किं कारणम्? एकवर्णवर्तित्वाद्वाचः, उच्चरितप्रध्वंसित्वाच्च वर्णानाम्। एकैकवर्णवर्तिनी वाग् न द्वौ युगपदुच्चारयति। गौरिति गकारे यावद्वाग्वर्तते नौकारे,

न विसर्जनीये। यावत् औकारे न गकारे न विसर्जनीये। यावद्धि सर्जनीये, न गकारे नौकारे। उच्चरितप्रध्वंसित्वात् । उच्चरितप्रध्वंसिनः खल्वपि वर्णाः। उच्चरितः प्रध्वस्तः। अथापरः प्रयुज्यते न वर्णो वर्णस्य सहायः इत्युक्तम्।

अत्र तार्किकाः- वर्णानामनित्यत्वेऽपि तदीयसंस्काराणां यावत्कार्यं स्थिरत्वेन तद्बलात् उत्तरवर्णप्रत्यक्षकाले अव्यवहितोत्तरत्वसम्बन्धेन पूर्ववर्णवत्वं तदुत्तरवर्णे स्मर्यते। एवं तदुत्तरवर्णप्रत्यक्षकाले स्मृतपूर्वतद्वर्णविशिष्ट तद्वर्णवत्वं तदुत्तरवर्णे स्मर्यते इत्येवं क्रमेण सकलवर्णात्मकपदवाक्यविषयकं स्मृतिसम्भिन्नप्रत्यसात्मकं ज्ञानं सुलभमिति पदस्य शक्त्याश्रयत्वं घटते।

अथवा उच्चरितो वर्णः क्षणस्थाय्यपि क्षणावस्थितिकाले एव स्वसमानाकारं वर्णान्तरमुत्पाद्य ततो नश्यति सचोत्पन्नस्तादृगेव स्वसमानाकारमुत्पाद्य नश्यति इत्येवंक्रमेण श्रोतुः श्रोत्रदेशे चरमवर्णस्य श्रवणं यावत् पूर्वपूर्ववर्णोत्पन्नो वर्णो जायमान एव तिष्ठतीति न पदप्रत्यक्षानुपपत्तिः। अतः पदस्य शक्त्याश्रयत्वमुपपद्यते।

यद्वा - पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णानुभवजन्यसंस्कारः तावद्वर्णगोचरं समूहालम्बनं स्मरणं जनयतीति स्मृतौ साहित्यसम्भव इति स्मृतपदस्य शक्त्याश्रयत्वं सङ्गच्छते इति। तन्न सहन्ते वैयाकरणाः। उक्तेषु त्रिष्वपि पक्षेषु दोषनुदाहरन्ति। तथाहि -

आद्यपक्षे नष्टस्य प्रत्यक्षविषयेदमा परामर्शायोगेन अयं पूर्वः अयं पर इति इदंशब्द घटिताभिलापाभिलप्यमान-पौर्वापर्यज्ञानस्य असम्भवेन नष्टविद्यमानयोरव्यवहितोत्तरत्वायोगात्, नष्टविद्यमानयोः अव्यवहितोत्तरत्वस्य सम्बन्धताया वक्तुमशक्यत्वाच्च पदप्रत्यक्षोपपत्तेर्नावकाशः।

द्वितीये, शब्दजशब्दन्यायेन प्रत्यक्षसम्भवेऽपि नष्टत्वेन तत्र पदे शक्त्याश्रयत्वग्रहानुपपत्तिः। अविद्यमानेप्याश्रयत्वाङ्गीकारे नष्टो घटो जलवान् इति व्यवहारस्य प्रमात्वापत्तेः।

तृतीये, येन क्रमेणानुभवः तेनैव क्रमेण तत्संस्कारस्थितावपि तेनैव क्रमेण तदुद्बोधोपीत्यत्र मानाभावेन सरो रसो नदी दीन इत्यादौ कदाचित् विपरीत संस्कारोद्बोधे विपरीतस्मरणेन प्रत्येकमन्यार्थप्रत्ययापत्तेः। दृश्यते च लोके दृढतरसंस्काराभावे व्युत्क्रमेणापि स्मृतिः। इहापि सकृद्वर्णश्रवणे दृढतरसंस्काराभावस्य सत्वात्।

कस्तर्हि शक्त्याश्रय इति चेत्? अत्राहु वैयाकरणाः स्फोटात्मा शब्द इति। स्फुटत्यर्थो अस्मादिति व्युत्पत्या अर्थप्रतिपादकः शब्दविशेषः स्फोटः।

भाष्ये तु वर्णानां पौर्वापर्याभावमाशङ्क्योक्तम् - एवं तर्हि

''बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम्॥

बुद्धिविषयमेव पौर्वापर्यम्। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थे अयं शब्दः प्रयोक्तव्यः, अस्मिंस्तावच्छब्देऽयं तावद्वर्णः ततोऽयं ततोऽयमिति। शब्दान् तदर्थांश्च बुद्धिरुपदेशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यात् इत्यर्थः। तथा च वर्णानां नाशेऽपि बुद्ध्युपारुढतया वर्णसमुदायस्य शक्त्याश्रयत्वे नानु पपत्तिरिति लभ्यते। व्याख्याकारास्तु स्फोटपरतया भाष्यवचनं नयन्ति॥इति शम्॥

# निपातघटितवाक्येषु शाब्दबोधविचारः

*विद्वान्. यम्. रङ्गनाथ शर्मा*

प्राग्रीश्वरान्निपाताः (१-४-५६) इति पाणिनिसूत्रेण केषाञ्चन शब्दानां निपातसंज्ञा विधीयते । सर्वे निपाता अव्ययेष्वन्तर्भवन्ति, 'स्वरादि निपातमव्ययम्' (१-१-३७) इति सूत्रेण तेषामव्ययसंज्ञा विधानात् । निपतानामनल्पत्वात् प्रधानानामेव केषाञ्चिद्योगे शाब्दबोधप्रकारोऽत्र चिन्त्यते । एतद्घटितवाक्येभ्यो जायमानशाब्दबोधप्रकारे निपातप्रयुक्तं यद्वैलक्षण्यं तन्मात्रकप्रदर्शनेऽयमुद्यमो न तु समग्रवाक्यजन्यस्य शाब्दबोधस्वरूपस्य प्रदर्शने, तस्य प्रकृतेऽनुद्दिष्टत्वात् अनपेक्षितत्वात् उपन्यासकालस्य परिमितत्वाच्च । सह, विना - इत्यादीनां केषाञ्चिदव्ययानां निपातसंज्ञाभावेऽपि तद्घटितवाक्येषु शाब्दबोधप्रकारोऽत्र प्रसङ्गाद्विचार्यते, समानयोगक्षेमत्वात् तदर्थान्वयस्य । विचारश्च प्रायेण वैयाकरणमतानुरोधेन । यद्यपि वैयाकरणमते निपातानां द्योतकत्वाङ्गीकारात् सर्वोऽप्यर्थविशेषः समभिव्याहृतपदानामेवेति द्योत्यार्थस्य अन्वयप्रसङ्गो नास्ति तथापि सोऽयमर्थविशेषः कुत्र कुत्र केन रूपेण भासते इत्यवबोधार्थं तद्विचारः प्रवर्तितः शास्त्रकारैः ।

## १. अथ नञर्थः

अत्र पक्षद्वयम् । आरोपो नञर्थ इत्येकः पक्षः। अभावस्तदर्थ इति द्वितीयः । आरोपो नाम तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकप्रतीतिः । तदभाववति तत्प्रकारकं ज्ञानमिति यावत् । न चायं भ्रमः। आहार्यत्वात् । अब्राह्मण इति नञ्समासे आरोपो नञर्थः । विषयत्वं संसर्गः। आरोपश्च समभिव्याहृतपदार्थप्रवृत्तिनिमित्ते । अब्राह्मण इत्यस्य आरोपविषयब्राह्मणत्ववान् इत्यर्थः । आरोपश्च ब्राह्मणभिन्ने ब्राह्मणत्वाभाववति संभवतीति ब्राह्मणभिन्न इत्यर्थः पर्यवस्यति । स च मानसबोधविषयः। अत्र ब्राह्मणशब्दस्यैव आरोपितब्राह्मणत्ववान् इत्यर्थः। नञ् तु तात्पर्यग्राहक इति द्योतकत्वपक्षः। अब्राह्मणः क्षत्रियः इत्यत्र आरोपितब्राह्मणत्ववदभिन्नः क्षत्रियः इति शाब्दबोधः । ब्राह्मणत्वाभाववति ब्राह्मणत्वस्यारोपेऽपि शाब्दबोधो भवत्येव। शब्दजन्यबोधे बाधज्ञानस्य प्रतिबन्धकत्वानङ्गीकारात्। आरोपस्य नञर्थकत्वे च "आरोप्यायं क्रियागुणौ ततो निवर्तयति" इति नञसूत्रस्थभाष्यं मानम् । अत एव तत्पुरुषे उत्तरपदार्थस्य प्राधान्यमिति प्रवादो नञ्तत्पुरुषेऽपि संगच्छते । अतस्मै ब्राह्मणाय, असःशिवः इत्यादौ तदादिपदानामुपसर्जनत्वाभावात् सर्वनामता सिध्यतीति तत्प्रयुक्तकार्यं निर्बाधम्। "प्रतीयते संप्रति सोऽप्यसः परैः" । इति माघे प्रयोगः । यद्यपि द्योतकतापक्षे ब्राह्मणपदस्य ब्राह्मणभिन्न इत्यर्थस्वीकारेऽपि, अब्राह्मण इत्यत्र उत्तरपदार्थप्राधान्यं न विहन्यते तथापि असः इत्याद्यनुरोधेन आरोपो नञर्थः । अतदादीनामुपसर्जनत्वात् तद्भिन्न इत्याद्यर्थे तु सर्वनामकार्यं न स्यात् । 'उपसर्जनीभूतास्तु न सर्वादयः' इति सर्वनामसंज्ञाभावात्। 'अतिसर्वाय देहि' इत्यत्र यथा। अतएव अनेकम् -

इत्यत्र एकवचनं सिध्यति । आरोपितैकत्वस्य सत्वात् । व्यस्तस्थलेऽप्येवमेव । घटो न पट - इत्यत्र पटे आरोपितपटत्वस्य बोधात् आरोपितपटत्ववदभिन्नो घट इति तत्समुदायजन्यशाब्दबोधः। पटभिन्नो घट इति बोधस्तु मानसः।

एवं तिङन्तसमभिव्याहारस्थलेऽपि नञर्थ आरोपः। तत्र धात्वर्थफलव्यापारयोः कर्मणि कर्तरि चारोपः। घटो नास्तीत्यत्र घटे सत्ताया आरोपः। बोधस्तु आरोपिता घटाभिन्नकर्तृनिष्ठा सत्तेति। घटाभावबोधो मानसः। चैत्रो न गच्छतीत्यत्र चैत्राभिन्नकर्तृनिष्ठः आरोपितसंयोगानुकूलव्यपार इति बोधः। तत्र व्यापारस्य आरोपितत्वे बोधिते तज्जन्यफलस्याप्यारोपविषयत्वं बुध्यते । एवं नञ्समभिव्याहारे आरोपितफल-व्यापारयोराश्रयत्वेन चैत्रस्तण्डुलं न पचति इत्यादौ तण्डुलादेः कर्मत्वं चैत्रादेः कर्तृत्वं च सुलभम् । वायौ रूपं नास्ति इत्यत्र रूपकर्तृकसत्तायां वाय्वधिकरणकत्वमारोप्यते । आरोपितवाय्वधिकरणात्मिका रूपकर्तृका सत्तेति बोधः । तेन वाय्वधिकरणक- रूपकर्तृकसत्ताया अप्रसिद्ध्या कथं विशिष्टसत्तारोपः इति शङ्कायाः नावसरः । ज्वरितो न भुञ्जीत-इत्यत्र आरोपितं ज्वरितकर्तृकं भोजनं प्रेरणाविषयभूतम् इति बोधः। भोजनाभावः प्रेरणाविषय इति तु मानसः। न कलञ्जं भक्षयेत् इत्यत्राप्येवमेव । आरोपितकलञ्जभक्षणं प्रेरणाविषयभूतमिति बोधे सति पश्चात् कलञ्जभक्षणाभावः प्रेरणाविषयः इति मानसबोधो जायते इति । अस्मिन् पक्षे पूर्वोक्तबोधप्रकारस्य अनुभवारूढत्वाभावेन, आरोपे चानुगतकार्यकारणभावस्य दुर्वचत्वेन च द्वितीयः पक्ष आश्रीयते।

अस्मिन् पक्षे नञर्थोऽन्योन्याभावोऽत्यन्ताभावश्च । प्रागभावप्रध्वंसाभावौ न कदाचिन्नञ्द्योत्यौ । तत्र अन्योन्याभावो भेद एव । अस्मिन्नपि पक्षे मतद्वयम् । नञर्थः प्रतियोगिनि विशेषणमित्येके, विशेष्य इत्यपरे । तिङन्तसमभिव्याहारे नञर्थोऽत्यन्ताभावः अन्यत्र तु भेदः। स च प्रतियोगिनि विशेषणमिति पक्षे अब्राह्मण इत्यत्र भेदस्य प्रतियोगितासंबन्धेन उत्तरपदार्थेऽन्वयः । भेदप्रतियोगी ब्राह्मण इति बोधः । न च भेदप्रतियोगितायाः केवलान्वयितया घटादेरपि भेदविशिष्टत्वेन उक्तबोधो दुर्लभ इति वाच्यम्। ब्राह्मणत्वावच्छिन्नप्रतियोगितासंबन्धेन भेदः प्रतियोगिनि विशेषणमिति स्वीकारात्। तेन संबन्धेन भेदविशिष्टतायाः ब्राह्मण एव सत्त्वात्। ब्राह्मणभिन्न इति बोधस्तु मानसः।

अब्राह्मणः क्षत्रियः इत्यत्र क्षत्रियस्य वृत्तित्वसंबन्धेन नञर्थे भेदे अन्वयः । भेदस्य प्रतियोगितासंबन्धेन ब्राह्मणे। क्षत्रियवृत्तिभेदप्रतियोगी ब्राह्मण इति शाब्दधीः । निपातेतरनामार्थयोरेवाभेदान्वयनियमात् प्रकृते नञर्थ भेदस्य निपातार्थत्वेन भेदेनान्वये न दोषः। ब्राह्मणभिन्नः क्षत्रिय इति बोधस्तु मानसः। चैत्रो न पचतीत्यत्र क्रियायोगे अत्यन्ताभावो नञर्थः । स च प्रतियोगितासंबन्धेन धात्वर्थव्यापारेऽन्वेति । चैत्रकर्तृकः विक्लित्त्यनुकूलव्यापारः अभावप्रतियोगीति बोधः। न चैवं पचत्यपि चैत्रे 'न पचति' इति प्रयोगापत्तिः, चैत्रकर्तृकपाकक्रियायाः मैत्रनिष्ठा-भावप्रतियोगितया विषयाबाधादिति वाच्यम्। यदाश्रयः प्रतियोगी तदाश्रयोऽभावः इति लक्षणया चैत्रनिष्ठोऽभावो नञर्थ इति स्वीकारात् उक्तस्थले चैत्रकर्तृकापाकानुकूलव्यापारः चैत्रनिष्ठाभावप्रतियोगीति बोधस्वीकारात् मैत्रनिष्ठाभावमादाय चैत्रो न पचतीति न प्रयोगः । भूतले घटो नास्ति इत्यत्र भूतलवृत्तिघटकर्तृका सत्ता अभावप्रतियोगिनी इति बोधः । अधिकरणस्य कतृकर्मद्वारा क्रियान्वय इति नियमात् । घटः पटो न इत्यत्र पटवृत्तिभेदप्रतियोगी घट इति बोधः। अनेकस्तिष्ठति इत्यत्र प्रतियोगितासंबन्धेन भेदविशिष्ट एकस्तिष्ठतीति बोधः । भेदप्रतियोगी एक इति वा । अनेकपदार्थे एकत्वभेदे बोधिते संख्यान्तरविशिष्टत्वमर्थाद् गम्यते ।

उत्तरपदार्थप्राधान्यादेकवचनम्। 'पतन्त्यऽनेकेजलधाविवोर्मयः' इत्यादौ तु अनेकश्च अनेकश्च अनेकश्चेत्येकशेषात् बहुवचनमुपपादनीयम्। तथाद्वयोरेकशेषे द्विवचनं न, अनभिधानात्। नागेशभट्टास्तु अनेके इति बहुवचनमसाध्वेवेत्याहुः। नञर्थस्य विशेषणत्वादेव अत्वं भवसि, अतस्मै देहि, असः इत्यादौ पुरुषव्यवस्थासर्वनामकार्यादिकं सूपपादम्। अत्वं भवसि - इत्यत्र भेदप्रतियोगित्वदभिन्नकर्तृकं भवनमिति बोधः। परन्तु पक्षेऽस्मिन् अघटमानय इत्यादौ भेदप्रतियोगिनं घटमानयेत्यादिरीत्या बोधप्रकारो नानुभवारूढः। घटभिन्नमानयेत्यादिबोधस्यैव सार्वजनीनत्वात्। तस्मान्नञर्थः प्रतियोगिनि विशेष्य इति मतं सिद्धान्ते स्थितम्। प्रतियोगिनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो नञर्थ इति यावत्। स च क्रियायोगेऽत्यान्ताभावः अन्यत्र तु भेदः।

पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥

इति वृद्धोक्तौ॥

उत्तरपदशब्दः क्रियेतरशब्दोपलक्षकः। पर्युदासो भेदः। प्रसज्यप्रतिषेधोऽत्यन्ताभावः। प्रसज्य - विधाय प्रतिषेधो निषेधः प्रसज्यप्रतिषेधः। सुप्सुपेति समासः। ''प्रसज्यायं क्रियागुणौ ततः पश्चात् निवृत्तिं करोती ति नञ्सूत्रे भाष्यकृतः। एतच्च प्रसज्यप्रतिषेध उच्यते'' इति तत्रैव कैयटः। प्रसज्येति ल्यबन्तम्। अथवा प्रसज्यस्य प्रतियोगिनि आरोप्यमाणस्य क्रियादिधर्मस्य प्रतिषेधः प्रसज्यप्रतिषेध इति षष्ठीतत्पुरुषः।-यथा अन्धो न पश्यतीत्यत्र अन्धे दर्शनक्रियामारोप्य प्रतिषेधः। पाषाणो मृदुर्न भवतीत्यत्र पाषाणे मार्दवगुणमारोप्य प्रतिषेधः।

एवञ्च नञ्समासे नञर्थो भेदः उत्तरपदार्थेन विशेष्यते। अब्राह्मणः क्षत्रियः इत्यत्र ब्राह्मणपदार्थः प्रतियोगितया भेदेऽन्वेति। भेदश्च वृत्तित्वसंबन्धेन क्षत्रिये। ब्राह्मणप्रतियोगिकभेदाश्रयः क्षत्रियः इति बोधः। अथवा ब्राह्मणपदस्य तद्भिन्ने लक्षणा। नञ् तात्पर्यग्राहकः। नामार्थयोरभेदेनान्वयात् ब्राह्मणभिन्नाभिन्नः क्षत्रिय इति बोधः। एवं नञो वाचकतापक्षे द्योतकतापक्षे च किञ्चिदन्योन्यवैलक्षण्यं भवतीति बोध्यम्।

तिङन्तसमभिव्याहारे सर्वत्र अत्यन्ताभावो नञर्थः। चैत्रो न गच्छति इत्यत्र चैत्रकर्तृकगमनव्यपाराभावः इति बोधः। प्रकारतासंबन्धेन नञर्थविशेष्यकशाब्दबोधं प्रति धातुजन्यव्यापारोपस्थिते : विशेष्यतासंबन्धेन हेतुत्वात् भूतले घटो नेत्यत्र अस्तीत्यध्याहारः। तिङन्तेन योगादत्यन्ताभावो नञर्थः। भूतलवृत्तिघटकर्तृकसत्ताया अभाव इति शाब्दधीः। अधिकरणस्य कर्तृकर्मद्वारा क्रियान्वयनियमात् भूतलस्य कर्तृभूतघटद्वारा सत्तायामन्वयो न त्वभावे। घटसत्ताया अभावे बोधिते घटाभावोऽपि बुध्यते। समनियताभावयोरैक्यात्। स्वाधिकरणवृत्त्यत्यन्ता-भावाप्रतियोगित्वे सति स्वाभाववदवृत्तित्वम् समनियतत्वम्। अधिकरणस्य भूतलस्य नञर्थाभावे साक्षात् अन्वयाभावेऽपि भूतलवृत्तित्वेनैवाभावः प्रतीयते, समभिव्याहारबलात्। प्रतियोगी यद्वृत्तित्वेन प्रतीयते तद्वृत्तित्वेनैव तदभावः प्रतीयते इत्यङ्गीकारात्। भूतले घटो नास्तीत्यत्र पूर्वोक्तरीत्या बोधितो घटाभावः भूतलवृत्तित्वेन प्रतीयते, प्रतियोगिनो घटस्य भूतलवृत्तित्वेन प्रतीतत्वात्। वायौ रूपं नास्तीत्यत्र रूपपदस्य रूपप्रतियोगिकात्यन्ताभावे लक्षणा। वाय्वधिकरणिका रूपाभावकर्तृका सत्तेति बोधः। अथवा वायौ रूपज्ञानमाहार्यं विकल्पात्मकम्। तद्विषयस्य रूपस्य बाह्यसत्तानिषेध इति नानुपपत्तिः। भावार्थककृदन्तयोगे समासेऽपि नञोऽभावोऽर्थः। अभोजनम् अगमनम् अपाकः-इत्यादौ भोजनाभाव इत्याद्यर्थप्रतीतेः। एकादश्यामभोजनम् इत्यत्र यथा।

एवमदृष्ट्वा, अकर्तुम् इत्यादावपि। क्त्वातुमुनोः भावार्थकत्वात्। एवमसंदेहः अनुपलब्धिः , अमार्दवम्, अरूपम्, अस्पर्शः इत्यादौ गुणयोगेऽपि ''आरोप्य क्रियागुणौ ततो निवर्तयति'' इति नञ्सूत्रस्थभाष्यात् क्रियागुणयोर्योगे सर्वत्र नञोऽभावार्थकत्वमिति फलति । द्योतकत्वपक्षे कश्चिदस्ति विशेषः । चैत्रो न पचतीत्यादौ धातोरेव व्यापाराभावपर्यन्तोऽर्थः । नञ् तु तात्पर्यग्राहकः । अत्र पक्षे चैत्रेण न पच्यते तण्डुलः इत्यादौ धात्वर्थ व्यापाराभावाश्रयत्वेन चैत्रादेः कर्तृत्वम्। तत्प्रयोज्यफलाभावाश्रयत्वेन तण्डुलादेः कर्मत्वञ्च सुलभम्। अब्राह्मण इत्यादौ ब्राह्मणपदस्य तद्भिन्ने लक्षणा । अथवा शक्तिरेव । सर्वेषां पदानां तत्तदर्थेषु तद्भिन्नेषु च शक्तिरिति नञसूत्रस्थभाष्यप्रदीपोद्योते स्पष्टम्। अतस्मै, असः इत्यादौ तु 'एतत्तदोः सुलोपोऽकोरनञ् समासे हलि' इति ज्ञापकात् सर्वनामसंज्ञा। असः शिवः इत्यत्र सुलोपवारणाय खलु अनञ्समासे इति विशेषणम्। एवञ्च नञ्समासे सर्वनामसंज्ञा, भवतीत्यत्र ज्ञापकमेवेदम् । उत्तरपदार्थप्रधानस्तत्पुरुष इति तु प्रायिकम् । 'पूर्वकाय' इत्यादौ व्यभिचारात्। अनेकम् इत्यत्र औत्सर्गिकिमेकवचनम् इति संक्षेपः

यत्तु - तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः ॥

इत्युक्त्वा अनश्वः इत्यादीन्युदाहरणानि प्रदर्श्यन्ते तत्र अभावः अत्यन्ताभावः तदन्यत्वं भेदः। उभौ प्रदर्शितावेव। अन्ये सादृश्यादयोऽर्थास्तु प्रकरणादिना गम्यमानाः न तु साक्षात् बोध्यमानाः। एवञ्च भेदोऽभावश्च द्वयं नञर्थः। अभावश्च अत्यन्ताभाव इत्युक्तमेव। रक्तघटे श्यामो नास्ति इत्यत्रापि अत्यन्ताभावः प्रतीयते, न तु ध्वंसः, नापि प्रागभाव इति संक्षेपः ।।

**२. अथ एवकारार्थः**

एवशब्दस्य अवधारणमर्थः। अवधारणं व्यवच्छेदः। स त्रिविधः। अयोगव्यवच्छेदः अन्ययोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्चेति।

तदुक्तम् - अयोगमन्ययोगञ्चात्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः ॥ इति ॥

तत्र विशेषणसंगतस्यैवकारस्य अयोगव्यवच्छेदः विशेष्यसंगतस्य अन्ययोगव्यवच्छेदः क्रियासंगतस्य तु अत्यन्तायोगव्यवच्छेदोऽर्थ इति विभागः । योगः संबन्धः तस्य व्यवच्छेदः प्रतिषेधः अभाव इति यावत् । अयोगव्यवच्छेदः संबन्धाभावाभावः । संबन्धश्च एवकाराभावे यः प्रतीयते स एव । शङ्खः पाण्डुर एवेत्यत्र विशेषणसंगतैवकारस्य अयोगव्यवच्छेदोऽर्थः ।. पाण्डुरत्वस्य गुणस्य शङ्खे संबन्धः समवायः । पाण्डुरत्वस्य एवकारार्थकदेशे संबन्धे, द्वितीयाभावस्य शङ्खे चान्वयः। पाण्डुरत्वसंबन्धाभावाभाववान् शङ्ख इति बोधः। अत्र शङ्खत्वावच्छेदेन शङ्खे पाण्डुरत्वसंबन्धः प्रतीयते। अभावस्य अभावबोधनं प्रकृतसंबन्धं द्रढयितुम्। अत्रेदं चिन्त्यम्। पाण्डुरशब्दो गुणिवाचकः। गुणवचनेभ्यो मतुपो लुगिष्टः इति वचनात् मतुप्प्रत्ययो लुप्तः। धर्मिणि विशेषणतया उपस्थितस्य पाण्डुरत्वस्य अन्यत्र एवकारार्थे विशेषणतया अन्वयो दुर्लभः । किञ्च एवकाराभावे पाण्डरशङ्खयोस्तादात्म्यं प्रतीयते, न तु समवायः संबन्धः । तस्मात् तादात्म्याभावव्यवच्छेदोऽत्र एवकारार्थः । पाण्डरतादात्म्याभावव्यवच्छेदवान् शङ्ख इति बोधः। अवच्छेदोऽभावः।

पार्थ एव धनुर्धरः । अत्र विशेष्यसंगतस्यैवकारस्य अन्ययोगव्यवच्छेदोऽर्थः । अन्यो भेदाश्रयः । भेदश्च समभिव्याहारमहिम्ना पार्थप्रतियोगिकः प्रतीयते । एवकारार्थैकदेशस्य व्यवच्छेदस्य (अभावस्य) आश्रयतासंबन्धेन धनुर्धरत्वेऽन्वयः । एवञ्च पार्थप्रतियोगिकभेदाश्रयसंबन्धाभाववद्धनुर्धरत्ववदभिन्नः पार्थ इति शाब्दबोधः । पूर्वोक्तरीत्या तु अन्यतादात्म्याभावः एवकारार्थः । पार्थान्यतादात्म्याभाववद्धनुर्धराभिन्नः पार्थ इति बोधः । नीलं सरोजं भवत्येव । अत्र क्रियासंगतस्यैवकारस्य अत्यन्तायोगव्यवच्छेदोऽर्थः । अयोगे आत्यन्तिकत्वं व्यवच्छिद्यते । आत्यन्तिकत्वञ्च अन्वयितावच्छेदकव्यापकत्वम् । प्रकृते च सरोजत्वमन्वयितावच्छेदकम् । सरोजानि नानावर्णानि भवन्ति । नीलानि रक्तानि श्वेतानि च । यद्यपि सर्वाणि सरोजानि नीलानि न, तथापि क्वचित् नीलमपि सरोजमस्त्येवेति प्रतिज्ञावाक्यमेतत् । अत्र नीलत्वादेः सरोजत्वादिसामानधिकरण्येनान्वयः न तु अवच्छेदकावच्छेदेन, बाधात् । अत एव अयोगे आत्यन्तिकत्वं व्यवच्छिद्यत इति पूर्वमुक्तम् । एवञ्च अयोगव्यवच्छेद एवायम् । विशेषणसंगतस्थले अवच्छेदकावच्छेदेन पाण्डरत्वादेरन्वयः, अत्र तु सामानाधिकरण्येनान्वय इत्येतावता अत्यन्तायोगव्यवच्छेद इति व्यवहारः । अत्र अयोगे व्यवच्छेदे च खण्डशः शक्तिः। नीलपदार्थस्य अयोगे तादात्म्याभावे अन्वयः । धात्वर्थभवनस्य व्यवच्छेदे । एवञ्च नीलतादात्म्याभाववत्सरोजकर्तृकभवनाभाव इति बोधः । वस्तुतस्तु अयोगव्यवच्छेदोऽत्र अभावाभावरूपः । धात्वर्थभवनस्य प्रतियोगितया तत्रान्वयः । नीलाभिन्नसरोजकर्तृकभवनाभावाभावः इत्येव शाब्दबोधः इत्यलं विस्तरेण ॥

पृथिव्यामेव गन्धः । अत्र अन्ययोगव्यवच्छेदः एवकारार्थः । तथाहि सप्तम्याः अधिकरणत्वमर्थः । पृथिव्याः तत्र वृत्तित्वसंबन्धेनान्वयः । अधिकरणत्वस्य स्वनिरूपिताधेयत्वसंबन्धेन गन्धेऽन्वयः । एवशब्दस्य पृथिव्यन्यनिष्ठाधिकरणतानिरूपितत्वाभावोऽर्थः । सोऽयमन्ययोगव्यवच्छेदः। तस्य आश्रयतासंबन्धेन संबन्धैकदेशाधेयतायामन्वयः । तथाच पृथिवीनिष्ठाधिकरणतानिरूपिता या आधेयता पृथिवीतरनिष्ठाधिकरणतानिरूपितत्वाभाववती तदाश्रयो गन्ध इति शाब्दधीः । पृथिवीतरावृत्तिः पृथिवीवृत्तिर्गन्ध इति संक्षिप्तबोधाकारः ।

ननु विशेष्यसंगतस्यैवकारस्य अन्ययोगव्यवच्छेदोऽर्थ इति पूर्वमुक्तम् । पृथिव्यामेव गन्धः इति वाक्यजबोधे पृथिव्याः विशेषणत्वेन प्रतीयमानत्वात् कथं तत्संगतस्यैवकारस्य अन्ययोगव्यच्छेदार्थकत्वमिति चेत् उच्यते । तत्र विशेषणपदस्य विधेयार्थकत्वम् । विशेष्यपदस्य च उद्देश्यार्थकत्वं बोध्यम् । पृथिव्यामेव गन्धः इत्यत्र पृथिव्या उद्देश्यत्वं गन्धस्य तु विधेयत्वं प्रतीयते । ततश्च उद्देश्यसंगतस्यैवकारस्य अन्ययोगव्यवच्छेदोऽर्थ इति न पूर्वोक्तविरोधः । उद्देश्यत्वविधेयत्वे च अतिरिक्ते एव विषयते । न तु विशेष्यताप्रकारतारूपे । अत एव चैत्रो गच्छतीत्यादौ क्रियाया विधेयताप्रतीतिः ।

चैत्रस्यैवेदं धनम् । अत्रापि अन्ययोगव्यवच्छेदः एवकारार्थः। स्वामितानिरूपितस्वत्वं चैत्रपदोत्तरषष्ठ्यर्थः । चैत्रेतरनिष्ठस्वामितानिरूपितत्वाभावः एवकारार्थः । अस्य आश्रयतासंबन्धेन स्वत्वेऽन्वयः । चैत्रनिष्ठस्वामित्वनिरूपितं चैत्रेतरनिष्ठस्वामितानिरूपितत्वाभाववच्च यत् स्वत्वं तद्वत् धनमिति शाब्दबोधः ।

अन्ये तु अवधारणं ज्ञानविशेषमाहुः। अयोगव्यवच्छेदादिकं ज्ञाने प्रकारः। अवधारणस्य विषयतासंबन्धेन यथायथं विशेषणादिष्वन्वयः। अवधारणविषयपाण्डराभिन्नः शङ्खः, अवधारणविषयपार्थाभिन्नो धनुर्धरः, नीलसरोजकर्तृकभवनमवधारणविषयः इति शाब्दबोधः।

लवणमेवासौ भुङ्क्ते इत्यत्र प्राचुर्यमेवकारार्थः

तस्य आश्रयतासंबन्धेन अध्याहृतेऽन्नादावन्वयः। लवणप्राचुर्यवदन्नादिकं भुङ्क्ते इत्यर्थः।

क्वेव भोक्ष्यसे। ''एवे चानियोगे'' इति वार्तिकात् अनवधारणमेवकारार्थः। अनवधारणमसंभावना। यत्किञ्चिदधिकरणकत्वत्कर्तृकभविष्यत्कालिकभोजनं संभावनाविषयत्वाभाववत् इति बोधः। स्थलाभावादिना भोजनसंभवाभावोऽत्र द्योत्यते॥

**३. अथ इवशब्दार्थः।**

अत्र बह्वो मतभेदाः। दिङ्मात्रं प्रदर्श्यते। कमलमिव मुखम् इत्यत्र इवशब्दार्थः सादृश्यम्। तच्च पदार्थान्तरम्। तद्भाने समानधर्मः प्रयोजक इत्येके। कमलस्य निरूपितत्वसंबन्धेन सादृश्येऽन्वयः। तस्य आश्रयतासंबन्धेन मुखेऽन्वयः। कमलनिरूपितसादृश्याश्रयो मुखम् इति बोधः। यद्वा प्रतियोग्यनुयोगिभावेनान्वयात् कमल प्रतियोगिकसादृश्यानुयोगि मुखम् इति बोधः। आह्लादकत्वरूपः साधारणो धर्मः व्यञ्जनया बुध्यते। निपातेवार्थस्य नञर्थस्येव भेदसंसर्गेण नामार्थविशेष्यत्वे विशेषणत्वे च न दोषः। 'कमलमिव सुन्दरं मुखम्' इत्यत्र कमलनिरूपितसादृश्यवन्मुखं सौन्दर्यवदभिन्नम् इति बोधः। सादृश्यप्रयोजकं सौन्दर्यमिति तु अर्थाद् गम्यते। 'कमलवत् सुन्दरं मुखम्' इत्यत्र तु भवतीत्यध्याहारः। ''तेन तुल्यं क्रियाचेद्वतिः'' इति सूत्रेण क्रिया तौल्ये एव वतिविधानात्। कमलपदस्य तत्कर्तृकभवने लक्षणा। कमलकर्तृकभवनसदृशम् इति कमलवत्पदार्थः। तदभिन्नं सुन्दरमुखकर्तृकं भवनम् इति बोधः। ततश्च कमलमुखयोः सौन्दर्यकृतं सादृश्यं मानसबोधविषयः।

अत्र पक्षे 'चन्द्रमिव मुखं पश्यामि' इत्यादौ चन्द्रादेः द्वितीया न स्यात्। चन्द्रपदार्थस्य इवार्थसादृश्येऽन्वयेन कर्मत्वाभावात्। तस्मात् चन्द्रादेः तत्सदृशे लक्षणा, इव शब्दस्तात्पर्यग्राहकः। चन्द्रसदृशाभिन्नं मुखं पश्यामीत्यर्थः। स्वाभिन्नमुखद्वारा फलाश्रयत्वात् चन्द्रपदार्थस्य कर्मता। 'चैत्रस्येव मैत्रस्य गृहम्' इत्यत्र गृहमित्यावृत्त्या चैत्रस्य गृहमिव मैत्रस्य गृहमिति योजना। चैत्रसंबन्धिगृहसदृशाभिन्नं मैत्रसंबन्धिगृहमिति शाब्दबोधः। औन्नत्यवैशाल्यादिसाधारणो धर्मस्तु गम्यः। ''शरैरुस्रैरिवोदीच्यान् उद्धरिष्यन् रसानिव'' इत्यत्र उस्रसदृशैः शरैः रससदृशान् उदीच्यान् उद्धरिष्यन् इत्याद्यर्थः। शराणां रसानाञ्च तत्तत्सदृशेषु लक्षणास्वीकारादेव करणत्वं कर्मत्वञ्च बोध्यम्। इवशब्दस्तु द्योतकः। अन्यथा तदुत्तरतृतीयाया द्वितीयायाश्च अनन्वयप्रसङ्गः। 'गज इव शूरो गच्छति' इत्यत्र गजशब्दस्य गजकर्तृकगमनसदृशे लक्षणा। तदभिन्नं शूरकर्तृकगमनमिति बोधः।

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यमित्यपरे। भूयोधर्माश्च आह्लादकत्वादयः साधारणधर्माः। तद्वत्त्वञ्च तत्संबन्ध एव। 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति हरिवचनात्। एवञ्च साधारणधर्मसंबन्धः सादृश्यमिति फलति। तन्मते 'अरविन्दमिव सुन्दरम् मुखम्' इत्यत्र अरविन्दपदार्थः आधेयतया संसर्गेण इव पदार्थेन साधारणधर्मेण अन्वेति। साधारणधर्मस्य अभेदेन संसर्गेण सुन्दरपदार्थैकदेशे सुन्दरत्वेऽन्वयः। ततश्च अरविन्दवृत्तिसमानधर्माभिन्नसुन्दरत्ववदभिन्नं वदनमिति बोधः। यत्र तु सुन्दरत्वादिकं नोपात्तम्

'अरविन्दमिव मुखम्' इत्यादौ तत्र साधारणधर्मस्य आश्रयतया उपमेये अन्वयः। अरविन्दवृत्तिसाधारणधर्माश्रयो मुखमिति बोधः। अस्मिन्नपि पक्षे 'अरविन्दमिव मुखं पश्यामि' इत्यादौ पूर्वोक्तदोषः स्थितः।

नागेशभट्टास्तु "सादृश्यमतिरिक्तः पदार्थः, साधारणधर्मस्तु सादृश्यप्रयोजकः। इवशब्दस्तु स्वसमभिव्याहृतचन्द्राद्युपमानत्वं तन्निर्वाहकमाह्लादकत्वादिसाधारणधर्मसंबन्धञ्च द्योतयति। उपमानत्वञ्च साधारणधर्मवत्त्वेन ईषदितरपरिच्छेदकत्वम्। परिच्छेदकत्वादेव तस्य विशेषणता, परिच्छेदकत्वञ्च परिच्छेद्यप्रतीतिं विना अनुपपन्नेति मुखादावुपमेयत्वं च द्योतयति इवशब्दः। साधारणधर्मस्य क्वचित् शब्देनोपात्तः क्वचिदाक्षिप्तः। उपमानोपमेययोः यद्यपि स्वस्वरूपेण भेदः तथापि आह्लादकत्वादिसाधारणधर्मवत्त्वेन अभेदः। अत एव उपमानतावच्छेदकधर्ममुपमेये आरोप्य तयोरभेदेन अन्वयः। एवञ्च 'चंद्र इव मुखमाह्लादकम्'- इत्यत्र चन्द्रे आह्लादकत्वं उपमानत्वञ्च, मुखे उपमेयत्वञ्च इव शब्दो द्योतयति। तथाच आह्लादकोपमानभूतचन्द्राभिन्न-माह्लादकमुपमेयं मुखमिति शाब्दबोधः। साधारणधर्मसंबन्धश्च क्वचिद्विशेषणतया यथा 'चन्द्र इव मुखमाह्लादकमि'त्यत्र। क्वचिद्विशेष्यतया यथा 'चन्द्र इव मुखमाह्लादयति' इत्यत्र। अत्र हि साधारणधर्मः विशेष्यतया तिङन्तेन उपात्त इति उपमानचन्द्रकर्तृकाह्लादाभिन्नः उपमेयमुखकर्तृकाह्लाद इति बोधः। उपमानोपमेययोरभेदेनान्वयादेव 'चन्द्रमिव मुखं पश्यामी'त्यादौ तयोरेकविभक्तिकत्वनियमः। 'गज इव गच्छति चैत्रः' इत्यत्र गजशब्दस्य उपमानभूतगजकर्तृकगमनम् इत्यर्थः। उपमानभूतगजकर्तृकगमनाभिन्नमुपमेयदेवदत्तकर्तृकं गमनमिति बोधः" इत्याहुः॥ संभावनापि इवशब्दद्योत्यः। उत्कटैकतरकोटिकः संशयः संभावना। भूयोधर्मवत्त्वं संभावनायां प्रयोजकम्। इवार्थे सादृश्ये तद्गतभूयोधर्मवत्त्वं तद्भिन्ने प्रतीयते। संभावनायान्तु तद्गतभूयोधर्मबलेन निमित्तेन तद्भिन्ने तत्तादात्म्यमुत्कटकोटिकत्वेन प्रतीयत इति विशेषः। 'दूरे तिष्ठन् देवदत्त यज्ञदत्त इव दृश्यते' इत्यत्र इवशब्दार्थः संभावना। यज्ञदत्तस्य प्रकारता निरूपकत्वसंबन्धेन संभावनायामन्वयः। तस्याश्च विषयतासंबन्धेन देवदत्तेऽन्वयः। तादात्म्यञ्च प्रकारतायां संसर्गः। एवञ्च तादात्म्यसंसर्गेण यज्ञदत्तनिष्ठप्रकारतानिरूपक- संभावनाविषयदेवदत्तनिष्ठा चाक्षुषज्ञानविषयता इति देवदत्तो यज्ञदत्त इवदृश्यते इति वाक्याज्जयामानः शाब्दबोधः। तिङन्तेन योगे तु सर्वत्र इवार्थः संभावना। "नवै तिङन्तेनोपमानमस्ति" इति सन्सूत्रस्थभाष्यात्। 'चैत्रो गच्छतीव' इत्यत्र चैत्रकर्तृकगमनं संभावनाविषयभूतमिति बोधः। चैत्रकर्तृकयत्किञ्चिद्व्यपारेण निमित्तेन गमनं संभावनाविषयीकृतम्। इयं संभावना आहार्या, अनाहार्या चेति द्विविधा। अनाहार्या पूर्वोक्तस्थले। तस्या आहार्यत्वे तु 'धूमस्तोमं तमः शङ्के' इत्यादौ उत्प्रेक्षालङ्कार इत्यालङ्कारिकाणां व्यवहारः।

### ४. अथ सहशब्दार्थः

'पुत्रेण सहागच्छति पिता'-इत्यादौ साहित्यं सहशब्दार्थः। तच्च स्वसमभिव्याहृतशब्दजन्यो-पस्थितिविषयक्रियादिसमानकालिकतत्क्रियादिमत्त्वम्। तृतीयार्थस्तु सहार्थानुयोगिनः पित्रादेः क्रियादौ यादृशः संबन्धः सः। स च क्रियावाचकशब्दसत्वे कर्तृत्वादिः द्रव्यगुणयोर्योगे स्वत्वादिः। प्रकृते आगमनसमानकालिकागमनं सहशब्दार्थः। पुत्रशब्दोत्तरतृतीयार्थः कर्तृत्वम्। तस्य निरूपकत्वसंबन्धेन सहशब्दार्थैकदेशे प्रथमागमनेऽन्वयः। द्वितीयागमनस्य कर्तृत्वसंबन्धेन आश्रयतासंबन्धेन वा पितर्यन्वयः। तस्य

अभेदसंबन्धेन तिङर्थे कर्तरि, तस्याश्रयतासंबन्धेन धात्वर्थगमनेऽन्वयः । वर्तमाने लट् । पुत्रकर्तृकागमनसमानकालिकागमनाश्रयपित्र- भिन्नकर्तृनिष्ठं वर्तमानकालिकमागमनम् इति बोधः । अस्मिन् बोधे पितर्यागमनक्रियाया द्वेधा भानं द्रष्टव्यम् । उद्देश्यतावच्छेदकविधेययोरैक्यन्तु तयोरीषद्भेदमादाय व्युत्पत्तिवादे परिहृतम् । विस्तरस्तु तत्रैव द्रष्टव्यः । वैयाकरणनये तु साहित्यमखण्डोपाधिरूपम् । तच्च समानदेशकालस्वत्वादिसंबन्धैः एकक्रियाद्रव्याद्यन्वयित्वसम- नियतम् । 'पुत्रेण सह आगच्छति पिता' इत्यत्र पुत्रसाहित्यवान् पिता आगच्छति इत्येव बोधः । पुत्रे समानकालिकागमनन्तु सहशब्दान्वयबलात् पश्चात् प्रतीयते । आगमनक्रियान्वयः पितरि शाब्दः पुत्रे तु आर्थः । अत एव ''सहयुक्तेऽप्रधाने'' इति सूत्रेण पुत्रशब्दात् तृतीया । पुत्रे अप्रधानत्वं हि शाब्दगुणाद्यन्वयित्वाभावरूपम् । न तु लौकिकमप्रधानत्वम् । 'राज्ञा सह सेना आगच्छति' इत्यत्र राजशब्दात् तृतीयानापत्तेः । एवञ्च तृतीयान्तार्थे क्रियादिप्रतीतिर्मानसीत्येव सूत्रस्वरसः ।

'पुत्रेण सह पिता स्थूलः' इत्यत्र पुत्रसाहित्यवान् पिता स्थूलः 'पुत्रेण सह पितुर्धनम् ' इत्यत्र पुत्रसाहित्यवतः पितुर्धनमिति च बोधः । पुत्रे समानकालिकस्थौल्यस्य, धने पुत्रवृत्तिस्वामितानिरूपितस्वत्वस्य च बोधो मानसः । यदि तु पुत्रेऽपि क्रियादिसंबन्धः शाब्दबोधे भासते, न त्वसौ मानसबोधविषयः इत्यनुभवः, तर्हि समभिव्याहृतपदबोध्यक्रियादिकालिकत्वं सहशब्दार्थः 'पुत्रेण सहागच्छति पिता' इत्यत्र आगमनसमानकालिकत्वं साहित्यम् । पुत्रस्य कर्तृत्वसंबन्धेन आगमने समानकालिकत्वस्य आश्रयतासंबन्धेन धात्वर्थे आगमनेऽन्वयः । पुत्रकर्तृकागमनसमानकालिकं पितृकर्तृकमागमनमिति बोधः । 'पुत्रेण सह स्थूलः' इत्यत्र स्थौल्यसमानकालिकत्वं सहशब्दार्थः । तस्य स्थूलपदार्थैकदेशे स्थौल्येऽन्वयः । पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान् पितेति बोधः । 'पुत्रेण सह पितुर्धनम् ' इत्यत्र स्वामितानिरूपिस्वत्वसमकालिकत्वं सहशब्दार्थः । तस्य षष्ठ्यर्थसंबन्धे अन्वयः । पुत्रवृत्तिस्वामितानिरूपितस्वत्वसमकालिकं यत् पितृनिष्ठस्वामितानिरूपितं स्वत्वं तद्वत् धनमिति बोधः । अत्र पक्षे पुत्रस्य पितर्यन्वयः परंपरया । 'सपुत्रः पिता आगतः' इत्यादौ समासस्तु ''तेन सहेतितुल्ययोगे'' इति सूत्रबलात् समर्थनीयः । अत्र साहित्यमखण्डोपाधिरिति पक्ष एव ज्यायानिति प्रतिभाति । पूर्वोक्तशाब्दबोधप्रकारस्तु समानवित्तिवेद्यत्वेन उपपादनीयः । अत्र विद्वांसः प्रमाणम् । यत्र माषवापोत्तरं तिलवापः तत्र 'माषैः सह तिलान् वपतीति' प्रयोगे समानदेशत्वमात्रप्रतीतिः । न तु समानकालिकत्वस्य । 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र यदि दशानां पुत्राणां विद्यमानत्वेऽपि इत्यर्थो बुबोधयिषितः, तर्हि सत्तासमकालिकत्वं सहार्थ इत्यभ्युपेयम् । दशपुत्रसत्तासमानकालिकं गर्दभीकर्तृकं भारकर्मकं वहनमिति बोधः ।

**अथ चशब्दार्थः**

''चार्थे द्वन्द्वः'' इति सूत्रे सिद्धान्तकौमुद्यामेवमुक्तम् - ''समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः समुच्चयः । अन्यतरस्यानुषङ्गिकत्वे अन्वाचयः मिलितानामन्वय इतरेतरयोगः । समूहः समाहारः'' इति । ''एकस्मिन्नन्वयः समुच्चयः'' इत्यत्र अन्वयः इति प्रतीकमादाय ''यत्रैवमन्वयः तत्र समुच्चयश्चशब्दार्थः न त्वन्वय एव समुच्चय इति भ्रमितव्यम्'' इति नागेशभट्टा आचख्युः । तत्र समुच्चयान्वाचययोश्चशब्दो द्योतकः तदर्थस्य साहित्यस्य विशेषणतया समभिव्याहृतपदार्थे प्रतीतेः । इतरेतयोगसमाहारयोस्तु चशब्दो वाचकः । तदर्थसाहित्यस्य तत्र विशेष्यतया प्रतीतेः इत्यपि तैरेव भाष्यप्रदीपोद्योते

प्रतिपादितम्। एवञ्च चशब्दार्थः साहित्यम्। साहित्यञ्च बहुविधम्। समुच्चयादयः साहित्यभेदाः इति विज्ञायते। सहशब्दार्थसाहित्यं नियमेन समानकालिकत्वादिघटितम्। समुच्चयादयस्तु न तथेति भेदः।

'ईश्वरं गुरुञ्च भजस्व' अत्र चशब्दार्थः समुच्चयः। स च स्वसमभिव्याहृतगुरुपदार्थविशेषणतया ईश्वरपदार्थविशेष्यतया च बुध्यते। ईश्वरप्रतियोगिकसमुच्चयाश्रयं गुरुमित्यर्थः अथवा गुरुपदस्य ईश्वरसमुच्चितगुरौ लक्षणा। चशब्दस्तु तात्पर्यग्राहक इति यावत्। अत्र एकस्य क्रियान्वयोत्तरं अपरस्य क्रियावाचकपदावृत्त्या अन्वय इति लघुशब्देन्दुशेखरे नागेशभट्टै- रुक्तम्। तथाच "ईश्वरं भजस्व, ईश्वरसमुच्चितगुरुं भजस्व" इति वाक्यद्वयं निष्पद्यते। "ईश्वरं गुरुञ्च भजस्व" इत्यत्र तु एकवाक्यता प्रतीयते। एकार्थविशेष्यकशाब्दबोधजनकत्वं कथमुक्तवाक्यद्वयस्य? मम तु एवं प्रतिभाति। ईश्वरभजनविशिष्टं गुरुभजनमिति बोधः। वैशिष्ट्यञ्च स्वबोधोत्तरकालिकबोधविषयत्वेन, समुच्चितत्वेन वा। गुरोरिव गुरुभजनस्यापि समुच्चितत्वे न किञ्चिद् बाधकम्। "ईश्वरभजनं कुरु, गुरुभजनञ्च" इत्युक्तौ भजनसमुच्चयस्य प्रतीतेः। तथाच उक्तस्थले त्वमित्यध्याहारः। भजेः प्रीत्यनुकूलव्यापारोऽर्थः। लोडर्थः प्रेरणा। तस्या विषयतासंबन्धेन धात्वर्थव्यापारेऽन्वयः। ईश्वरनिष्ठप्रीत्यनुकूलः त्वदभिन्नकर्तृनिष्ठो यो व्यापारः प्रेरणाविषयः तद्विशिष्टः ईश्वरसमुच्चितगुरुनिष्ठप्रीत्यनुकूलस्त्वत्कर्तृको व्यापारः प्रेरणाविषयः इति शाब्दबोधः॥ अत्र सुधियः प्रमाणम्॥

'देवदत्तः पचति हसति चे'त्यत्र क्रियासमुच्चयः। देवदत्तकर्तृकपचनव्यापारसमुच्चितो देवदत्तकर्तृकहसनव्यापार इति बोधः।

'भिक्षामट गाञ्चानय' अत्र चशब्दार्थोऽन्वाचयः = आनुषङ्गिकत्वम्। आप्यत्वञ्च नञ्योत्यम्। आनुषङ्गिकत्वमनुद्देश्यत्व- रूपमप्राधान्यम्। उभयमपि चशब्दसमभिव्याहृतनीधात्वर्थानयनक्रियायाम्। आनयनक्रियागतव्याप्यत्वञ्च चशब्दार्थप्रतियोग्यटनक्रियानिरूपितम्। तथाच। 'भिक्षामट गाञ्चानय' इत्यतः प्रेरणाविषयभूतत्वत्कर्तृकभिक्षाटन- व्याप्यमानुषङ्गिकं प्रेरणाविषयभूतं त्वत्कर्तृकगवानयनम् इतिबोधः॥

उद्भूतावयवभेदः समूह इतरेतरयोगः। उद्भूतः प्रकटः अवयवानां भेदः यस्य सः उद्भूतावयवभेदः। उद्भूतावयवभेदत्वञ्च समूहे अवयवगतसंख्यारोपवत्त्वम्। चशब्दार्थः साहित्यरूपः समूहो विशेष्यः। अत्र समूहे प्रत्येकावयववृत्तिर्धर्मः प्रवृत्तिनिमित्तम्। समुदायद्वारा अवयवानामपि प्रत्येकं कर्तृत्वादियोग इति तत्तन्निमित्तिका विभक्तिः अवयवेभ्यो भवत्येव। अवयवानां समुदायानतिरेकात्। अवयवाभेदेन इतरेतरयोगे समूहः प्रतीयते। 'चैत्रो मैत्रो यज्ञदत्तश्चगच्छन्ती'त्यत्र उद्भूतावयवभेदः समूहश्चार्थः। स च विशेष्यः। चैत्रमैत्रयज्ञदत्तरूपसमुदाया- भिन्नकर्तृनिष्ठो गमनव्यापार इति बोधः।

'संज्ञापरिभाषमि'त्यादि समाहारद्वन्द्वे तु अनुद्भूतावयवभेदः समूहोऽर्थ इत्येकवचनमेव। अवयवातिरिक्तत्वेन समूहस्य तत्र भानम्। समूहत्वं तत्र प्रवृत्तिनिमित्तम्। न तु प्रत्येकवृत्तिधर्म इति विशेषः।

**अथ कर्मप्रवचनीयाः**

प्रति परि अभि इत्यादयः केचन शब्दाः अर्थविशेषे कर्मप्रवचनीयसंज्ञां लभन्ते। तस्याः निपातसंज्ञया अव्ययसंज्ञया च समावेशः। कर्म क्रियामुक्तवन्तः कर्मप्रवचनीयाः। बाहुलकात् कर्तरि भूते अनीयर्। क्रियानिरूपितं संबन्धविशेषमेते द्योतयन्ति। "कर्मप्रवचनीययुक्ते द्वितीया"।

**वृक्षं प्रति विद्योतते विद्युत्**

अत्र "लक्षणेत्थंभूताख्यान" इत्यादिसूत्रेण लक्षणे प्रतिः कर्मप्रवचनीयः। लक्षणं ज्ञापकम्। वृक्षप्रकाशज्ञानेन विद्युद्विद्योतनं ज्ञायत इति वृक्षो ज्ञापकः। तस्य ज्ञापकत्वं स्वज्ञानद्वारा। ज्ञापकतानिरूपितज्ञाप्यत्वं द्वितीयार्थः। वृक्षस्य वृत्तित्वसंबन्धेन ज्ञापकतायामन्वयः। ज्ञाप्यत्वस्य आश्रयतासंबन्धेन धात्वर्थविद्योतने अन्वयः। वृक्षनिष्ठज्ञापकतानिरूपितज्ञाप्यताश्रयः विद्युत्कर्तृकविद्योतनव्यापार इति बोधः।

**अश्वो मां प्रति**

भागेऽर्थे प्रतिः कर्मप्रवचनीयः। भागो नाम स्वत्वाश्रयः। स्वस्वामिभावसंबन्धोऽत्र प्रतिद्योत्यो द्वितीयार्थः मन्निष्ठस्वामितानिरूपितस्वत्वाश्रयोऽश्व इति बोधः।

**वृक्षं वृक्षं परि प्रत्यनु वा सिञ्चति।**

अत्र वीप्सायां पर्यादयः कर्मप्रवचनीयाः। अत्र "नित्यवीप्सयोः" इति द्विर्वचनेन बुद्धिस्थयावत्-प्रकृत्यर्थनिष्ठव्याप्यत्वं द्योत्यते। व्याप्यत्वविशिष्टवृक्षादीनां व्यापकत्वसंबन्धेन क्रियान्वयः पर्यादिद्योत्यः। व्यापकत्वं द्वितीयार्थः। व्याप्यवृक्षनिरूपितव्यापकत्ववत् सेचनमिति बोधः। यद्यप्यत्र द्विर्वचनेनैव वृक्षादौ क्रियाव्याप्तिः बुध्यते, तथापि परिसिञ्चतीत्यत्र षत्वबाधनार्था, संबन्धसामान्यविवक्षायां षष्ठीबाधनार्था च कर्मप्रवचनीयसंज्ञा। सेचने व्यापकत्वञ्च स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम्। स्वं वृक्षत्वम्।

**वातं विना वृक्षः पतितः**

विनाशब्दार्थोऽभावः। तस्याश्रयतासंबन्धेन वृक्षेऽन्वयः। द्वितीयार्थः प्रतियोगित्वम्। वातप्रतियोगिकाभावाश्रयो वृक्षः पतनाश्रयः इति शाब्दबोधः। पतने वातजन्यत्वाभावलाभस्तु आर्थः इति केचित्। अन्ये तु जनकतानिरूपितजन्यत्वप्रतियोगित्वं द्वितीयार्थः। प्रकृत्यर्थस्य संबन्धैकदेशे जनकतायामन्वयः। विनाशब्दार्थस्याभावस्य पतधात्वर्थे पतनेऽन्वयः। वातनिष्ठजनकतानिरूपितजन्यत्वप्रतियोगिकाभाववत्पतनानाश्रयो वृक्षः इति बोधः इत्याहुः। अपरे तु विनापदार्थस्य अभावस्य समानकालिकत्वसंबन्धेन पतनेऽन्वयं वदन्ति। तन्मते वातप्रतियोगिकाभावसमानकालिकपतनाश्रयो वृक्ष इति बोधः।

**पुत्रं विना आगतः पिता**

अत्र पुत्रशब्दस्य पुत्रकर्तृकागमने लक्षणा। विनाशब्दार्थाभावस्य समानकालिकत्वसंबन्धेन धात्वर्थागमनेऽन्वयः। पुत्रकर्तृकागमनाभावसमानकालिकागमनाश्रयः पितेति शाब्दधीः।

**विना क्षीरं बालो रोदिति**

अत्राभावस्य प्रयोज्यतासंबन्धेन रोदनेऽन्वयः। क्षीराभावप्रयोज्यताश्रयो बालकर्तृकं रोदनमिति बोधः।

**हरिं विना सुखम्**

हरिशब्दः हरिभक्तौ लाक्षणिकः। हरिभक्त्यभावप्रयोज्यः सुखाभाव इति बोधः। विनाशब्दार्थोऽभावः, स्वविशेष्यतया पदर्थान्तरसाकांक्ष एव प्रतीयते। अत एव चैत्रो न गच्छतीत्यर्थे चैत्रस्य गमनं विनेति न प्रयोगः। एवमन्तरा, ऋते इत्यादिशब्दयोगेऽपि।

**अमुं नारद इत्यबोधि सः।**

अत्र तच्छब्देन श्रीकृष्णस्य परामर्शः। अदःशब्देन श्रीकृष्णदृष्टाकृतिविशेष्यस्य च। इतिशब्दार्थः प्रकारता। तत्र नारदपदार्थस्य आधेयता संबन्धेन अन्वयः। प्रथमा तु साधुत्वार्था। प्रकारतायां तादात्म्यं संसर्गतया भासते। अमुम् इत्यत्र द्वितीयार्थः विशेष्यताख्या विषयता। प्रकारतायाः विशेष्यतायाश्च निरूपकत्वसंबन्धेन बुधधात्वर्थे ज्ञानेऽन्वयः। तथाच तादात्म्यसंसर्गेण नारदनिष्ठप्रकारतानिरूपकं अदःपदार्थनिष्ठविशेष्यतानिरूपकञ्च श्रीकृष्णनिष्ठं भौतकालिकं ज्ञानमिति शाब्दबोधः।

तादात्म्यसंबन्धावच्छिन्नप्रकारतायाः कर्मत्वानुशिष्टद्वितीयार्थकत्वं रङ्गं रजतं जानाति इत्यत्र व्युत्पत्तिवादे भट्टाचार्यैः स्वीकृतम्। अत एव इतिशब्देन कर्मत्वस्याभिधानात् नारदपदोत्तरं न द्वितीया। केचित्तु इतिशब्दस्यैव नारद इत्यर्थः। नारदपदन्तु तात्पर्यग्राहकम्। इतिशब्दस्य अव्ययत्वात् तदुत्तरद्वितीया लुप्ता। अमुं नारदाभिन्नमबोधीत्यर्थमाहुः। नागेशभट्टैस्तु "नारद इति" इति श्रीकृष्णीयज्ञानाकारानुकरणम् इत्युक्तम्। तन्मते तु आकृतिविशेषनिष्ठविषयतानिरूपकं नारद इत्येतच्छब्दाभिलप्यमानाकारकं श्रीकृष्णनिष्ठं भौतकालिकं ज्ञानमिति बोधः॥

**चैत्र इति वदति**

चैत्रपदस्य चैत्रः इति शब्दोऽर्थः। इतिशब्दः तस्य शब्दपरत्वे तात्पर्यग्राहकः। वदधातोः अभिव्यक्त्यनुकूलमुच्चारणमर्थः। उच्चारणञ्च कण्ठताल्वाल्वद्यभिहननरूपो व्यापारः। अभिव्यक्तिश्च विषयता-संबन्धेन चैत्रशब्दनिष्ठा। चैत्रशब्दनिष्ठाभिव्यक्त्यनुकूलमुच्चारणमिति बोधः।

**चैत्र इति नाम**

पूर्ववदेव चैत्रशब्दस्य "चैत्र" इति शब्दोऽर्थः। अभेदः संबन्धः। चैत्राभिन्नं नामेति बोधः।

**अन्तरा नन्दं यशोदाञ्च हरिः।**

अन्तरेत्यव्ययमधिकरणशक्तिप्रधानं मध्यदेशार्थकम्। नन्दशब्दोत्तरद्वितीयायाः यशोदाशब्दोत्तरद्वितीयायाश्च अवधित्वमर्थः। तस्य निरूपकत्वसंबन्धेन अन्तराशब्दार्थैकदेशे मध्यत्वेऽन्वयः। अन्तराशब्दार्थैकदेशाधिकरणतायाः स्वनिरूपिताधेयत्वसंबन्धेन हरावन्वयः। नन्दनिष्ठावधित्वनिरूपकं यशोदानिष्ठावधित्वनिरूपकञ्च यन्मध्यत्वं तद्वद्देशनिष्ठाधिकरणतानिरूपिताधेयतावान् हरिरिति शाब्दबोधः।

**(रावणः क्रूरः) विभीषणस्तु साधुः।**

तुशब्दार्थो वैलक्षण्यम्। तच्च पूर्वोक्तरावणप्रतियोगिकं बुध्यते। तस्याश्रयतासंबन्धेन विभीषणपदार्थेऽन्वयः। रावणप्रतियोगिकवैलक्षण्याश्रयो विभीषणः साधुरिति बोधः। अथवा वैलक्षण्यस्य प्रयोजकतासंबन्धेन साधु पदार्थैकदेशे साधुत्वेऽन्वयः। रावणप्रतियोगिकवैलक्षण्यप्रयोजकसाधुत्ववान् विभीषण इति बोधः।

**यदि रामो वनं गच्छति तर्हि सीतापि गच्छति**

यदिशब्दार्थः प्रयोजकता। रामोवनं गच्छतीत्यत्र विद्यमानगच्छत्यर्थगमनस्य वृत्तित्वसंबन्धेन प्रयोजकतायामन्वय। तर्हिशब्दस्य प्रयोज्यत्वमर्थः। प्रयोजकतायाः निरूपितत्वसंबन्धेन प्रयोज्यत्वेऽन्वयः। प्रयोज्यत्वस्य द्वितीयशब्दगच्छत्यर्थे गमने आश्रयतासंबन्धेनान्वयः। अपिशब्दार्थः समुच्चयः। तस्याश्रयतासंबन्धेन

सीतायामन्वयः । सीता गच्छतीत्यत्र वनमित्यध्याहार्यम् । रामकर्तृकवनगमननिष्ठप्रयोजकतानिरूपित-प्रयोज्यताश्रयः समुच्चयाश्रयसीताकर्तृकवनकर्मकगमनम् इति बोधः ॥

## अयं सर्पो वा रज्जुर्वेति संदेग्धि

एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशय इत्युक्तम्। "अयम्" इत्यनेन पुरोवर्ती कश्चित्पदार्थो धर्मी बोध्यते। तस्मिन् सर्पो रज्जुर्वेति परस्परविरुद्धौ तादात्म्यसंबन्धेन भासेते। समानविभक्तिकनामार्थयोस्तादात्म्यं संसर्गः। सर्पो वा रज्जुर्वेति च कोटिद्वयम्। सर्पो वा इत्यत्र वाशब्दार्थो विरोधः। स च रज्जुप्रतियोगिको बुध्यते समभिव्याहारबलात् । विरोधस्य आश्रयतासंबन्धेन सर्पेऽन्वयः । इति शब्दार्थः प्रकारता । सर्पपदार्थस्य प्रकारतायां आधेयतासंबन्धेनान्वयः । तथाच रज्जुप्रतियोगिकविरोधाश्रयसर्पनिष्ठा प्रकारतेति प्रथमकोटेरर्थः । एवमेव रज्जुर्वेति द्वितीयकोटेरप्यन्वयो बोध्यः । प्रकारताद्वयस्यापि निरूपकतासंबन्धेन धात्वर्थे संदेहेऽन्वयः । इदंपदार्थस्य विशेष्यतानिरूपकत्वसंबन्धेन धात्वर्थसंदेहे अन्वयः। एवञ्च तादात्म्यसंबन्धेन रज्जुप्रतियोगिकविरोधाश्रयसर्पनिष्ठा या प्रकारता, तादात्म्यसंबन्धेन सर्पप्रतियोगिकविरोधाश्रयरज्जुनिष्ठा च या प्रकारता तदुभयप्रकारतानिरूपकः इदंपदार्थविशेष्यतानिरूपकश्च संदेहरूपव्यापारः कर्तृनिष्ठ इति शाब्दबोधः ॥

## आमुक्तेः संसारः

"आङ्मर्यादावचने " इति सूत्रेण मर्यादायामाङ्कर्मप्रवचनीयः । "पञ्चम्यपाङ्परिभिः" इति सूत्रेण मुक्तिशब्दात् पञ्चमी । तं विना मर्यादा, तेन सह अभिविधिरिति वृद्धोक्तिः। अत्र कालरूपा मर्यादा प्रतीयते । कालगतमर्यादात्वं च स्वप्रागभावाधिकरणकालवृत्तिः यः समभिव्याहृतपदार्थः तदनधिकरणत्वम्। अत्र आङर्थो व्यापकत्वम् । पञ्चम्यर्थो निरूपितत्वम् । मुक्तिपदंच मुक्त्यधिकरणकालप्रागभावपरम् । निरूपितत्वस्य आश्रयतासंबन्धेन आङर्थे व्यापकत्वेऽन्वयः । व्यापकत्वस्य च स्वप्रतियोग्यवृत्तित्वविशिष्टाश्रयतासंबन्धेन संसारेऽन्वयः। स्वं मुक्त्यधिकरणकालप्रागभावः। एवं च मुक्त्यधिकरणकालप्रागभावनिरूपितस्वप्रतियोग्यवृत्तित्व विशिष्टव्यापकतावान् संसार इति शाब्दबोधः ॥ इति शम् ॥

# 'व्याकरणशास्त्रे - शब्दार्थसम्बन्धः

*श्रीमान् उत्तरमेरूर् वीरवल्लि वासुदेवाचार्यः*

अत्र शीर्षके त्रयः मुख्याः अंशाः अन्तर्भूताः

तत्र प्रथमः - स्फोट एव शब्दः
- स एवार्थवाचकः - (शक्त्याश्रयः)

द्वितीयः - अर्थो बुद्धावेव; न तु बहिः - शक्यः

तृतीयः - वाच्यवाचकभावः सम्बन्धः नित्यः

## I. स्फोटः शब्दः

### व्युत्पत्तिः

स्फोटशब्दः योगरूढः; स्फुटति अनेन, अस्माद्वा इति व्युत्पत्तिः ; करणे अपादाने वा, ''अकर्तरि च कारके संज्ञायामि''ति सूत्रेण घञ्।

स्फुटनकरणम्, स्फुटनापादानमिति वा अर्थः । पदार्थः येन यस्माद्वा स्फुटति प्रकाशते अवगम्यते, सः शब्दशब्दाभिलप्यः इति यावत् स्फुट्यते व्यज्यते वर्णैः इति कर्मसाधनोऽप्ययं स्फोटशब्दः ॥ स्फोटत्वं नाम, अर्थविषयक - उपस्थिति - जनकताव - छेदकीभूतशक्तिमत्वमिति निष्कर्षः ॥

योगमात्रस्वीकारे तु, अर्थेनाप्यर्थान्तरं स्फुटति, अर्थोऽपि स्फुट्यते इति कृत्वा, अर्थे अलक्ष्ये, स्फोटलक्षणस्यातिव्याप्तिः स्यात् ॥

### वर्णानां वाचकत्वाभावनिरूपणम्

गो, घट इत्यादीन् वर्णान् शृणुमः । श्रावणप्रत्यक्षविषया इमे वर्णाः, व्यस्ताः समस्ता वा न शक्त्याश्रयः शब्दो भवितुमर्हन्ति । एकेन वर्णेन यद्यर्थः प्रत्यायितः स्यात्, तर्हि वर्णान्तरोच्चारणस्य वैय्यर्थ्यमापतेत् । संभूयापि वर्णाः न वाचकाः ; वर्णानां सामस्त्यस्यैव शशशृङ्गायमाणत्वात् ॥

नैयायिकमते, आशुतरविनाशिनो हि वर्णाः । प्रथमो वर्णः प्रथमे क्षणे उत्पद्यते; द्वितीये क्षणे तिष्ठति; तस्मिन्नेव द्वितीये क्षणे, वर्णान्तरमुत्पद्यते । तृतीये क्षणे प्रथमोत्पन्नो वर्णो नश्यति; तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं वर्णानामिति तेषां मतमिति यावत् । वर्णसमुदायो निरूपणार्हो न ।

यद्यपि मीमांसकमते वर्णाः नित्याः, तथापि, तेषां केवलं सत्तया अर्थप्रत्यायकत्वमसंभवि; चक्षुरादीनामिव सर्वदा सर्वार्थप्रतीत्यापत्तेः ।

किन्तु धूमादय इव, वर्णाः ज्ञायमानास्सन्त एव प्रत्यायकाः इति वक्तव्यम् । ज्ञायमानत्वं च वर्णानां श्रावणप्रत्यक्षेण । ततश्च तेषां प्रयत्नस्थानकरणैः क्रमेण उच्चरितानामेव । तथाच द्वितीयवर्णोच्चारणे प्रथमवर्णोच्चारण

हेतूनां प्रयत्नादीनां विनाशात्, तत्तदुच्चारणस्यापि नाशः इति, कुतस्तेषां सामस्त्यमिति विभावयन्तु सामाजिकाः तर्ककुशलाः ॥ तस्मात्, वर्णानां कथंचिदपि वाचकत्वं न संभवतीति सिद्धम् ॥

## ध्वनिस्फोटयोः विवेकः

ध्वनिर्द्विविधः, प्राकृतो वैकृतश्चेति । प्राकृतो ध्वनिरेव वर्णशब्देन व्यवह्रियते लोके । अयमेव स्फोटस्य शब्दाख्यस्य व्यञ्जकः । कत्वह्रस्वादिधर्मैः विशिष्टश्चायमेव । प्राकृतध्वनिं विना स्फोटः न व्यक्तीभवति । अत एव, प्राकृतध्वनिमेव स्फोटं मन्यन्ते जनाः ।

वैकृतो ध्वनिः, प्राकृतेनाभिव्यञ्जितस्य स्फोटस्य उपलब्धौ चिराचिरत्वसंपादकः । तपरस्तत्कालस्येति सूत्रे पातञ्जलं भाष्यं स्पष्टयत्यमुमर्थम् । एवं हि तत्र भाष्यम् - ''स्फोटः शब्दः । ध्वनिः शब्दगुणः । कथम्? भेर्याघातवत् । तद्यथा भेर्याघातः भेरीमाहत्य, कश्चित् विंशतिपदानि गच्छति, कश्चित्त्रिंशत् कश्चिच्चत्वारिंशत् । स्फोटस्तावानेव भवति । ध्वनिकृता वृद्धिः'' इति ॥

यथा वा सूर्यकिरणः प्रथमं घटादीन् पदार्थान् अवभासयन्, अनन्तरं घटोपलब्धिधारामेव जनयति, न तु घटे कंचिदपि विशेषमापादयति । एवं प्राकृतध्वनिना अभिव्यक्ते सति शब्दे (स्फोटे), उत्तरकालमनुवर्तमानः वैकृतो ध्वनिः शब्दविषयान् बुद्धिधारादीन् जनयन्नपि शब्दे विशेषं नापादयति ॥

वैयाकरणाः यं प्राकृतध्वनिरिति व्यवहरन्ति, तमेव तार्किकाः, वाचकशब्दं ब्रुवन्ति; यंच वैकृतध्वनिरिति तं च ध्वनिरिति व्यवहरन्ति ॥

### उक्तार्थनिगमनम्

एको नित्यश्च स्फोटः । अयं नानारूपैः ध्वनिभिः आक्रान्तः ज्ञातशक्त्याख्यवृत्तिकः अनेकरूपेण भासते; तत्तत्पदे वर्णात्मके अन्तिमेन पूर्ववर्णसंस्कारसहितेन अभिव्यक्तः कालत्रयाबाधितः अर्थं प्रत्यायतीति निष्कर्षः ॥

### भाष्यविरोधपरिहारः

अथ स्फोटस्य उच्चारणासंभवात्, उच्चरितः शब्दः प्रत्यायकः न तु प्रतीयमानः इति अणुदित्सूत्रभाष्य विरोधः प्रसजेत्; स्फोटस्य बोधकत्वानापत्तिश्च स्यात् इति चेत्, नैष दोषः ॥

न प्रतीयमानः इति भाष्यस्य, अश्रूयमाणस्सन् प्रतीयमान इत्यर्थः । स्फोटस्य तु व्यञ्जकध्वनिरूपेण श्रोत्रग्राह्यत्वं संभवत्येव । भाष्यविरोधगन्धो नास्ति । स्फोटस्य बोधकत्वमविचार्यमेव ।

संज्ञासंज्ञिभावेन प्रतीयमानस्यैव अनुच्चारितस्य अप्रत्यायकत्वमिति भाष्यतात्पर्याद्वा अविरोधात् ॥

### स्फोटविचारः ब्रह्मविचाररूपः

ननु, स्फोटोऽस्ति, तस्यैवार्थवाचकत्वमित्यादयो विषयाः सन्तु नाम ।

'काकस्य कति दन्ताः, मेषस्याण्डं कियत्पलम्' इति विचारवत्, अनर्घमपुनःप्राप्यं मनुष्यजन्म सर्वं स्फोटविचारेणैव पर्युपयुक्तं स्यात् । प्रेक्षावता पुरुषेण जन्मनः अत्यन्तनिवृत्तये उपायः खलु अन्वेषणीयत्वेन विचारार्हः ; स एव साधनीयः । स्फोटविचारः कुतः? स्फोटविचारेण संसारः किल अनुवर्तेत । ''नहि नहि रक्षति

डुकृञ्करणे इति हि ज्ञानिनः उपादिशन् !'' स्वतः प्रमाणं श्रुतिरपि, 'आत्मा वा अरे द्रष्टव्यः' इत्यादिना वाक्येन आत्मविचार एव प्रवर्तयति शास्त्राधिकारिणः मनुष्यजन्मनः इति सदस्याः तत्र भवन्तः अनुयुञ्जेरन्?

सत्यम् । भर्तृहरिणा महावैयाकरणेन श्रुतिकुहरकण्डूहरगिरा स्वकीये वाक्यपदीये कैयटस्यापि मार्गदर्शिनि सुसमाहितत्वात् । तथा हि -

''अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ॥''

इति ।

वाचः उत्तमं रूपं मायया अनुपप्लुतं परं ब्रह्मैव । ज्योतीरूपं तदेव शब्द इति नामान्तरेण उच्यते

जगत्कारणं किमिति उपनिषत्सु चर्चा अजायत, यत्तु ध्येयं भवति । तत्र एवमाम्नायते - ''सदेव सोम्येदमग्र आसीत्'', ''ब्रह्मैवेदं सर्वम्'', ''आत्मैवेदं सर्वम्'' इति कारणभूतस्य वस्तुनः सत्यत्वमेकत्वमात्मत्वं च स्थापितम्।

एवमेव तत्र वाग्विषयेऽपि प्रश्नसमाधाने प्रवृत्ते । ''वागेवार्थं पश्यति'', वागेवार्थे निहितं सन्तनोति'', वाच्यवे विश्वं बहुरूपं निबद्धम्'', ''ओमित्येतदक्षरमिदं सर्वम्'', ''ओमिति ब्रह्म'', ओमितीदं सर्वम्'' इति इमानि वाक्यानि कारणवस्तुनः शब्दरूपतामपि सिद्धान्तयन्ति इति निरूपकैः सूक्ष्मेक्षिकया पर्यालोचनीयं भवति । सर्ववेदान्तप्रत्ययन्यायेन, सर्वशाखाप्रत्ययन्यायेनेव पूर्वमीमांसायाम्, ब्रह्ममीमांसायामपि अर्थो निर्णेयो भवत्येव ॥

तथाच वैयाकरणाः वयं सप्रमाणं सयुक्तिकं संप्रदायक्रमेण आतिष्ठामहे, शब्दब्रह्मैव जगत्कारणम्, शब्दब्रह्मणा तादात्म्यमेव मोक्षः; मोक्षोऽपि शब्दात्मना अवस्थितिरिति यावत्; 'नहि नहि रक्षति डुकृञ्करणे' इत्यादि महद्वचनमपि मोक्षोपयोगित्वेन रूपेण विना व्याकरणविचारः निष्फलः इत्येतत्तात्पर्यकम्; अन्यथा तैरेव महद्भिःकृताः व्याकरणविचाराः स्ववचनविरुद्धाः स्युः इति ॥

**स्फोट प्रक्रिया**

इतः परं स्फोटाभिव्यक्तिप्रक्रियां किञ्चिदिव पश्यामः ।

मनुष्यजन्मनः मूलाधारस्था सूक्ष्मतमा वाक् त्रीणि पर्वाण्यतीत्य, तुरीये पर्वणि स्थूलरूपं भजमाना श्रोत्रेणोपलभ्यमाना भवति । एतेषु चतुर्ष्वपि स्थानेषु सा वाक्, क्रमेण, परा-पश्यन्ती - मध्यमा - वैखरी इति नामानि लभते । तथाहि -

१. परा इयं कुण्डलिनी रूपेण प्राणिनां मूलाधारे वर्तते । प्राणवायुसंयोगेन व्यज्यते । इयं निःस्पन्दा। चिदचिद्भागमिश्रा । चेतना च ।

इयमेव शब्दार्थोभयप्रपञ्चं सृजति ।

२. पश्यन्ती -नाभीस्थाने इयं वर्तते। इयमपि चेतना। अपि तु सस्पन्दा।

३. मध्यमा - हृदये पवनसंयोगात् पश्यन्त्याः विवर्तरूपा।

इयमेव आन्तरः स्फोटः इति ग्रन्थेषु व्यवह्रियते। अयमेव वाचकः।

४.वैखरी - विशुद्धाख्ये आधारे - कण्ठदेशे - इयं सस्पन्दा। श्रोत्रग्रहणयोग्या।

अयं च स्फोटः वर्ण - पद - वाक्यभेदेन सखाण्डत्वपक्षेत्रिधा; पुनः व्यक्तिजातिभेदेन त्रिधा। अखण्डत्वपक्षे पदवाक्यभेदेन द्वेधा। आहत्य अष्टौ स्फोटाः।

**वस्तुतस्तु वाक्यस्फोट एव परमार्थः**

वर्णस्फोटः इत्यत्र वर्णपदं न प्रत्येकवर्णपदम्। किन्तु प्रक्रियानिर्वाहार्थं शास्त्रकृत्कल्पिता या प्रकृतिः, प्रत्ययश्च तत्परम्। किञ्चिद्वर्णव्यत्यासादिना शक्ततावच्छेदकानुपूर्वीभङ्गः औत्सर्गिको दृश्यते - यथा सरः रसः - अश्वः अस्वः- शकृत् सकृत् इत्यादौ। तथा च प्रयोगसमवायिनां तत्तदानुपूर्व्यवच्छिन्नानां वाचकतेति वर्णस्फोटपक्षः। तार्किकैः यत् शक्ततावछेदकमित्युच्यते, राम अम् इत्यादि तदभिव्यङ्ग्यः वर्णस्फोटः इति वैयाकरणैः स्वीक्रियते इति तावत्।

रामम्, रामेण, हरये, हरौ इत्यादौ परिनिष्ठिते रूपे कियानंशो द्रव्यादिवाचकः, कियानंशः कर्मत्वादेः इत्यत्र विनिगमनाविरह्रेण, राममित्यादिपरिनिष्ठितं पदमेव कर्मत्वादिविशिष्टस्य वाचकमिति पदस्फोटपक्षः।

दधीदम्, शिवेहि इत्यादौ विनिगमनाविरहतौल्यादेव वाक्यमेव विशिष्टार्थे शक्यमिति वाक्यस्फोटपक्षः।

एकः पटः इतिवत्, एकं पदम्, एकं वाक्यम् इति अबाधितायाः प्रतीतेः विद्यमानत्वात्, वर्णातिरिक्तमेव पदं वा वाक्यं वा अखण्डव्यङ्ग्यमिति पदवाक्यस्फोटावान्तरभेदाः॥

इत्थं पञ्चापि व्यक्तिस्फोटावान्तरभेदाः।

जाति स्फोटवादः इत्थम्। घट इत्यत्र घोत्तरटत्वादिकं शक्ततावच्छेदकतया निरूप्यम्। अन्यथा सरो रसः इत्यत्र अर्थविशेषप्रतीत्यनापत्तेः। तच्च उपाधिरूपम्। उपाधिश्च परस्परम् असम्बद्धा जातिरेव। तथा च शक्यांशे इव शक्तांशेऽपि न्यायसाम्येन आकृत्यधिकरणरीत्या ब्रह्मतत्त्वमेव तत्तदुपहितं वाच्यं वाचकं च।

स्थानिवत्सूत्रभाष्यं वर्णस्फोटानुकूलम्। सर्वे सर्वपदादेशाः इति हि तत्र भाष्यम्। पद्यते अर्थः अनेन इति अर्थवत् इह पदम्; न तु सुप्तिङन्तमेव। एरुः इति सूत्रस्य तेस्तुः इत्यर्थः। तथाच स्थान्यर्थाभिधानसमर्थस्यैव आदेशत्वमिति स्थानेन्तरतमपरिभाषयैव निर्वाहात् यथासंख्यसूत्रं नारब्धव्यमिति भाष्यमपि वर्णस्फोटानुकूलम्।

पदस्फोटवाक्यस्फोटयोस्तु पस्पशाह्निकस्थं भाष्यम् अनुकूलम्। येनोच्चारितेन इति भाष्यप्रतीकमुपादाय कैयटेन भाष्यार्थतया वर्णिताविमौ। वर्णव्यतिरिक्तस्य वाक्यस्यैवेति वदता तयोरखण्डतापि उक्ता। नित्येषु शब्देषु कूटस्थैरविचालिभिः वर्णैः भवितव्यमिति वदता भाष्यकृता तयोरखण्डताप्युक्ता।

यथा क्षीरस्य विकारे दध्नि जननीये, प्रथमं क्षीरम्, ततोऽधिकं कठिनम्, ततो दधि भवतीति आनुपूर्वीनियमः, यथा वा बीजस्य विकारे वृक्षे जननीये, पूर्वं बीजम् द्वैधीभवति, ततोऽङ्कुरः, ततो द्विपत्रितः, ततः

पल्लवितः वृक्षो भवतीति आनुपूर्वीनियमः। तत्र राज्ञापि प्रथमावस्था द्वितीया द्वितीयाच प्रथमा कर्तुं न पार्यते इति, तयोः विकारे नियतैवानुपूर्वी। एवं प्रतिपत्तृणां स्फोटप्रतिपत्तौ व्यञ्जकवर्णबुद्धिक्रममन्तरेण बुद्धिषु नियतः क्रमः। तदिदमुच्यते वाक्यपदीये

यथानुपूर्वीनियमः विकारे क्षीरबीजयोः।
तथैव प्रतिपत्तृणां नियतो बुद्धिषु क्रमः॥ इति॥

## प्रथमांशनिगमनम्

एवं स्फोटाख्यस्य तत्त्वस्य क्षेमंकरस्य विषये अपेक्षिताः सर्वेऽप्यंशाः स्फोटायनऋषेः संप्रदायक्रमेण बुद्धिकुशलैः अधिगन्तव्याः, महाकविना कालिदासेन, वागर्थाविव संपृक्तौ इति कथं संगृह्य कृपया दत्ताः इति विमृश्य सन्तुष्यन्तु विद्वांसः इति सभ्यान् अर्थयमानेन साञ्जलिबन्धं द्वितीयोंऽशः स्वीक्रियते विवरणाय यथामति॥

## II. अर्थः

शक्यार्थोऽपि बुद्धिसत्तासमाविष्ट एव; न तु बाह्यसत्तासमाविष्टः। अन्यथा, घटोऽस्ति इति प्रयोगे अस्तीति एतत् व्यर्थं स्यात्। घटः इत्यत एव सत्तावगमात्। घटो नास्तीति प्रयोगानापत्तेश्च। सत्तया विरोधादेव। किञ्च, शशश्रृङ्गं नास्ति, अङ्कुरो जायते इत्यतः बोधानापत्तिः।

वैयाकरणनये तु, बुद्धौ सतः, वाक्यसत्ता-तदभाव-बोधनाय अस्ति-नास्तीति प्रयोगोपपत्तिः भवति। बुद्धिसन् अङ्कुरः बाह्य रूपेण जायते इत्यर्थः। बहिरत्यन्तमसतोऽपि शशविषाणादीन् अर्थान् बुद्ध्या विषयीकृत्य, शशश्रृङ्गादिवर्णसमुदायप्रयोगश्च उपपद्यते।

''तदस्यास्त्यस्मिन् इति मतुप्'' इति सूत्रभाष्ये कृतो विचारः, प्रकृते अनुसन्धेयो भवति।

''अथ अस्ति ग्रहणं किमर्थम्? सत्तायां प्रत्ययो यथा स्यात्। नैतदस्ति प्रयोजनम्। न सतां पदार्थो व्यभिचरति। इदं तर्हि प्रयोजनम्। संप्रति सत्तायां यथा स्यात्। भूतभविष्यत्सत्तायां माभूत्; गावोऽस्यासन्, गावोऽस्य भवितारः'' ॥

अत्र कैयटव्याख्या भाष्याशयं व्यक्तीकरोतीति, तामपि श्रावयामि तत्रभवतः सभ्यान्। ''ताम् (सत्ताम्) अन्तरेण पदोच्चारणासंभवात्, तस्या एव शब्दप्रवृत्तौ कारणत्वात् इति प्रश्नः ....... यावद्बुद्ध्या पदार्थो विषयीकृतः तावत् पदस्य प्रयोगाभावात्, बुद्धिसत्तासमाविष्टः अर्थः, विधिनिषेधजननादिभिः सम्बध्यते, वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायते इति।..... तस्मात् बुद्ध्या रूढोपचरिता सत्ता, शब्दप्रयोगाश्रयत्वात्, अव्यभिचारा इत्यर्थः। सैव बुद्धिसत्ता प्रयोक्तृप्रतिपत्तृणां बहीरूपतया भासते'' इति कैयटव्याख्या।

बौद्धार्थस्य बौद्धेन शब्देन विभागो नास्ति। अतः उभयोः अभेदाध्यवसायो नास्ति। शब्दात् अर्थाकारवृत्तौ जायमानायां स्वाकारस्यापि समर्पणं भवति।

अत एव शब्दे ग्राह्यत्वग्राहकत्वरूपशक्तिद्वयस्वीकारः। अर्थे बाधेतु शब्दे कार्यं भवतीति स्थितिः॥

तथा च सर्वं ज्ञानं शब्दानुविद्धम् - शब्दानुस्यूतम् इत्युक्तं भवति।

''न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमावते। अनुविद्धमिदंज्ञानं सर्वं शब्देन भासते''

इति वाक्यपदीयकारिका अत्रार्थे प्रमाणम्।

ननु, अनुविद्धमिव इत्युक्त्या, वस्तुतः अनुविद्धत्वाभावः प्रतीयते; कथं ज्ञानमात्रस्य शब्दविषयकत्वमिति चेन्न।

''शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः। छन्दोभ्य एव प्रथम मेतद्विश्वं व्यवर्तत''

इत्युक्तेः सर्वं जगत् शब्दपरिणामः इति कृत्वा, सिद्धान्ते परमार्थ वस्तु द्वयाभावात् अनुविद्धमिवेति इवशब्दः प्रयुक्तः।

''स्वं रूपं शब्दस्या शब्दसंज्ञा'' इति सूत्रे भाष्ये स्पष्टोऽयमर्थः। तत्र हि, न वा एतद्वक्तव्यम्। किं कारणम्? शब्दपूर्वको ह्यर्थे संप्रत्ययः। आतश्च शब्दपूर्वः। योपि ह्यसौ नाम्ना आहूयते, नामच यदा अनेन नोपलब्धम् भवति, तदा पृच्छति, किं भवानाह इति। शब्दपूर्वकश्चार्थस्य संप्रत्ययः इत्युक्तम्।

बाह्यः अर्थः प्रत्याख्यातो नागेशभट्टेन। अमुमेव विषयं समर्थयमानेनानेन ब्रह्मव्यतिरिक्तस्य सर्वस्यापि जगतो मिथ्यात्वं ब्रह्मणश्च सत्यत्वं साधितं च॥

बौद्धपदार्था ङ्गीकारः मनुस्मृत्या अपि सम्मतः।

''सर्वेषां तु स नामानि कर्माणिच पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे। (मनु - १/२१) -

इति मनुवाक्यम्॥

स भूरिति व्याहरत्, स भूमिमसृजत इति श्रुतेश्च, प्राक् सृष्टेः भूशब्दादिभ्यः तदर्थज्ञानपूर्वकं सृष्टिरिति लाभेन, तदा बाह्यायाः भुवोऽभावात्, भूः इत्यस्य शक्तिः बौद्धार्थे एवेति आस्थातव्यम्।

न च जातेः नित्यत्वात् तत्र शक्तिग्रहोऽस्तु इति वाच्यम्। निराश्रयजातिसद्भावे मानाभावात्। ब्रह्मसत्तायाः जातित्वेऽपि, व्यक्तेरभावसमये, सावच्छिन्नायाः एव ब्रह्मसत्तायाः जातित्वात्, अवच्छेदाकासावे, जातित्वासंभवात्। ''अपागादग्नेरग्नित्वम् (छा तस्य ६२४-१) इति श्रुत्या जातिनाशस्यैव कथितत्वाच।

तस्मात्, सर्वज्ञत्वेन वेदलाभवत् स्वबुद्धिवर्तिपदार्थस्य स्थूलरूपेण भानम्, संबन्धग्रहः बोधस्य जाघटीति इति बोध्यम्। हिरण्यगर्भस्यापि स्वमानेन वर्षशतान्ते नाशात्, कल्पान्तरानुभूतबौद्धपदार्थज्ञानपूर्वकमेव स्रष्टृत्वमिति बौद्धपदार्थः अकामेनाप्यवश्याभ्युपेय एव। ''छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत'' इति वाक्यपदीयमर्थमिमं समगृह्णात्।

''उपदेशेऽजनुनासिक इत्'' इति सूत्रे भाष्ये उक्तम् ''को देवदत्तः इति प्रश्ने, अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुः ईदृशो देवदत्तः'' इति। ईदृश इति पदस्य तदैव सार्थक्यं स्यात्, यदा, एतैः शब्दैः यादृशोऽर्थः बुद्धौ प्रतिभासते तादृशो बाह्यः इत्यर्थो वर्ण्येत॥

वाक्यपदीयकाराः व्याकरणागममनुसृत्य, नित्यं शब्दब्रह्म अर्थभावेनापि विवर्तते इति मन्यन्ते॥

नागेशभट्टास्तु, तन्त्रशास्त्रमनुसृत्य, शब्दब्रह्मणः अनित्यत्वमास्थाय, अर्थस्मृत्यै तज्जन्मानुपलम्भात् नित्यत्वमिति वदन्ति।

ननु, घटादयः यदि शब्दस्य परिणामाः, तर्हि, मृत्परिणामेषु घटादिषु मृत्स्वरूपानुगमो यथा दृश्यते, तथा, शब्दस्वरूपावगमोऽपि स्यात् इति चेत् इष्टापत्तिः।

"इतिकर्तव्यतालोपे सर्वशब्दव्यपाश्रया।
यां पूर्वाहितसंस्कारः बालोऽपि प्रतिपद्यते" (वाक्य प - ११२)

इति प्रमाणं दृश्यताम् कृपया। नहि शब्दमनुपन्यस्य कोऽपि कमपि कस्मिंश्चिदपि व्यवहारे प्रवर्तयितुं शक्नोति, इति, सर्वो व्यवहारः शब्दमूलक एव। स्पष्टवचसामस्मदादीनां व्यवहारः शब्दपूर्वको दृष्ट इति, तत्साम्येन, बालानामपि व्यवहारः शब्दपूर्वकः एवेति निश्चीयते। तत्र एतज्जन्मीयशब्दपूर्वकत्वस्य प्रत्यक्षतो बाधेन, जन्मान्तरीयशब्दपूर्वकत्वं निश्चीयते।

## III. संबन्धः

इतः परमन्तिमोंऽशः सम्बन्धः प्रस्तूयते

स्फोटाख्यः यः शब्दः, बुद्धिरूपदेशे च योऽर्थः, अनयोरुभयोः वाच्यवाचकभावः बोधकतावच्छेदकशक्ति शब्दाभिलप्यः सम्बन्धः। सच सम्बन्धः यत्किञ्चिदर्थनिष्ठवाच्यतानिरूपितवाचकतारूपो न; अपि तु, अखण्डोपाधिः पदार्थान्तरम्। इति नागेशभट्टानां सिद्धान्तः।

प्राचीनानां वैयाकरणानां भट्टोजिदीक्षितकौण्डभट्टादीनां तु, बोधजनकतात्मकः सम्बन्धः शक्तिरिति मतम्।

प्रयोजकवृद्धः प्रयोज्यमाह - घटमानय इति; झटित्यनन्तरमेव घटं नय इति च। प्रयोज्यवृद्धः यथादेशं करोति।

मध्यस्थः व्युत्पित्सुः प्रयोज्यव्यापारं हेतूकृत्य घटानयनविषयकं ज्ञानं प्रयोज्यस्यास्तीति अनुमिनोति। प्रयोज्यसमवेतज्ञानस्य च आज्ञापकवाक्यजन्यत्वं च निश्चिनोति। आवापेन निक्षेपेण अन्वयेन, उद्वापेन प्रक्षेपेण व्यतिरेकेण च घटेत्येतत् आनीतनीतवस्तुविषयकबोधजनकमिति निर्धारयति।

अर्थेन सह पदस्य सम्बन्धाभावे, बोधजनकत्वं नोपपद्यते। अन्यथा निर्धारणस्य प्रमाणाभावात्, औत्पत्तिकः स्वाभाविकः - शक्त्याख्यः सम्बन्धः बोधजनकतावच्छेदकः इति व्युत्पित्सुः, शक्तिग्राहकशिरोमणेः वृद्धव्यवहारतो जानाति।

बुद्धिस्थयोः शक्तशक्ययोः तादात्म्यम्। अत एव पुरो वर्तिनं मनुष्यं पश्यतो नामजिज्ञासया, कोऽयमिति प्रश्ने, डित्थोऽयमित्युत्तरे, सन्निहितदेशस्थं पिण्डमुद्दिश्य डित्थशब्दविधेयताप्रतीतिः संगच्छते। अस्यायमर्थः, अस्येदं पदमित्यादौ षष्ठ्यपि श्रूयते। "रामेतिद्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इति पुराणवाक्यम्, 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इति महाकविमाघवाक्यमपि, शब्दार्थ तादात्म्ये भेदसमानाधिकरणाभेदे प्रमाणम्।

अगोज्ञाय कश्चित्, गां सक्थनि कर्णे वा गृहीत्वा उपदिशति, अयं गौरिति। संप्रति अगोज्ञः गोशब्दस्य सास्नावान् - लाङ्गूलककुदखुरविषाणी अर्थः इति बोधं लभते।

तथा बालः, तातोऽयम्, मातुलोऽयम् इति मातापित्रा दिभिः शनैः अङ्गुलीनिर्देशेन तत्र तत्र बहुभिः शिक्षितः, तैरेव शब्दैः, तेषां शब्दानामङ्गुलिनिर्देशपूर्वकः तयोः सम्बन्धान्तराभावात् संकेतयितृपुरुषाज्ञानाच्च बोधकत्वनिबन्धनः इति क्रमेण निश्चिनोति।

संकेतः, समयः, वृद्धव्यवहारः इति पर्यायशब्दाः।

अयं शब्दार्थसम्बन्धोऽपि वैयाकरणनये नित्यः। अयं सम्बन्धः, इदंप्रथमतया न केनापि कर्तुं शक्यः। सर्वेषां पदानां शक्तिग्रहणकाले केनापि पदेन अर्थदेशनमशक्यकार्यं हि॥

**शक्तेः नित्यता**

"नित्ये शब्दार्थसम्बन्धे" इति वार्तिककारेण कात्यायनमहर्षिणा वररुचि इति नामान्तरतोऽपि प्रसिद्धेन, "नित्योह्यर्थवतामर्थैरभिसम्बन्धः" इति भगवता भाष्यकारैश्च अभ्यधायि॥ वाक्यपदीये भर्तृहरिणा च,

"नित्याः शब्दार्थ सम्बन्धाः तत्राम्नाता महर्षिभिः।
सूत्राणामनुतन्त्राणां भाष्याणांच प्रयोक्तृभिः॥"

इति विशदीकृतम् च॥

जैमिनिराचार्योऽपि, "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति सूत्रितवान्। औत्पत्तिकः इति नित्यं ब्रूमः इति शबरस्वामिभाष्यमपि तत्र अवलोकयतां भोः सदस्याः पण्डितवर्याः।

शब्दस्य अर्थस्य च नित्यत्वे तयोः सम्बन्धस्य नित्यत्वमिति कैमुत्यन्यायसिद्धम्, इति व्याकरण शास्त्रे शब्दार्थसम्बन्धः इति विषयं यथामति यथावकाशं विज्ञापयन् तत्र भवतः सर्वान् प्रणम्य, आपृच्छे। इति शम् -

# वैयाकरणानां मते नञर्थः ?

डा.के.वि. रामकृष्णमाचार्यः

नञर्थविषये नास्त्यैकमत्यं शास्त्रकाराणाम्। यद्यपि नैयायिकाः मीमांसकाश्च सर्वत्र नञोऽभावार्थकत्वमेव सङ्गिरन्ते। वैयाकरणास्तु सर्वे नञोऽ भावार्थकत्वं नाङ्गीकुर्वन्ति। तत्र नञः निपातत्वेन निपातानां द्योतकत्वेन च [1]सर्वत्र एकविध एवार्थः नञा द्योत्यत इति प्राचीनाः। पर्युदासस्यैवद्योतकत्वं नासमस्तनञः प्रसज्यप्रतिषेधस्येति नवीनाः। द्योत्योऽप्यर्थः आरोपितत्वरूप इति प्राचीनाः नव्याश्च। अभाव एवेति कौण्डभट्टः भट्टोजी दीक्षितश्च (?)। अतः वैयाकरणानां मतानि विविधानि विचारपदवीमारोप्यन्तेऽत्र।

**प्राचीनवैयाकरणमतम्**

नञ्तत्पुरुषविधायके ''नञ् (पा.सू 2-2-6) सूत्रे भाष्ये 'अब्राह्मण' इत्यादिषु पूर्वपदार्थस्य प्राधान्यं वा, उत्तरपदार्थस्य प्राधान्यं वा, अन्यपदार्थस्य प्राधान्यं वेति पक्षत्रयमाशङ्कितम्। इत्थं हि तत्र पक्षत्रयसम्भवः कैयटेन व्याख्यातः - ''यदा जातौ ब्राह्मणशब्दः वर्तते अविद्यमानं ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिः तदा अन्यपदार्थप्रधान इति भवत्यन्यपदार्थप्रधानः। यदात्वसत्सामान्यवृत्तिः (अभावार्थकः) नञ् ब्राह्मणादिभिर्विशेष्यते ब्राह्मणत्वेनासन् अन्यथा तु सन्निति तदा पूर्वपदार्थः प्रधानमिति पूर्वपदार्थप्रधानः। यदा तु दुरुपदेशात् मिथ्याज्ञानाद्वा ब्राह्मणशब्दः क्षत्रिये प्रयुज्यते स्वाभाविकी च ब्राह्मणत्वनिवृत्तिः नञा प्रत्याय्यते निवृत्तब्राह्मणत्ववान् इति च बोधस्तदा उत्तरपदार्थप्राधान्यात् उत्तरपदार्थप्रधानो भवति'' इति। एवं पक्षत्रये अन्यपदार्थप्राधान्ये''अवर्षाः हेमन्त'' इत्यादिषु अन्यपदार्थप्राधान्यप्रयुक्तलिङ्गसङ्ख्याद्यापत्तिरिति, पूर्वपदार्थप्राधान्येऽव्ययत्वापत्तिरिति चोक्त्वा उत्तरपदार्थप्राधान्यमेवोररीकृतम्। अथास्मिन् पक्षेऽब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीत्याशङ्कायां, यथा राजपुरुषमानयेत्युक्ते राज्ञो विशेषकत्वात् पुरुषमात्रस्यानयनं न, तथात्रापि नञ् विशेषकः प्रयुज्यते। तस्मात् नञ्विशिष्टस्यानयनं भविष्यतीत्युक्तम्।

ततः नञ्विशिष्टस्य 'अब्राह्मण' इत्यस्यार्थः क इत्यभिप्रायेण ''कः पुनरसौ?'' इति पृष्टे 'निवृत्तपदार्थक' इति समाहितम्। निवृत्तं पदार्थो मुख्यं ब्राह्मण्यं यस्मिन् स क्षत्रियादिरित्यर्थः। ''सादृश्यादिना अध्यारोपित ब्राह्मण्यो नञ्द्योतिततदवस्थ इत्यर्थः'' इति कैयटः। एवञ्च समभिव्याहृतपदार्थनिवर्तकत्वमेव नञर्थ इति लभ्यते। तत्र पदार्थस्य सर्वथा निवृत्तौ विशेषणत्वमेव न युज्येतेति निवृत्तमुख्यब्राह्मणत्वादिः, आरोपितब्राह्मणत्ववानिति भाष्याभिप्रायः।

प्रकारान्तरेणापि नञः आरोपितत्वार्थद्योतकत्वं भाष्ये प्रतिपादितम्। तथाहि - तत्रैव सूत्रे भाष्ये ''अथवा सर्वे एते शब्दाः गुणसमुदायेषु वर्तन्ते ब्राह्मणः, क्षत्रियो, वैश्यश्शूद्र इति।

1. समस्तेऽसमस्ते च पर्युदासे, प्रसज्यप्रतिषेधे च

तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । तद्यथापूर्वे पञ्चलाः, तैलं भुक्तम् । एवमयं ब्राह्मणशब्दो गुणसमुदाये प्रवृत्तोऽवयवेष्वपि वर्तते जातिहीने गुणहीने च । सन्देहात् तावत् गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाध्यवस्यति ब्राह्मणोऽयमिति, तत उपलभते नायं ब्राह्मणः अब्राह्मणोऽयमिति'' । तपःश्रुतादिगुणसमुदायो ब्राह्मण शब्दार्थः । तपःश्रुताभ्यां रहिते जात्या ब्राह्मणे ब्राह्मणशब्दः प्रयुज्यते । गुणसमुदाये शक्तस्य ब्राह्मणशब्दस्य अर्थे कतिपयगुणभावप्रतिपादनाय नञ्प्रयोगः । तत्र चावयवे जात्यादिमात्रे समुदायरूपारोपात् शब्दप्रयोगः । ब्राह्मणत्वादिगुणसत्ताप्रदर्शनाय ब्राह्मणशब्दप्रयोगः । निवृत्तगुणानां निवृत्तिबोधनाय नञ्प्रयोगः । एवञ्चारोपस्यैव शब्दप्रयोगकारणत्वात् बोद्धुरपि तदारोपविषयस्यैव प्रतीतेः अस्मिन्नपि पक्षे नञः आरोपितत्वार्थद्योतकत्वमेव लभ्यते । उक्तञ्च तत्रैव भाष्ये ''अस्य पदस्यार्थो निवर्तते'' इति । अस्य पदस्य मुख्योऽर्थः प्रवृत्तिनिमित्तरूपो निवृत्तो गौणश्चोपजायते इति विज्ञायेतेति तद्भाष्याक्षरार्थः । ब्राह्मणादिशब्दा एव मुख्यब्राह्मण्यार्थका आरोपितब्राह्मण्यार्थकाश्चेति नानार्थाः । तत्र च नञा ब्राह्मणशब्दः अमुख्यब्राह्मणार्थक इति निर्णीयते । एतदपि तत्रैवोक्तं नञ्कृतातूपलब्धिरिति । एवञ्ब्राह्माण इत्यादौ नञा आरोपितत्वं द्योत्यते । 'आरोपितः ब्राह्मण' इति बोधः । ब्राह्मणभिन्नोऽयमिति बोधस्तु पार्ष्टिकः आर्थिकश्च । एवमुत्तरपदार्थस्य प्राधान्यात् असर्वस्मै इत्यादिषु सर्वनामकार्याणि सिद्ध्यन्ति । अन्यथा सर्वशब्दार्थस्य प्राधान्याभावरूपगौणत्वात् सर्वनामसंज्ञैव न स्यात् । एवम् 'अत्वं भवसि' 'अनहं भवामि' इत्यत्र पुरुषव्यवस्था, 'सेव्यतेऽनेकये' त्यादौ वचनव्यवस्था च सिद्ध्यति । एवं समस्तनञ आरोपितार्थद्योतकत्वे निश्चिते असमस्तनञोऽपि तदर्थकत्वमेवोचितमिति ''घटो नास्ती'' त्यादीनां ''घटकर्तृकारोपिता सत्ता' इत्यादिरूपेण बोधः । निपातानां वाचकत्वपक्षे आरोपो नञर्थः । विषयत्वं संसर्ग इति कैयटादयः ।

**कौण्डभट्टस्य मतम् ( भट्टोजी दीक्षितस्य मतम्?)**

वैयाकरणसिद्धान्तभूषणसारे नञर्थनिर्णये ''अभावो वा तदर्थोऽस्त्वि'' त्यादिकारिकाव्याख्यायां कौण्डभट्टः अभावमेव नञर्थं निरूपयति । तस्यायमाशयः - अभावस्य नञवाच्यत्वे घटो नास्तीत्यादौ अभावबुद्धिः न स्यात् । तथा च घटवत्ताज्ञानप्रतिबन्धादिकं न स्यात् । न च पश्चाज्जायमानार्थिकबोधमादाय प्रतिबध्यप्रतिबन्धकभावो वक्तुं शक्यः । नियमतः तज्ज्ञापकाभावात् । आरोपस्याभावबुद्धावहेतुत्वात् नारोपस्य तज्ज्ञापकतापि । किञ्च ''न न अस्माकमेकं सुखम्'' इत्यत्राभावबोधः भाष्यसम्मतः । निषेधादिपदेनाभाव एव बोध्यते । अब्राह्मण इत्यादीनामारोपितो। ब्राह्मण इत्यादिबोधस्य अननुभविकत्वात्, अभाव बोधस्यैव सर्वसम्मतत्वात् ।

अभावस्य नञर्थत्वेऽपि तस्य विशेष्यत्वेऽपि च 'असर्वस्मै' इत्यादिप्रयोगास्साधयितुं शक्यन्त एव । तथाहि - ''एतत्तदोस्सुलोपोऽकोरनञ्समासे हलि'' ( पा.सू. 6-1-132) इति सूत्रेऽनञ्समासे इति विशेषणादेव नञ्समासे सर्वनाम्नः सर्वनामसंज्ञा ज्ञाप्यते । अन्यथा गौणत्वादस इत्यादौ सुलोपाप्राप्त्या तदसंगतिः स्पष्टैव । अकोरिति पर्युदासेन सर्वनाम्नोरेवैतत्तदोः सुलोपविधानात् । ''रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'' ''अद्रुतायामसंहितम्'' इत्यादिप्रयोगबलात् अव्ययीभावतत्पुरुषयोः वैकल्पिकत्वमपि ज्ञाप्यते । अनेकयेत्यादिवचननियमस्तु विशेष्यापेक्षः। अत्वं भवसीत्यादौ नञः द्योतकत्वात् युष्मदादेरेव तद्भिन्नबोधकत्वात् युष्मदाद्यर्थसामानाधिकरण्यमक्षतमेवेति

पुरुषव्यवस्थापि सिद्ध्यति। घटो नास्तीत्यादौ अभाव विशेष्यक एव बोधः 'घटाभिन्नश्रयाकास्तित्वाभाव' इति रीत्या। क्रियया अन्वितेन नञा अत्यन्ताभावः, नाम्ना अन्वितेन नञा अन्योन्याभावश्च प्रायेण प्रतीयेते। तौ चाभावौ अन्योन्याभावत्वात्यन्ताभावत्वरूपेणैव शक्यौ। तत्तद्रूपेणैव बोधात्। तस्मात् अभावः नञ्वाच्य एव। सोऽपि विशेष्य एव। द्योतकत्वपक्षेऽपि तस्यैव प्राधान्यमङ्गीक्रियते। अनुभवानुरोधात्। उक्तञ्च "नञ्" (पा. सू. 2-2-6) सूत्रे भाष्ये "निवृत्तपदार्थक" इति। निवृत्तशब्दो भावक्तान्तः। तथा च निवृत्तं निवृत्तिरेव पदार्थो यस्य स नञित्यर्थः। तथाचाभावार्थकत्वं नञः स्पष्टम्। इति।

## नागेशमतम्*

नागेशस्त्वित्थमभिप्रैति। पर्युदासप्रसज्यप्रतिषेधभेदेन नञ् द्विविधः। पर्युदस्यमानश्च प्रायः समस्त एव। तत्रारोपविषयत्वं नञ्पर्युदासद्योत्यम्। द्योतकत्वं च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वम्। तथा च नञः समभिव्याहृतब्राह्मणादिपदानाम् आरोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकत्वमेव। प्रवृत्तिनिमित्तारोपस्तु सदृशे एव भवतीति "पर्युदासस्सदृशग्राही" ति प्रवादः। निषेधस्त्वार्थः। सादृश्यादयश्च षट् प्रयोगोपाधयः, न तु नञर्थाः। पर्युदासे सर्वत्रान्योन्याभाव आर्थः।

प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः। तत्र विशेष्यतया क्रियान्वयनियमात् सुबन्तेनासामर्थ्येऽपि "असूर्यललाटयोः" (पा.सू.3-2-36) इत्यादि ज्ञापकात्समासः। उक्तञ्च "नञ्" (पा.सू. 2-2-6) सूत्रे भाष्ये "प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं कुरुते" इति। उक्तञ्चाभियुक्तैः - "प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्" इति। अत्र क्रियापदं गुणस्याप्युपलक्षणम् "नास्माकमेकं प्रियम्" इत्यादिषु एकप्रियप्रतिषेधात् बहुप्रियप्रतीतिः। प्रसज्यप्रतिषेधश्च द्विविधः समस्तोऽसमस्तश्च। समस्तस्य चात्यन्ताभाव एवार्थः। असमस्तस्य तु तत्तत्संदर्भानुसारम् अत्यन्ताभावोऽन्योयाभावश्च। असूर्यं पश्याः, गेहे घटो नास्ति, घटो न पटः इत्युदाहरणानि। अत्यन्ताभावस्य विशेष्यत्वं च तिङन्तार्थक्रियान्वय एव। 'घटो न पट' इत्यत्र घटपदस्यैव घटप्रतियोगिकभेदाश्रये लक्षणा। नञ् तु तात्पर्यग्राहकः। इति॥

"वस्तुतः नागेशस्य प्राचीनानां च मतभेदो नास्ति। शब्देन्दुशेखरे "नञ्" (पा.स. 2-2-6) सूत्रे प्रसज्यप्रतिषेधस्थलेऽपि आरोपिता सत्तेत्यादिरूपेणैव बोधप्रदर्शनात्। अन्यथा धात्वर्थमुख्यविशेष्यतानियम भङ्गः" इति गुरुचरणा : महामहोपाध्यायाः पेरि सूर्यनारायणशास्त्रिचरणाः।

## समीक्षणम्

एतावता प्रबन्धेन ज्ञायते यत् सर्वस्यापि नञः आरोपितत्वद्योतकत्वमेवेति प्राचीना अभिप्रयन्ति। मञ्जूषामनुसृत्य नागेशः प्राचीनमतं समासे अनुसरति, गुरुचरणानां निरूपणमनुसृत्य प्राचीनानेव सर्वथा अनुसरति वा, कौण्डभट्टस्तु सर्वथा प्राचीनमतं नानुसरत्येवेति।

अत्र मतभेदे कारणं किमित्युक्ते नञ्सूत्रभाष्यस्थं 'निवृत्तपदार्थक' इति पदमेव। एतच्च पदं द्विः सन्दर्भद्वये प्रयुक्तं भाष्यकारेण। प्रथमसन्दर्भे 'अब्राह्मण' इति समस्तस्य, द्वितीयसन्दर्भे नञश्च विषये प्रयुक्तमिति

---

* लघुमञ्जूषागत एव विषयोऽत्र निर्दिष्टः।

तत्सन्दर्भपरिशीलनेन ज्ञायते। प्राचीनाः सर्वे प्रथमसन्दर्भगतं निवृत्तपदार्थकपदं स्वमतसाधकत्वेनोपस्थापयन्ति। कौण्डभट्टस्तु द्वितीयसन्दर्भगतं पदं स्वमतसाधनायोपस्थापयति।

यद्यपि बहवः प्राचीनमतानुयायिन एव। अथापि केचित् कौण्डभट्टसमर्थका अपि सन्त्येव। तेषामयमाशयः-

''नञ्'' (पा.सू. 2-2-6) सूत्रे एव भाष्ये निवृत्तिः स्वाभाविकी वाचनिकी वेति प्रश्ने, स्वाभाविकीति पक्षे किं नञ् प्रयुज्यमानः करोतीति प्रश्नस्य, नञ्प्रयुज्यमानः पदार्थं निवर्तयतीत्युक्तम्। अतश्च निवृत्ति मवगमयतीत्युक्त्वा, नञा एव निवृत्तेरवगतौ किमर्थं ब्राह्मणशब्दः पुनः प्रयुज्यत इत्यभिप्रायेण ''यदि पुनरयं निवृत्तपदार्थकः, ब्राह्मणशब्दः किमर्थं प्रयुज्यते?'' इति प्रश्नः कृतः। अत्रायमिति सर्वनाम्ना नञेव परामर्शनीयः। नत्वब्राह्मणशब्दः न वा ब्राह्मणशब्दः। तथासति ब्राह्मणशब्दः किमर्थं प्रयुज्यत इति प्रश्नस्यैवासङ्गत्त्यापत्तेः। अतश्च एतद्भाष्यप्रामाण्येन पूर्वतनसन्दर्भे वर्तमानस्य निवृत्तपदार्थकपदस्यापि द्वितीयसन्दर्भानुगुण्येन व्याख्या कार्या। तथा च नञोऽभावार्थकत्वं भाष्यासम्मतमितितु अविचारितं वचः। ''प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति'' इति भाष्यं प्रमाणीकृत्यैव नागेशेन लघुमञ्जूषायां प्रसज्यप्रतिषेधीयनञः अभावार्थकत्वव्यवस्थापनात्। भर्तृहरिणापि न्कुत्रचिदपि आरोपविषयत्वं नञ्द्योत्यमित्युक्तम्। 'अब्राह्मण' इत्यादौ नञः अभावार्थकत्वेऽपि 'अस' इत्यादौ सर्वनामकार्यमित्थं समर्थितं हेलाराजेन- ''नञर्थस्याव्यतिरेककरत्वात् अतिसर्वायेत्यादावेव हि व्यधिकरणविशेषणविषये सर्वाद्यर्थस्याप्राधान्यं, नतु समानाधिकरणे नञ्समासे। वाक्ये इव स्वार्थापरित्यागैनैव हि नञ्समासे सर्वादयो नञर्थविशेषणं भवन्तीति प्रवर्तत एव सर्वनामकार्यम्'' Xइति। अनेन नञोऽभावार्थकत्वं हेलाराजस्यापि सम्मतमित्यवगम्यते।

''नञ्'' (पा.सू. 2-2-6) सूत्रे भाष्ये सर्वत्र निवृत्तिशब्द एव असकृत्प्रयुक्तः। ब्राह्मणादिशब्दानां गुणसमुदायोऽर्थः, तत्र किञ्चिद्गुणरहितेऽपि तत्त्वमारोप्य ब्राह्मणादिशब्दानां प्रयोगः शक्यः इति पक्षप्रतिपादनावसरे ''सन्देहात्तावत् गौरं शुच्याचारं पिङ्गलकेशं दृष्ट्वा अध्यवस्यति ब्राह्मणोऽयमिति। तत उपलभते नायं ब्राह्मणः, अब्राह्मणोऽयमिति'' इत्यादिवदन्तः भाष्यकाराः नञा भ्रान्तस्य ब्राह्मण्यस्य निवृत्तिमेव सूचयन्ति। ''अस्य पदस्यार्थो निवर्तते'' इति हि तत्र भाष्यम्। उत्तरपदार्थप्रधानपक्षमुपपादयन् कैयटोऽपि ''स्वाभाविकी च ब्राह्मणत्वनिवृत्ति र्नञा प्रत्याय्यते निवृत्तब्राह्मणत्ववानिति बोधः'' इति स्पष्टं कथयति।

निवृत्तब्राह्मणत्वस्य विशेषणत्वं न सङ्गच्छत इति कृत्वा आरोपितब्राह्मणत्ववानिति बोध इत्यपि न युक्तम्। निवृत्ते ब्राह्मणत्वे विशेषणत्वयोग्यताया अभावेऽपि तदभावे तद्योग्यतायाः सत्त्वात्। तथा च घटाभाववद्भूतलमित्यत्रेव अभावः विशेषणं भवितुमर्हत्येव।

किञ्च ''अस्य पदस्यार्थो निवर्तते'' इत्युक्तं भाष्ये। अस्य पदस्य मुख्योऽर्थः ब्राह्मणत्वादिप्रवृत्तिनिमित्तरूपः निवर्तते इति तद्व्याख्यायां कैयटः। ततश्च नञा समभिव्याहृतपदस्य यत्प्रवृत्तिनिमित्तं तदभावो द्योत्यते। यत्र च प्रवृत्तिनिमित्तं तदाश्रयश्च भेदेन बोधविषयौ यथा ब्राह्मणत्वतदाश्रयौ तत्रान्योन्याभावः फलति। यत्र च प्रवृत्तिनिमित्तापेक्षया तदाश्रयस्य पृथक्भानाभावः 'असन्देह' इत्यादिषु तत्रात्यन्ताभावः फलति। तथाचास्मिन्नपि पक्षे

---

X वा.प. वृत्तिसमुद्देशे 318 का. व्याख्या

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" ॥

इति कारिकोक्तानां षण्णां प्रयोगोपाधित्वं सिध्यति।

किञ्च भाष्ये "असन्देहः, अब्राह्मणमानय, अब्राह्मणोऽयम्" इति त्रीणि उदाहरणानि नञ्तत्पुरुषस्य दत्तानि। तत्र तृतीये यत्र सादृश्यात् भ्रान्तिः तत्र कथंचित् आरोपितत्वस्योपपादयितुं शक्यत्वेऽपि आद्योदाहरणद्वये तदुपपादनमेवाशक्यम्। किञ्च नञोऽभावार्थकत्वमाश्रित्यैव 'अब्राह्मणत्व' मित्यत्र स्वरासिद्धिमाशङ्क्य पूर्वविप्रतिषेध आरब्धः वार्तिककृता। तस्योत्तरपदार्थप्राधान्यमाश्रित्य भाष्यकारेण प्रत्याख्यानं कृतम्। ततश्चाभावस्य विशेषणत्वं भाष्यकारेणाङ्गीकृतमित्येव वक्तव्यम्। अन्यथा तत्रारोपितत्वादिरूपनञर्थानिरूपणेन भाष्यस्य न्यूनतापत्तिः।

किञ्च 'अब्राह्मणमानये'त्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीति शङ्कायाः प्रतिबन्दितया 'राजपुरुषमानय' इत्युक्ते पुरुषमात्रानयनं कुतो नेति पृष्टम्। ततः राजा विशेषक इत्युत्तरे समागते सति, तथात्र नञ्विशेषक इति समाहितम्। तथाच नञर्थाभाव एव विशेषणमिति तदाशयः। सचाभावः प्रवृत्तिनिमित्तस्यैव "प्रसह्य क्रियागुणौ ततः पश्चान्निवृत्तिं करोति "इति भाष्यात्। अत्र क्रियाशब्देन वाक्यार्थमुख्यभूता क्रिया विवक्षिता। तथा च प्रसज्यप्रतिषेधनञर्थः व्याख्यातः। अत्र गुणशब्दश्च प्रवृत्तिनिमित्तपरः। तथाच वाक्यमुख्यार्थभूतक्रियायाः, तथा प्रवृत्तिनिमित्तस्य च निवृत्तिः अर्थात् अभावोऽनेन नञा बोध्यत इत्यर्थः फलति। तत्पुरुषसमासे नञः द्योतकत्वेन उत्तरपदार्थप्राधान्यमप्यक्षतम्।

आरोपितत्वं नञ्द्योत्यमितित्वयुक्तम्। तादृशबोधस्य लोकविरुद्धत्वात्। नहि अनघोऽयमित्युक्ते आरोपिताघवत्वं बुध्यते। अघरहितस्यैव तत्र बुबोधयिषितत्वात्। लोकाननुभूतार्थबोधनाय शब्दे शक्तिः प्रयत्नशतेनाप्यारोपयितुमशक्यत्वात्। शब्दार्थसम्बन्धानां नित्यत्वस्य भाष्यकारेणैव प्रतिपादितत्वात्।

किञ्च घटो नास्तीत्याद्यर्थमभावार्थकत्वस्यावश्यमङ्गीकर्तव्यतया तत्पुरुषादिसमासेष्वपि तदर्थस्वीकारे लाघवमपि। एवं च शास्त्रान्तरविरोधोऽपि न भवति। आरोपितार्थकत्वे च नञः न किंचित् प्रयोजनमुत्पश्यामः।

नञ्द्योत्यस्याभावस्य विशेष्यत्वं वा विशेषणत्वं वेति तु यथान्यायं निर्णेतव्यम्। समासेषु विशेषणत्वमेव। अन्यत्रोभयमपि।

एष एव भट्टोजीदीक्षितस्यापि सम्मतः पक्षः। "अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्" इति हि कारिका तस्यैव। यद्यपि वैयाकरणसिद्धन्तकारिकानिर्माणात्पूर्वं रचिते शब्दकौस्तुभे, तथा मनोरमायां च प्राचीनमतमेव तेनानूदितं, तथापि कारिकायां स्वमतं प्रकाशितमित्येव चिन्तनीयम्। ग्रन्थकर्तॄणाम् एषा शैली यत् पूर्वतनस्य मतस्यानभिमतत्वेऽपि तस्यैव प्रथमं प्रतिपादनम्। ततः परम् अन्ते कुत्रचित् स्वाभिप्रेतामतविष्करणं च। व्युत्पत्तिवादे द्वितीयाकारके फलावच्छिन्नव्यापारो धात्वर्थ इति मतमेवावलम्ब्य शब्दबोधः प्रदर्शितः। परन्तु फलव्यापारौ विशकलितावेव धातोरर्थ इति पञ्चमीकारके स्वमतमाविष्करोति गदाधरः। नागेशोऽपि परेत्वित्यादिना स्वमतमाविष्करोति। लघुमञ्जूषायामपि आदौ तादात्म्यं बहुधा समर्थ्य प्रातिपदिकार्थविचारे कथयति "अत्र ग्रन्थे यत्पूर्वं बहुशस्तादात्म्यस्य सम्बन्धत्वमुक्तं वक्ष्यते च तत्परवासनयेति बोध्यम्" इति।

किञ्च नञः द्योतकत्वपक्षे ब्राह्मणादिशब्दानाम् आरोपितब्राह्मणत्वविशिष्टे अनया शक्तिः कल्पनीया, शक्तिभेदेन शब्दभेदो वा आश्रयणीयः। एकया शक्त्या तु निर्वाहो न भवत्येव। तर्हि तथा कल्प्यमाना शक्तिः प्रवृत्तिनिमित्ताभावविशिष्टे एव कल्प्यताम्। आरोपितब्राह्मणत्वादिरूपे एव शक्तिः कल्पनीयेत्यत्र किं प्रमाणम्? तथा च 'आरोपितत्वं नञ्द्योत्यमि' ति पक्षः अयुक्त एवे'' ति।

अत्र पुनर्नागेशानुयायिनः - ''व्याकरणप्रक्रियायां बाह्यपदार्थापेक्षा नास्ति। सर्वोऽपि बौद्ध एवार्थः शक्यः। अतः नञः अलौकिकार्थप्रतिपादने न किञ्चिद्बाधकम्। एतादृशोऽलौकिकोऽर्थः प्रक्रियायां बहुत्र स्वीक्रियते वैयाकरणैः। विशाल - विशङ्कट - अधिकादि शब्दनिष्पत्तौ आश्रितोऽर्थः किं लौकिकः?

किञ्च वाक्ये अभावो नञर्थ इत्यपि न युक्तम्। सर्वत्र नञ्स्थले आरोपितार्थद्योतकत्वस्यैव सिद्धान्तात्। अत्रैव भाष्यतात्पर्यमिति निरूपयति किल नागेशः। कैयटनागेशयोरस्मिन् विषये मतभेद एव नास्ति। अत आरोपितत्वमेव नञ्द्योत्यमिति'' प्रत्यवतिष्ठन्ते।

**पर्यालोचनम् -**

एवम् एतेषु मतेषु पर्यालोच्यमानेषु अनेके प्रश्नाः समुद्भवन्ति। तत्रादौ नागेशस्य वस्तुतः कुत्र तात्पर्यम्? यतः शाब्दबोधविषयकवस्तुसमीक्षणाय प्रवृत्ते ग्रन्थे यत् समुल्लिखितं तत्रैव तस्य तात्पर्यमिति सर्वोऽपि साधारणतया निश्चिनोति। यदि च तथा न, तर्हि ग्रन्थकर्त्रा तत्सूचनीयम्। यथा तेनैव मञ्जूषायां शक्तिविचारे तादात्म्यस्य सम्बन्धत्वं व्यवस्थापितम्।परन्तु अत्र स्वतात्पर्यं नास्तीति, तत्सर्वं परवासनयेति प्रातिपदिकार्थविचारे स्पष्टीकृतम्। तथा नञ्विषयेऽपि वक्तव्यम्। तथा न कृतमित्युक्ते किं चिन्तनीयम्?

यदि च समासे नञः अलौकिकः कश्चिदर्थः समाश्रीयेत तर्हि तेनैव सर्वत्र निर्वाहो भविष्यतीति समस्तासमस्तभेदेन भिन्नस्य नञः भेदेनार्थकल्पनं नागेशकृतमसङ्गतमेव स्यात्। अतस्तत्र तस्य तात्पर्यं नास्ति, प्राचीनमतमेव नागेशोऽप्यनुसरतीति वक्तव्यम्।

आरोपितत्वं नञ्द्योत्यमित्ययं पक्षः केन आरब्धः? कदा वा अस्य पक्षस्य प्रादुर्भावः? तत्र युक्तिः केत्यादि विम्रष्टव्यमस्ति। निवृत्तस्य पदार्थस्य विशेषणत्वायोगात् आरोपितपदार्थस्य विशेषणत्वकल्पनेति कैयटो वदति। अभावः न कुत्रचिदपि विशेषणमेव भवितु मर्हतीति तस्याशयो वा?

अथ निवृत्तपदार्थकशब्दे निवृत्तः पदार्थो यस्मादिति स्वारसिकः पञ्चम्यर्थबहुव्रीहिः कुतः परित्यक्तः?

'अब्राह्मणमानये' त्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीति भाष्यस्य ''जहत्स्वार्थायां वृत्तौ नञर्थे निवृत्ते ब्राह्मणस्य कस्याप्यानयनापत्तिरि''त्येव व्याख्या कार्या वा? नञोऽभावार्थकत्वात् यत्किञ्चिदभावविशिष्ट ब्राह्मणस्य आनयनं प्राप्नोतीति तद्भाष्याशयः वर्णयितुमशक्यो वा? नञेव विशेषकः इति भाष्यस्य को वाऽऽशयः? एवमनेके प्रश्नाः समुद्भवन्ति येषां निष्पाक्षिकदृष्ट्या विचारः अवश्यं कर्तव्यः।

अयं च लेखः न कस्यचित्पक्षस्य समर्थनाय न वा खण्डनाय उद्दिष्टः। किन्तु समेषां वैयाकरणानामस्मिन् विषये उन्मुखीकरणायैव। समेषां विदुषामैकमत्येन यदि स्यादस्मिन् विषये कश्चित् निर्णयः तर्हि शास्त्रस्य लोकस्य च महानुपकार एव।

**- इति शम् -**

# शाब्दिकमते शब्दस्वरूपम्

डा. श्रीपाद सतयनारायणमूर्ति

स्वाभिप्रायाविष्काराय सत्सु चेष्टादिषु बहुषु साधनेषु कृत्स्नाभिप्रायप्रकटनसमर्थः शब्द इत्यत्र नास्ति विप्रतिपत्तिः। वक्त्रा कञ्चिदर्थं बोद्धुं सति शब्दप्रयोगे तच्छ्रवणेन श्रोतुः शक्तिज्ञानसहकारेण तदर्थबोधो जायते। तच्छब्दजन्यतत्प्रकारकतद्विशेष्यकबोधं प्रति तच्छब्दनिष्ठवृत्तिज्ञानाधीनतत्प्रकारकतद्विशेष्यकोपस्थितिः कारणमिति कारणकौटौ शब्दनिष्ठवृत्तिज्ञानस्यपि प्रवेशाद् वृत्त्याश्रयः शब्दः कः? किं तस्य स्वरूपमिति परिशीलनीयम्।

शाब्दिकमते शास्त्रप्रक्रियानिर्वाहकव्यावहारिकशब्दापेक्षया अर्थबोधकश्शब्दोऽन्यः। व्यवहारयोग्यश्च ध्वन्यात्मकः। 'अग्नेर्ढक्' इत्यादिपाणिनीयशब्दानुशासनेन प्रक्रियानिर्वाहकः स एव शब्दः। शपन्ति अनेनेति शब्द इति व्युत्पत्त्या तस्य व्यवहारसाधनत्वं सिद्ध्यति। लोकप्रतीतिजनको व्यावहारिकश्शब्दो ध्वनिरूप इति पतञ्जलिनाप्युक्तम्। यथा

''अथवा प्रतीतपदार्थको लोके ध्वनिश्शब्द इत्युच्यते। तस्माद् ध्वनिश्शब्दः'' इति। (महाभा. - पस्पशा.) दर्शनान्तररीत्या अर्थप्रतीतिजनको व्यवहारप्रयोजकश्च शब्द एक एव शाब्दिकमते तु तयोर्भेदः। ध्वन्यात्मक-व्यावहारिकशब्दः अर्थप्रतीतिजनकशब्दान्तरस्य कारणमिति तन्मते विशेषः। महाभाष्यकारेण व्यावहारिकशब्दस्वरूपमित्थं प्रदर्शितम् - ''श्रोत्रोपलब्धिः, बुद्धिनिर्ग्राह्यः प्रयोगेणभिज्वलितः आकाशदेशश्शब्द इति। (महाभा. द्वितीयाह्निकम्, अइउण्) व्यवहारप्रयोजकोऽयं शब्दो वक्तुरुच्चारणेन श्रवणेन्द्रियजन्यप्रत्यक्षविषयो भवति। यद्यपि उत्तरोत्तरध्वन्युत्पत्तौ पूर्वपूर्वध्वनीनां नाशस्तथापि पूर्वपूर्वध्वन्युत्पादिताभि- व्यक्तिजनितसंस्कार-परम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्यो भवतीति बाह्यशब्दस्वरूपं स्पष्टम्। परा पश्यन्ती मध्यमा वैखरीति चतसृषु वाक्षु कण्ठताल्वाद्यभिघातजन्यस्य वैखरीरूपस्य शब्दस्य न वाचकत्वं, किन्तु तदभिव्यङ्ग्यस्फोटात्मकनित्य-शब्दस्यैवेति अर्थविवक्षया वक्ता तद्वाचकस्फोट शब्दव्यञ्जकवैखरीरूपान् शब्दान् प्रयुङ्क्ते। ह्रस्वदीर्घप्लुतादीनि व्याकरणकार्याणि ध्वन्यात्मके शब्दे एव सम्भवन्ति न तु नित्ये स्फोटात्मके अन्तश्शब्दे। प्राकृतवैकृतभेदेन ध्वनेः द्वैविध्ये सति प्राकृतध्वनिश्रवणाव्यवहितोत्तरकाल एव स्फोटस्याभिव्यक्ततया कमलशतपत्रसूचीन्यायेन व्यङ्ग्यव्यञ्जकयोर्भेदो न ज्ञायते। अत एव व्यञ्जकधर्माः व्यङ्ग्येऽपि भासन्ते। वैकृतध्वनिस्तु प्राकृतध्वनिप्रतीतं स्फोटं स एवायमित्युल्लेखेन कञ्चित् कालमुपलम्भयति। उक्तञ्च हरिणा-

''शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥ इति वा.प. 1-77

लोके तावत् ध्वन्यात्मको वर्णरूपश्शब्द एव पदार्थबोधकत्वेन प्रसिद्धः। तत्र च कारणं व्यङ्ग्यव्यञ्जकयोः भेदानभिज्ञानमेव। उक्तञ्च नागेशेन - ''लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद् वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः''इति। (म.भा.उद्योतव्याख्या - प्रथमाह्निकम्)

'अथ गौरित्यत्र कः शब्द इति विचारसन्दर्भे ''येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः इति ग्रन्थेनार्थबोधजनकस्य स्फोटात्मकशब्दस्य स्वरूपं प्रादर्शि पतञ्जलिना।

ध्वन्यात्मकवैखरीशब्दोत्पत्तौ वक्तुः मनसि प्रथमतः शब्दभावना आवश्यकी। विना शब्दभावनां प्राणवायोरूर्ध्वसमीरणं कण्ठताल्वाद्यभिघातश्च न सम्भवति।

उक्तं हरिणा-




> ''आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।
> स्थानानामभिघातश्च न विना शब्दभावनाम्॥ इति (वा.प. 1-122)

स्फोटात्मकशब्दोऽधिकरणभेदेन व्यङ्ग्यत्वं व्यञ्जकत्वञ्च भजते। तथाहि - यथा अरणिस्थं ज्योतिः सूक्ष्मरूपेण स्थितं सत् घर्षणानन्तरमुद्बुद्धस्य वह्नेः कारणं भवति तद्वत् वक्तृबुद्धिस्थः स्फोटः वक्तृप्रयत्नाभिव्यङ्ग्यध्वनिरूपरूषितः परश्रवणगोचरो भवति स च परेण श्रुतः तद्बुद्धिस्थं स्फोटमभिव्यनक्ति।ततो बोद्धुरर्थबोधो जायत इति स्फोट एव स्वरूपस्य तथा पररूपवैखर्याश्च प्रकाशको भवतीति प्रकाश्यप्रकाशभावमूलक एव वैखरीस्फोटयोः कार्यकारणभावः। स्फोटात्मकशब्दस्य व्यञ्जकत्वेनोपकारकत्वात् ध्वनिः शब्दगुण इति भाष्यकाराणामभिप्रायः। यथा - ''एवं तर्हि स्फोटः शब्दो ध्वनिः शब्दगुणः'' इति। (म.भा. 1-1-70) ''उपकारको व्यञ्जकत्वेनेत्यर्थ'' इति कैयटः। तपरसूत्रे चैतदेव भाष्यकृतोक्तम्।

> ''ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
> अल्पो महाँश्च केषाञ्चिदुभयं तत्स्वभावतः॥'' इति।

''ध्वनिः स्फोटश्च व्यङ्ग्यो व्यञ्जकश्च स्त इति शेषः। शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जको यो ध्वनिः स एव महानल्पश्च लक्ष्यते। व्यङ्ग्यस्त्वभिन्नकाल एव। उभयं व्यङ्ग्यो व्यञ्जकश्च स्वभावतः सिद्धौ केषाञ्चिद् व्यक्तानामुभयं गृह्यते अव्यक्तानां तु ध्वनिरेव'' इति कैयटः।

''योऽयं शब्दः सोऽर्थः, सोऽर्थस्स शब्द'' इत्येवमितरेतराध्यासरूपसङ्केतात् बौद्धशब्दार्थयोः तादात्म्यमभ्युपगम्यते। यस्मिन्नर्थे यस्य शब्दस्य तादात्म्यं गृहीतं तदभिव्यञ्जनाय वक्ता स्थानप्रयत्नादिसहकारेण वैखरीशब्दं प्रयुङ्क्ते। तेन च ध्वनिनाऽभिव्यक्तश्शब्दः तत्तादात्म्यापन्नमर्थमेव बोधयतीति घटध्वन्यभिव्यक्तस्फोटस्य पटध्वन्यभिव्यक्तस्फोटाद्भेदेन तस्यैकत्वेऽपि घटध्वन्यभिव्यक्तस्य न पटबोधकत्वम्।

प्राणवायौ, एवं बुद्धावर्थात् वृत्तिविशिष्टान्तःकरणे च काचित् शब्दशक्तिःनियततया वर्तते।

सैषा शक्तिः यत्नवशात् विवर्तमाना स्थूलशब्दरूपं प्रतिपद्यत इति आन्तरश्शब्दो ध्वन्यात्मकवैखरीशब्दस्य कारणं भवति। उक्तं हरिणा-

> ''तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता।
> विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते''॥ इति। वा.प. 1-117

शब्दोत्पत्तिविषये भर्तृहरिः वायुवादिनामणुवादिनां ज्ञानवादिनाञ्च मतत्रयं प्रादर्शयत्। (वा.प.1-107)

1. वक्तुरिच्छानुवर्ती प्रयत्नेन लब्धक्रियो वायुः कण्ठताल्वादिस्थानेषु प्रतिहतः शब्दो भवतीति वायुवादिनां मतम्। उक्तञ्च पाणिनीयशिक्षायाम्

"आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते॥ इति। (पा. शिक्षा. 6,7)

2. सर्वकार्येशक्तिमत्त्वेन एकविधा एव परमाणवो विभक्ताः छायातपभावेन, संयुक्ताश्च शब्दभावेन परिणमन्त इति जैना अभिप्रयन्ति। यथा वर्षाकाले मेघपरिमाणवः पुरोवातेन प्रेरिता उदकरूपेण परिणमन्ते तथा प्रयोक्तृयत्नेन संह्रियमाणाः शब्दपरिमाणवः शब्दभावेन परिणमन्त इति परमाणूनां नित्यतया सर्वदा सत्वेऽपि न सदा शब्दभावेन परिणामः। उक्तं हरिणा

"स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परिमाणवः॥" - वा.प. १ - १११

इति तृतीयञ्च ज्ञानवादिनां मतम्। मतमिदं "आख्यातोपयोगे" १-४-२९ इति सूत्रे भाष्ये भाष्यकारैः दर्शितम्। यथा "अथवा ज्योतिर्वज्ज्ञानानि भवन्तीति। सूक्ष्मशब्दाकारशक्तिमत्त्वेन स्थितं वृत्तिविशिष्टमन्तःकरणं वृत्त्या एकबुद्धिविषयीभूतार्थविषयकबोधेच्छाविशिष्टस्य स्वस्याभिव्यक्तये प्राणवाय्वादिसहकारेण स्थूलशब्दभावेन विवर्तत इति तेषामाशयः।

मतत्रये तृतीयमते एव भर्तृहरेः संमतिरस्तीति ज्ञायते। यतः मतत्रयनिरूपणानन्तरं तेनोक्तम् -

"तस्य प्राणे या शक्तिर्या च बुद्धौ व्यवस्थिता।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते"॥ इति। - वा.प. १ - ११७

एवञ्च परा पश्यन्ती मध्यमा वैखरीति चतुर्षु शब्देषु मध्यमा वाक् स्फोटशब्देनोच्यते। वैखरी च प्राकृतध्वनिर्भवति। शब्दभावनया कण्ठताल्वाद्यभिघातसहकारेणोत्पन्नो वैखरीवाक् नित्यस्फोटशब्दाभिव्यक्तौ व्यञ्जकं भवतीति सिद्धस्तयोः व्यङ्ग्यव्यञ्जकभावः। उक्तं वाक्यपदीये -

"ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा।
व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः॥" इति। - वा.प. १-९७

उक्तञ्च काव्यप्रकाशकृता मम्मटेन - "वैयाकरणैः स्फोटात्मकव्यङ्ग्यव्यञ्जकस्शब्दस्य ध्वनिरिति व्यवहारः कृतः" इति

"वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥"

(१-१४३) इति वाचस्त्रैविध्यमङ्गीकरोति भर्तृहरिः। नागेशभट्टस्तु सिद्धान्तशैवानां मतं, तन्त्रशास्त्रञ्चाश्रित्य मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागित्युच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते। ततो

हृदयपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते । तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या वैखरी वागुच्यत इति वाचश्चतुर्विधत्वमभिप्रैति। एवञ्च वाचां त्रित्वे पश्यन्तीवाक्, चतुर्विधत्वे परावाक् शब्दब्रह्मपदेनोच्यते । तदेव शब्दब्रह्म अविद्यारूपया बाह्यार्थवासनया घटपटादिरूपेण भासते। सर्वोऽपि संसारः शब्दस्यैव परिणाम इति भर्तृहरेराशयः। उक्तं तेन -

''अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ (१-१)

''शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।'' इति - १ - १२०

शब्दो द्विविधः नित्यः कार्यश्च। नित्यः सर्वव्यवहारमूलभूतः संहृतक्रमः सर्वेषामन्तस्सन्निविष्टः सर्वविकाराणां प्रभवः शब्दब्रह्मरूपः। शाब्दिकमते तेन तादात्म्यमेव जीवस्य मोक्षः। शब्दशास्त्रेण साधुशब्दानुशासनात् संस्कृतेन साधुशब्देन शुद्धेऽन्तःकरणे विशुद्धं शब्दब्रह्माभिव्यज्यते। अतस्साधुशब्दसंस्कारः शब्दब्रह्मसाक्षात्कारायोपायभूतो भवति। शब्दब्रह्मसाक्षात्कारेण मोक्षरूपसायुज्यस्यावाप्तिश्च। उक्तं हरिणा -

''अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥
तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ॥'' इति। - वाक्यपदीयम् १-१३१, १३२

# खण्डदेव-नागेशभट्टमतरीत्या आख्यातार्थविमर्शः

डॉ. जे. रामकृष्ण

पचतीत्यादौ शक्यतावच्छेदकलाघवाद् यत्नार्थककरोतिना विवरणाच्चाख्यातार्थो यत्नः कृतिः भावनेति[1] श्रीमान् खण्डदेवोऽभिप्रैति।

लाघवस्याकिञ्चित्करत्वात्, कृञो यत्नार्थकत्वाभावात्, कृञा धात्वर्थस्य विवरणाच्च न कृतिराख्यातार्थः, किन्तु कर्त्तृकर्मरूपो धर्मी तदर्थः। भावना तु धात्वर्थ एवेति वैयाकरणनागेश [2]आशेते।

## खण्डदेवमतविवरणम्

पचतीत्यत्र धातुराख्यातं चेति द्वौ भागौ दृश्येते। पचतीत्यस्य पाकं करोतीति विवरणं सार्वजनीनम्। तत्र पाकमिति शब्देन धात्वर्थः, करोतिना आख्यातार्थश्च विव्रियत इत्यपि सर्वानुभवसिद्धमेव। करोतेर्यत्नार्थकत्वादाख्यातस्य यत्नार्थकत्वमेव। भावनां न धात्वर्थः। तथा सति तस्या अपि 'पाक' मिति शब्देनैव विवरणात् करोतिना पार्थक्येन विवरणमसङ्गतं स्यात्। अतः पचतीत्यादौ कृतेर्भानात्तद्भानकारणजिज्ञासायां धातोरन्यत्रार्थे व्यापृतत्वेन पारिशेष्यादाख्यातवाच्यत्वमेव भावनायाः सिध्यतीत्यवश्यं स्वीकार्यम्।

किञ्च ''प्रत्ययार्थः प्रधान[3]'' मिति न्यायेन भावनाया आख्यातवाच्यत्वमेव युज्यते। भावनायाः प्राधान्यं वैयाकरणानामपि संमतम्। तस्या धातुवाच्यत्वे प्राधान्यं हीयेत। आख्यातेन कर्तृ-कर्म - सङ्ख्या-भावनारूपा अर्था भासन्ते। प्रत्ययार्थप्राधान्यस्मृत्या प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्ये सिद्धे तेषां प्रत्ययार्थानां मध्ये कस्य प्राधान्यमित्यपेक्षायां ''भावप्रधान माख्यात[4].'' मिति यास्कस्मृत्या भावनापरर्यायभावस्य प्राधान्यं बोध्यते। तथा च धात्वर्थापेक्षया, भावनातिरिक्ताख्यातार्थापेक्षया च भावनायाः प्राधान्यं सर्वात्मनावगम्यते। स्पष्टमिदं भाट्टरहस्ये।[5].

## अयमत्राक्षेप :-

''भावप्रधानमाख्यात'' मिति स्मृतौ भावशब्देन धात्वर्थव्यापार एव गृह्यते। तथा च वृद्धाः - ''धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते[6].'' इति। अयमर्थः - पचादिधातूनां विक्लित्त्यादि फलं, फूत्कारादिर्व्यापारश्चार्थः। कृतिरूपभावनाया अपि व्यापारपदेन ग्रहणात्सापि धातुवाच्यैव। तत्र केवलः फूत्काराद्यसंसृष्टः, शुद्धः कारकसंबन्धरहितो धात्वर्थो भाव इति व्यपदिश्यत इति स्मृतिवाक्यस्यार्थः। तथा च'' भावप्रधान माख्यात'' मिति स्मृतिरपि वैयाकरणमतमेवोपोद्बलयतीति।

---

1. ''भाट्टरहस्यम्'' कर्तृलक्षणावादे पृष्ठे - 36
2. ''वैयाकरणसिद्धान्तलघुमञ्जूषा'' तिङर्थनिरूपणे पृष्ठे - 753,775
3. ''वैयाकरणभूषणसारः'' (तत्त्वदर्शिनीसहितः) धात्वर्थनिर्णये पृष्ठे - 55
4. ''निरुक्तम्'' पृष्ठे - 4
5. ''भाट्टरहस्यम्'' लकारार्थान्वयनिरूपणे पृष्ठे - 38.
6. ''भाट्टरहस्यम्'' लकारार्थान्वयनिरूपणे पृष्ठे - 39.

**अत्र समाधानम् -**

"धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति वृद्धोक्तिर्व्याकरणशास्त्रे क्वचिद् भावपदार्थनिर्णयायैव प्रवृत्ता। न सर्वत्र। यथा - "लः कर्मणि च भावे चाकर्मकेभ्यः" 3-4-69, "भावे" 3-3-18", यस्य च भावेन भावलक्षणम्" 2-3-37, "रुजार्थानां भाववचनानामज्वरेः" 2-3-54 इत्यादौ। "तस्य भावस्त्वतलौ" 5-1-119 इत्यत्र तु सा वृद्धोक्तिर्न प्रवर्तते। [1].प्रकृतिजन्यबोधे प्रकारस्तत्र भावपदार्थः। "यूस्त्र्याख्यौ नदी" 1-4-3", "वृद्धिरादैच्" 1-1-1, "तस्य परमाम्रेडितम्" 8-1-2, "अदेङ् गुणः" 1-1-2, "अपृक्त एकाल्प्रत्ययः" 1-2-49 इत्यादिभिस्सूत्रैर्नदीवृद्ध्यादयः संज्ञा विधीयन्ते। ताश्च "अम्बार्थनद्योर्ह्रस्वः" 7 - 3- 107, "वृद्धिरेचि" 6-1-87, "नोम्रेडितस्यान्त्यस्य तु वा" 6-1-99, "आद् गुणः" 6-1-87 "हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्" 6-1-68 इत्यादिसूत्रेषु विद्यमानानां नद्यादिपदानामेव शक्तिग्राहिकाः। न तु गङ्गागोदावर्यभिवृद्ध्यादिलोकप्रसिद्धानाम्। एवं "धात्वर्थः केवलः शुद्ध" इति वृद्धोक्तिरपि तादृश्येव। न सा "भावप्रधानमाख्यात" मिति शास्त्रान्तरस्थ-भावशब्दार्थस्य निर्णायिका। अतस्तां स्मृतिमवलम्ब्य भावनाया धातुवाच्यत्वप्रतिपादनमयुक्तमेव। अतो भूधातोर्ण्यन्ताद् "एरच्" 3-3-56 इत्यच्प्रत्ययेन निष्पन्नभावशब्देनाख्यातवाच्यभावनाया एव ग्रहणं सिध्यति।

"लः कर्मणि चभावे चाकर्मकेभ्यः" 3-4-69 इत्यनुशासनं तु लकारस्य कर्तृकर्मणोर्लक्षणास्वीकारे तात्पर्यग्राहकम्।

किञ्चाख्यातस्य कर्त्रर्थकत्वं न युक्तम्। कर्तरि शक्त्यभ्युपगमे कर्तृत्वं शक्यतावच्छेदकं भवति। कर्तृत्वं च कृत्याश्रयत्वम्। तत्वं च कृतिरेव। तथा चानन्तकृतीनामाख्यातशक्यतावच्छेदकत्वे गौरवम्। कृतेः शक्यत्वे तु कृतित्वं शक्यातावच्छेदकम्। तच्च जातिरूपमिति लाघवम्।

एवञ्च यत्नार्थककरोतिना विवरणं, शक्यतावच्छेदकविवरणं च कृतौ शक्तिवादिनां मते प्रमाणमिति खण्डदेवाशयः। स्पष्टोऽयं [2]भाट्टरहस्ये।

**नागेशमतविवरणम् -**

"लः कर्मणि च भावे चाकर्मकेभ्यः" 3-4-69 इति सूत्रबलात् कर्तृ-कर्मरूपो धर्मी आख्यातार्थः। न तु भावना। कर्तरि शक्तिर्भावनायां लक्षणेत्यर्थस्यापि सुवचतया भावनायां शक्तिः कर्तरि लक्षणेति कथनं खण्डदेवस्य न युक्तम्। यथा, [3]आकृत्यधिकरणे लाघवाद् घटादिपदानां जातौ शक्तिं स्वीकृत्य लक्ष्याया व्यक्तेः प्राधान्यमङ्गीकृतम्। तद्वदत्रापि सुवचत्वात्। अन्यथा प्राधान्यानुरोधाद् व्यक्तेरेव प्राधान्यस्वीकार आकृत्यधिकरणविरोधः प्रसज्येत।

किञ्च करोतिना विवरणं भावनाया आख्यातवाच्यत्वे न प्रमाणं भवितुमर्हति। यतः पचादिधातूनां विक्लित्त्यादिकं फलं तदनुकूलफूत्कारादिव्यापारस्तदनुकूला भावना च वाच्योऽर्थः। तत्र फलव्यापारौ 'पाक' मित्यनेन, करोतिना भावना च विव्रियत इति सुवचतया विवरणं वैयाकरणानामेवानुकूलम्। न ह्येकेन पदेनोपात्तानामर्थानामेकेनैव पदेन विवरणं कर्तव्यं, न पदान्तरेणेति नियमोऽस्ति। अन्यथा खण्डदेवमते तिङर्थानां कृति - काल -सङ्ख्यानां मध्ये कृतेः कृधातुना, काल - सङ्ख्ययोः करोत्युत्तरतिङा च विवरणं प्रतिकूलमेव। अतो विवरणं वैयाकरणानामनुकूलमेव।

---

1. "वैयाकरणसिद्धान्तकौमुदी" तद्धितप्रकरणे पृष्ठे - 153. 2. "भाट्टरहस्यम्" कर्तृलक्षणावादे पृष्ठे - 35, 36.
3. "शास्त्रदीपिका" प्रथमाध्याये तृतीयपाद एकादशाधिकरणे पृष्ठे - 72. 4. "पातञ्जलं महाभाष्यम्" प्रथमाध्याये पृष्ठे - 160.

## नागोशमते भाष्यप्रामाण्यम्

अपि च ''भूवादयो धातवः'' 1-3-1 इति [4]सूत्रभाष्ये ''क्रियावचनो धातु'' रिति न्यासे ''कथं ज्ञायते क्रियावचनाः पचादय इति?'' इति प्रश्ने ''यदेतेषां करोतिना सामानाधिकरण्यम्। किं करोति? पचति। किं करिष्यति? पक्ष्यति। किमकार्षीत्? अपाक्षीद्'' इति समाहितम्। अत्र भाष्ये प्रश्नोत्तररूपविवरणेन पचादीनां करोतिसामानाधिकरण्यात् क्रियावाचित्वं साधितम्। अत्र करोतिर्धात्वर्थविवरणमिति स्पष्टं प्रतीयते। किञ्च कृञ्धातोर्भावनावाचित्वेन सर्वत्रापि धातोर्भावनावाचित्वमेव युज्यते।

## अवच्छेदकगौरवात्कर्ता न वाच्य इति न युक्तम्

किञ्च, शक्यतावच्छेदकगौरवात् कर्ता नाख्यातवाच्य इत्यपि न युक्तम्। अन्यूनानतिरिक्तत्व-रूपस्यावच्छेदकत्वस्य गुरुण्यपि स्वीकारे बाधकाभावात्। अवच्छेदकत्वस्य स्वरूपसम्बन्धत्वेऽपि गुरुण्यपि तत्सत्त्वान्न दोषः। किञ्च ''संभवति लघौ गुरौ नावच्छेदकत्व[1]'' मिति नियमः स्वीक्रियताम्। तत्रेयान् विशेषः - यत्र लघुगुरुरूपधर्माभ्यां बोधो निर्विवादस्तत्र स नियमः। यथा, घटत्वेन, कम्बुग्रीवादिमत्त्वेन च बोधस्य निर्विवादतया तत्र लघुनि घटत्व एवावच्छेदकत्वम्। प्रकृते कृतित्वेनाख्यातार्थबोधः सविवादः। धातुत एव तत्प्रतीतेः। किञ्चेदं गौरवं गुरुतरभारोत्तोलनमिव देहस्य, चित्तस्य वा न खेदजनकम्। अतादृशस्य च न दूषकत्वात्।

किञ्चाख्यातस्य भावनायां शक्तिः, कर्तरि लक्षणा, लक्षितस्य कर्तुर्भावनायां विशेषणत्वमिति न समीचीनम्। लक्षणास्थले शक्यार्थस्य लक्ष्यार्थे विशेषणताया एव न्याय्यत्वात्। गङ्गायां घोष इत्यादौ गङ्गापदशक्यस्य प्रवाहस्य तल्लक्ष्ये तीरादौ विशेषणताया एव दर्शनात्। व्युत्पत्त्यन्तरकल्पने तु गौरवम्। अतो भावना धातुवाच्यैव। कर्तृ - कर्मरूपो धर्मी आख्यातार्थ इति स्पष्टं लघुमञ्जूषायाम्।[2]

## समीक्षा

एवमाख्यातार्थः कृतिः, कर्ता वेत्यत्र खण्डदेवनागेशभट्टयोराशयोऽत्र प्रादर्शि। अत्रेदं बोध्यम्। ''भावप्रधानमाख्यात'' मिति निरुक्तवाक्य आख्यातपदं न तिङ्परम्। तस्य तदर्थकत्वे मानाभावात्। अत आख्यातपदं पचति, गच्छतीत्यादितिङन्तपरम्। तथा च '' ते विभक्त्यन्ताः पदम्'' 2-2-60 इति गोतमसूत्रव्याख्याने न्यायवार्तिककारेणोद्योतकरेणोक्तं यथा - ''विभक्तिर्द्वयी। नामिकी चाख्यातिकी च। नामिकी स्वादयः। आख्यातिकी तिबादयः। तया विशेष्यमाणं पदं द्वेधा भवति। नाम चाख्यातञ्चेति[3].'' इति। अनेनाख्यातस्य तिङन्तपरत्वं स्पष्टमेव।

किञ्च यास्केन ''चत्वारि पदजातानी'' ति पदजातमुद्दिष्टम्। तच्च - (१) नाम, (२) आख्यातम् (३) उपसर्गः (४) निपात इति। उद्दिष्टस्याख्यातरूपपदस्य लक्षणप्रतिपादनपरं ''भावप्रधानमाख्यात[4]'' मिति यास्कवचनम्। तत्राख्यातपदेन प्रत्ययान्तस्यैव ग्रहणं न्याय्यम्। किञ्च ''प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधान[5].'' मिति स्मृत्या प्रकृत्यर्थापेक्षया प्रत्ययार्थप्राधान्यं बोध्यते। प्रत्ययार्थानां मध्ये कस्य प्राधान्यमित्यपेक्षायां

---

1. ''अवच्छेदकत्वनिरुक्तिः'' पृष्ठे - 1
2. ''वैयाकरणसिद्धान्तलघुमञ्जूषा'' तिङर्थनिरूपणे पृष्ठे - 753
3. ''न्यायवार्तिकम्'' पृष्ठे - 310.
4. ''निरुक्तम्'' पृष्ठे - 32
5. ''मीमांसन्यायप्रकाशः'' सारविवेचिनीव्याख्यायां पृष्ठे - 122, 158

भावनापरनामकभावस्य प्राधान्यं यास्केन बोध्यत इति खण्डदेवोक्तिरपि न युक्तेति भाति । तादृशविचारस्य निरुक्तेऽदर्शनात् । उद्दिष्टानां चतुर्विधानां पदानां लक्षणप्रतिपादन एव निरुक्तस्य तात्पर्यम् । अपि च "भावप्रधानमाख्यात" मिति निरुक्तमवलम्ब्य भावनाया एव मुख्यविशेष्यत्वप्रतिपादनमपि खण्डदेवस्य न युज्यते। पचतीत्याख्यातजन्यबोधे भावस्य प्राधान्यमित्येवार्थस्तेन वचनेन प्रतिपाद्यते, न तु वाक्यार्थे तस्य मुख्यविशेष्यत्वम्। अन्यथा " सत्त्वप्रधानानि नामानी[1]." ति निरुक्तवचनान्तरेण नामार्थस्य प्राधान्यबोधकवचनं न घटेत । अतस्तत्रैवं व्यवस्था कार्या - केवलं पचतीत्युक्ते ततो भावस्य प्राधान्यं बोध्यते । घटः, पाचक इत्यादिनामप्रयोगे तु सत्त्वस्य द्रव्यस्य प्राधान्यं बोध्यते । तयोस्तल्लक्षणप्रतिपादनपरत्वात् । भावनायाः सर्वात्मना प्राधन्यं ततो नावगम्यते । एतादृशयोर्नामार्थयो रुभयोरपि वाक्यप्रयोगे तु यथा, चैत्रः पचति, पाचको गच्छतीत्यादौ तत्र, 'यत्रोभे ते भावप्रधाने भवतः[2]" इत्युत्तरनिरुक्तवाक्येनैव शाब्दबोधे भावनाया मुख्यविशेष्यत्वं प्रतिपादनीयं, न तु "भावप्रधानमाख्यात" मिति वचनमाश्रित्य । स्पष्टमिदं [3]लघुमञ्जूषायाम् ।

अपि च "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति वृद्धस्मृतेः परिणामरूपत्वेन नदी वृद्ध्यादिसंज्ञादृष्टान्तेन व्याकरणशास्त्रस्थपदार्थप्रतिपादनमात्रपरत्वं, न तु निरुक्तस्थपदानामपीति खण्डदेवोक्तिर्न युक्तेति भाति । यतस्तदुक्तो दृष्टान्तो विषमः । नदी - वृद्ध्यादिसंज्ञाशब्दाः केवलं पारिभाषिकाः । 'भाव' शब्दस्तु न तादृशः । कर्तृ - कर्म - करणाधिकरण - पश्वपत्यादिशब्दा लोकशास्त्रसाधारणाः । तत्सदृश एव भावशब्दोऽपि। किञ्च "तस्य भावस्त्वतलौ" 5-1-119 इति सूत्रे भावशब्देन "धात्वर्थः केवल" इत्यादिपारिभाषिकार्थस्य व्यभिचारः प्रदर्शितः खण्डदेवेन । तदपि न युक्तमिति भाति । यतो लक्ष्यानुसारात्तत्र शब्दानां भिन्नार्थकत्वस्य न्याय्यवात् । अत एव "उभय गतिरिह भवती[4]" ति परिभाषा संगच्छते ।

**व्याकरणशास्त्रोपोद्घलकं निरुक्तम् -**

किञ्च निरुक्तं न व्याकरणशास्त्रस्य विरोधि, किन्तु उपोद्घलकमेव । अत एव यास्केन " तदिदं विद्यास्थानं व्याकरणशास्त्रस्य कार्त्स्न्यम्[5]" इति स्पष्टमुक्तं निरुक्ते ।

एवञ्च "भावप्रधानमाख्यात" मिति शास्त्रान्तरवचनं व्याकरणशास्त्रसिद्धान्तनिर्णायकं न भवतीत्यभ्युपगमे खण्डदेवस्य नैवोपकरोति । अतो नागेशोक्तरीत्या भावना धातुवाच्या, कर्ता चाख्यातार्थ इत्येव युक्तमिति मे भाति । सुधियस्तत्र प्रमाणमिति शम् ।

---

1. "निरुक्तम्" पृष्ठे - 4.
2. "निरुक्तम्" पृष्ठे - 5.
3. "वैयकरणसिद्धान्तलघुमञ्जूषा" तिङर्थनिरूपणे पृ. 789.
4. "परिभाषेन्दुशेखरः" परिभाषासङ्ख्या - 9
5. "निरुक्तम्" पृष्ठे - 37.

## निबन्धेऽस्मिन्ननुशीलितग्रन्थानां विवरणसूची


| | ग्रन्थः | कर्ता | प्रकाशकः |
|---|---|---|---|
| 1. | अवच्छेदकत्वनिरुक्तिः | जगदीशतर्कालङ्काराः | गीताधर्मप्रेस्, वाराणसी 1968 |
| 2. | निरुक्तम् | यास्कः | Meharchand lakshimandas New Delhi 1982. |
| 3. | न्यायवार्तिकम् | उद्योतकरः | चौखम्बा संस्कृत सीरीज आफीस, बनारस, 1915 |
| 4. | परिभाषेन्दुशेखरः | नागेशः | Andhra University, Waltair 1955. |
| 6. | भाट्टरहस्यम् | खण्डदेवः | Anantacharya, Kanchi Puram |
| 7. | मीमांसान्यायप्रकाशः | आपदेवः | चौखम्बा संस्कृतसीरीज आफीस, वाराणसी |
| 8. | वैयाकरणभूषणसारः | कौण्डभट्टः | श्रीपेरि सूर्यनारायणशास्त्रिणाम् राजमहेन्द्री 1978 |
| 9. | वैयाकरणसिद्धान्तलघुमञ्जूषा | नागेशः | चौखम्बा संस्कृत सीरीज आफीस, वाराणसी, |
| 10. | वैयाकरणसिद्धान्तकौमुदी | भट्टोजिदीक्षितः | Motilal Banarsidas Delhi, |
| 11. | शास्त्रदीपिका (प्रथमोऽध्यायः) | पार्थसारथिमिश्रः | L.B.S.K.S. Vidyapeetham, New Delhi, 1978. |

# महावाक्यम्

पोचंचर्ल श्रीराममूर्तिः

अखण्डः सैष वाक्यार्थः शब्दब्रह्मेति गीयते ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

भारतीयानामुपज्ञमिदं शब्दशास्त्रम् । अधुनापि भाषाशास्त्रपरिशोधनेषु भारतीयानां शास्त्रविचाराः परमुपादेयाः उपकारकाश्च भवन्ति इति विदितचरमेव विदुषाम् । तथापि कस्मिन् विषये पुनः अद्यतने काले परिशोधनं प्रवर्तयितव्यम्, कस्मिंश्च विचारः कर्तव्यः इत्यादि अस्माभिः अवगन्तव्यम् । निपुणं विचार्यमाणे एवंरूपः कश्चन विषयः महावाक्यविचारः इति मे प्रतिभाति । अस्य भाषाशास्त्रे Discourse Analysis इति, Hyper Syntax इति, Text Grammar इति च व्यवहारः वर्तते । भारतीयेषु शास्त्रेषु विशिष्य मीमांसाशास्त्रे अयं विचारः बहुलं प्रवृत्तः आसीत् । अन्यत्र व्याकरणे, अलङ्कारशास्त्रे च । एतेषां विचाराणां किञ्चिदिव यथाशक्ति प्रस्तावः क्रियते ।

मनुष्यैः व्यवहारार्थं प्रायशः भाषा एव (शब्दः एव) उपयुज्यते चेष्टाद्यपेक्षया शब्दस्य व्याप्तिमत्त्वात् । अयं च शब्दः वाक्यरूपः यतः तस्यैव पूर्णतया अर्थाविष्करणे सामर्थ्यं वरीवर्ति । तच्च वाक्यं किम् ? तल्लक्षणञ्च कतिधा प्रतिपादितमिति विचार्यते ।

लक्षणानि च कानिचित्

**एकतिङ्वाक्यम् ।**

एकोद्देश्यकैकविधेयकत्वगर्भम् एकवाक्यलक्षणम् ।

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते ॥ वा.॥. द्वि. 4
आख्यातं साव्ययकारकविशेषणं वाक्यम् ।
सक्रियाविशेषणञ्च ।
आख्यातं सविशेषणं वाक्यम् ।

उद्देश्यानेकत्वे विधेयानेकत्वे च वाक्यभेदः भवति । एतेषां परीक्षया सिध्यति यत् क्रियाकारकाकाङ्क्षा यदि समाप्यते तर्हि वाक्यैक्यं भवति । अर्थश्च प्रतिपादितः स्यादिति ।

किञ्च यद्यपि पदानां परस्पराकाङ्क्षा सुप्तिङ्विभक्तिप्रयोगेण परिसमाप्यते तथापि तात्पर्यार्थज्ञानं प्रत्याययितुं प्रायः वाक्यान्तराणाम् आकाङ्क्षा जायत एव । यथोक्तं तन्त्रवार्तिके -

तस्मात् पदेषु यावत्सु श्रूयमाणेषु दृश्यते ।
विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता ॥ इति ।

अनेन ज्ञायते - वाक्यस्य पर्याप्तिः यावदर्थबोधः भवतीति। तत्पूर्वं चास्यापरिसमाप्तिरेव, तत्पर्यन्तं वाक्यत्वं प्रसरति चेति।

किं च तात्पर्यार्थस्य विवक्षितस्य बोधः एकेनैव वाक्येन प्रतिपादयितुं नैव शक्यते। व्यवहारे, शास्त्रे, काव्येषु चासकृत् अस्माभिः विषयस्यैकस्य सम्यक् प्रतिपादनार्थं वाक्यसमुदायः प्रयुज्यते, न त्वेकमेव वाक्यम्। तेषां च वाक्यानां तदर्थानां च परस्परं घनिष्ठः संबन्धः बहुरूपः विराजते। वाक्यानां परस्परमन्वयः एकवाक्यता च भवति। यथोक्तम्

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः सहत्य जायते॥ इति त.वा. I-4-13-24

अयमेव वाक्यसमुदायः महावाक्यमित्युच्यते। सम्यक् चोक्तं विश्वनाथेन साहित्यदर्पणे - वाक्योच्चयो महावाक्यम् इति अवान्तरवाक्यानां परस्परसंबन्धबोधकानि च पदानि यद्यपि - तथापि, अथवा, नो चेत् इत्यादीनि बहूनि सन्ति। व्याख्यातारश्च तत्संबन्धान् विशदीकुर्वन्ति उक्तानि अनुक्तानि च। अत एव शब्दलक्षणानि यथायोग्यम् अमुमेवाभिप्रायं मनसि निधाय प्रतिपादितानि।

महाभाष्ये - अथ शब्दानुशासनम् इति उपक्रम्य वैदिकशब्दानाम् उदाहरणत्वेन मन्त्राः महावाक्यमित्यर्थः इति प्रतिपादितम्। कुमारिलेन शास्त्रस्वरूपं विशदीकुर्वता समग्राङ्गवाक्योपसंहृतस्यैव वाक्यसमुदायस्य शास्त्रत्वमुपपादितम्। तदभावे शास्त्रार्थस्यानवगमप्रसङ्गात्। यथोक्तम्

अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते।
अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ।

सर्वत्र तात्पर्यज्ञानाय परिपूर्णं महावाक्यं ग्राह्यं भवति न एकदेशमात्रम्। एकदेशस्य शास्त्रस्य तदर्थस्य च अप्रामाण्यात्। यथोक्तं शाबरभाष्ये - सति महावाक्ये नावान्तरवाक्यस्य प्रामाण्यम् - इति (६-४-७-२५) तन्त्रवार्तिके चास्योदाहरणं दत्तम् - महासंख्येषु अवान्तरसंख्याना मिव - इति (1-2-17)।

अत एव वाक्यपदीयकाराः वाक्यस्फोटमेवाखण्डतयाङ्गीकुर्वन्ति। तत्र च तेषामाशयः पुनः महावाक्यार्थः स्फोट एव स्यात्। अयमर्थः स्फोटसिद्धिन्यायविचारनामके ग्रन्थे स्पष्टं प्रतिपादितः यथा-

अतोऽ त्र वर्णेऽवयवाः पदे वर्णाः, पदान्यपि वाक्ये। तानि महावाक्ये नैव सन्ति स्वरूपतः।
ते च सर्वे अवयवाः अपोद्धारबुद्ध्यैव गृहीताः विश्लिष्यन्ते॥

अयं च महावाक्यार्थविचारः आदौ मीमांसाशास्त्रे कृतः तदनन्तरं च शास्त्रान्तरेषु। यागश्च धर्मः। धर्मश्च चोदनालक्षणोऽर्थः। तदवबोधाय वेदवाक्यानां तात्पर्यनिर्णयः आवश्यकः अभूत्। तत्र पुनः कर्मावबोधकवाक्यानां साक्षात् पुरुषार्थसंबद्धानां कर्मविधिवाक्यानां प्राधान्यमुपपादितम्। "आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्" इति॥ वाक्यान्तराणां च विध्यङ्गतयैव सार्थक्यं तदेकवाक्यता चेति निरूपितम्। यथा अर्थवादवाक्यानां विधीनां स्तुत्यर्थत्वेन। मन्त्रद्रव्यादिबोधकानामपि तत्तदङ्गप्रतिपादकतया विधिवाक्यैः एकवाक्यता भवति। स्वीयया प्रक्रियया अङ्गबोधकानां सर्वेषां वाक्यानां शाखान्तरस्थितानामपि

शाखान्तराधिकरणन्यायादिना विधिवाक्यशेषता प्रतिपादिता। सर्वस्य च प्रकरणस्य महावाक्यत्वं प्रतिपादितम्। अर्थबोधे च विशेषणविशेष्यभावः स्वीकृतः। तात्पर्यनिर्णयाय श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि प्रमाणानि च निरूपितानि। तात्पर्यनिर्णये लिङ्गानि च प्रतिपादितानि।

उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गंतात्पर्यनिर्णये॥ इति।

एतान्येव लिङ्गानि वेदान्तशास्त्रेऽपि श्रीमच्छङ्कराचार्यप्रभृतिभिः उपनिषदर्थनिर्णयाय उपयुक्तानि। यथा स्पष्टं निरूपितं वेदान्तसारे - सद्विद्याप्रकरणे छान्दोग्यान्तर्गते प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपादानम् उपक्रमोपसंहाराविति। एकमेवाद्वितीयम् इत्यादौ, ऐतदात्म्यमिदं सर्वमित्यन्ते प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः तत्वमसीति नवकृत्वः प्रतिपादनम्। तत्रैव प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः मानान्तराविषयीकरणमपूर्वता। फलं चात्र आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते। अर्थवादश्च तत्रैव उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् इत्यद्वितीयवस्तु प्रशंसनम्।युक्तिरेव उपपत्तिः "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति। एवं च सर्वस्य प्रकरणस्यार्थः तात्पर्यलिङ्गैः निर्णीतः। सर्वमपि प्रकरणम् एकं महावाक्यम्। तदर्थस्य 'तत्त्वमसी' ति वाक्येनापि क्लृप्ततया प्रतिपादनात् तदापि वाक्यं महावाक्यमित्युच्यते। एवमेवान्येषामपि 'अयमात्मा ब्रह्म', इत्यादीनां महावाक्यत्वसिद्धिः तत्तत्प्रकरणार्थबोधकत्वेनैवेति।

श्रीमच्छङ्कराचार्यैः कर्मप्रतिपादकस्य वेदभागस्य ब्रह्मप्रतिपादकस्य च वेदान्तस्य शास्त्रभेदनिरूपणावसरे विषयभेदः फलभेदश्च युक्तितया प्रतिपादितः। तयोः एकवाक्यता नैवाङ्गीकृता। किंतु श्रीमद्रामानुजप्रभृतिभिश्च कर्मज्ञानसमुच्चयवादिभिः तयोः एकवाक्यता स्वीकृता, अङ्गाङ्गिभावश्च।

किं च वेदान्तानां सर्वेषामपि ब्रह्मणि तात्पर्यं बोधयन्ति वेदान्तिनः। तद्विषये तात्पर्यावगमाय प्रकरणान्तरस्थितानपि गुणानुपसंहरन्ति। स गुणोपसंहारन्याय इति प्रसिद्धः। साधनचतुष्टये शमादिषट्कं न कुत्रापि लभ्यते। तथापि एकत्र 'समाहितो भूत्वा' इति अन्यत्र 'श्रद्धावित्तो भूत्वा' इति च लभ्यमानत्वात् द्वयमपि स्वीकृत्य शमः, दमः, उपरतिः, तितिक्षा, श्रद्धा, समाधिश्च शमादिषट्कत्वेन प्रतिपादितम्। अनेन सर्वस्यापि वेदान्तस्य महावाक्यत्वं सिद्ध्यति।

पूर्वमीमांसाशास्त्रम् अधिकरणेषु विभक्तं समन्वितं च। तथैव वेदान्तशास्त्रम् अन्यानि च शास्त्राणि। तत्र अवान्तराधिकरणानां पूर्णस्य च शास्त्रस्य एकवाक्यता एकार्थीभावश्च निरूपितः।विषयः, विशयः, पूर्वपक्षः, सिद्धान्तः, सङ्गतिश्चेति विभागः तेषां च तत्तधिकरणेषु एकवाक्यता तात्पर्यबोधकत्वं च। सर्वाण्यपि शास्त्राणि अवान्तराधिकरणैः सह प्रधानम् उपदेशं कुर्वन्ति। यथोक्तं कुमारिलेन-

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैस्सह।
एकवाक्यतया बिभ्रत् उपदेशं प्रतन्वते॥ इति

अस्य च उदाहरणं कुमारिलेन व्याकरणशास्त्रं दत्तम्। तत्र पाणिनीय सूत्राणि बहुप्रकाराणि विद्यन्ते-

संज्ञा च परिभाषा च विधिः नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥ इति॥

तत्र हि एकैकस्मिन् पदे प्रायेणाष्टाध्यायी व्याप्रियते। अत्र च एकवाक्यता च सति विशेषणविशेष्यभावे संभवति नान्यथा। सोऽपि सामानाधिकरण्येन वा वैयधिकरण्येन वा भवति। क्रियाकारकरूपः शेषशेषिरूपश्च। पराणि च संज्ञापरिभाषादिरूपेण लोपागमवर्ण - विकारादिशास्त्राणि सर्वाण्येकं वाक्यम्। एतानि च सूत्राणि प्रायेणोत्सर्गापवादक्रमेण प्रवर्तन्ते।

महाभाष्ये च वाक्यापरिसमाप्तेर्वा इति वार्तिकस्य व्याख्यानावसरे - "किमिदं वाक्यापरिसमाप्तेरिति। वर्णानामुपदेशस्तावत्। उपदेशोत्तरकाला इत् संज्ञा। इत्संज्ञोत्तरकालः आदिरन्त्येन सहेतेति प्रत्याहारः। प्रत्याहारोत्तरकाला सवर्णसंज्ञा। सवर्णसंज्ञोत्तरकालम् अणुदित्सवर्णस्य चाप्रत्ययः इति सवर्णग्रहणम्। एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवती" ति महावाक्यान्वयः प्रदर्शितः।

न्यायशास्त्रेऽपि पञ्चावयववाक्यस्यैव न्याय इति संज्ञा। अवयवाश्च प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनमिति प्रत्येकः एकैकेन वाक्येन प्रतिपादिताः भवन्ति। समुदिताश्च एकवाक्यतया अनुमाने प्रवर्तन्ते। एवमेव उपमानेऽपि। शास्त्रं च सर्वं परस्परान्वयेन एकवाक्यतां बिभ्रदेव स्वम् उपदेशं ददाति।

काव्येष्वपि प्रबन्धरूपेषु इयम् एकवाक्यता दरीदृश्यते। अत एव भोजः- "विधिनिषेधावगतिहेतुः महावाक्यं प्रबन्धः" इति लक्षयति। अत्र यदि स प्रबन्धः रसात्मकः तत् महाकाव्यं भवति। रामायणं चात्र उदाहरणम्। तत्र करुणः वीरो वा रसः। रामादिवत् वर्तितव्यं न रावणादिवदिति उपदेशः महावाक्यार्थत्वेन काव्यार्थत्वेन सिध्यति। अत उक्तम्

रसो वाक्यार्थस्सन् विलसति पदार्थाः पुनरमी
विभावाद्या यस्मिन् किल दधति विश्रान्तिमुचिताम्।
अतो भावा एव क्रमसमुदितान्योन्यविभवाः
रसीभावं बिभ्रत्यथ च पटतां तन्तव इव॥

अत्र च काव्ये अवान्तरवाक्यानां महावाक्यस्य च पद-पदार्थवाक्य - वाक्यार्थसंबन्धन्यायेन संबन्धः प्रतिपादितः। तन्तुपटसंबन्धश्च उदाहरणं दत्तम्।

एवं च लोके वेदे काव्ये शास्त्रे च एकवाक्यतां गताः महावाक्यतां प्राप्ताः वाक्यसमुदाया एव व्यवहारे उपयुज्यन्त इति महावाक्यविचारस्य प्राधान्यं निरूपितम्।

संस्कृते पुनः शास्त्रेषु अस्य विचारस्य बहुधा प्रवर्तितत्वात् तेषाम् अध्ययनं विशेषतः कार्यं भवति। आधुनिकभाषाशास्त्रे प्रवर्त्यमानानां विचाराणां च परस्परं तुलना शोधनं च विधेयं वर्तते। अनेन वाङ्मयस्य अनुशीलने निर्माणे च कौशलं वर्धते इति महत् प्रयोजनं सिध्यति इति शम्।

# वेदानां वेदत्वविचारः

डा० पा० सीताराम हेब्बारः एम्० ए०, पी-एच्० डी०

**१ - १ कोऽसौ वेदः**

अयं वेदः किं मूलकः इति प्रथमतः विचार्यते तत्र -
योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ (मनु० २-१६८)

इति, वेदाद्धर्मो हि निर्ममौ (मनु० ५-४४)

इति च, वेद एव द्विजातीनां निःश्रेयसकरः परः। (याज्ञ० स्मृ० १-४०)

इत्यादिषु वचनेषु च निश्शकं श्रद्धधानाः देशास्यास्य साम्प्रदायिकाः वेदमवश्यमधीयते स्म। वेदोदितान् धर्मान् च स्वकर्तव्यतया परिपालयन्ति स्म। परं गच्छता कालेन तद्युगं परिवृत्तम्, अनुदिनं परिवर्तते च। इदानीं तु शुद्धं वैज्ञानिकं युगं भवति। अस्मिन् विज्ञानयुगे विज्ञानानुमोदनं विना किमपि सर्वमपि च कर्तव्यमकर्तव्यं भवति। सत्यप्येवम् -

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्मात् वेदस्य वेदता॥

इति अभियुक्तोक्त्या धर्म-ब्रह्मणोः बोधकाः ऋग्यजुस्सामाथर्वाख्याः चत्वारो ग्रन्थाः एव वेदाः इत्युच्यन्ते। एवं सति -

ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः सर्वा गतिर्याजुषी हैव शश्वत्।
सर्वम् तेजः सामरूपं ह शश्वत् सर्वं वेदं ब्रह्मणा हैव सृष्टम्॥

(तै० ब्रा० ३-१२-९.१) इति तैत्तिरीयब्राह्मणे ऋगादीनां मूर्ति-गति-तेजो निदानत्वमुच्यमानं सत् तेषां वेदानां ग्रन्थात्मकत्वपक्षो न घटते। कुत इति चेत् - ग्रन्थेभ्यः मूर्तिः गतिः तेजो वा जायमानं न क्वचित् केनचित् दृष्टं भवति। किं चात्र श्रुतौ ब्रह्मशब्देन वेद एव गृह्यते। न च ग्रन्थात्मकात् वेदात् सृष्टिः सम्भवति।

अयमभिप्रायः-

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्॥ (मनु० १ - २३)

इति मुनुस्मृत्युक्तरीत्या ऋग्यजुस्सामाख्याः वेदाः यज्ञनिष्पादकाः भवन्तीति सिध्यति। जगति कृत्रिमं वा यत्किमपि दृष्टिपथमायाति स सर्वोऽपि एकैको यज्ञ एवेति उच्यते। पृथिवी वा सूर्यो वा चन्द्रो वा नक्षत्राणि वा ग्रहा वा वनस्पतयो वा मनुष्यो वा सर्वाणि एतानि यज्ञरूपयता एव जीवनं दधते।

अग्नीषोमात्मकं जगत इत्युक्त्या सर्वमिदं वेद्यामग्नौ सोमाहुत्वे स्वं स्वमात्मानं धत्ते, सर्वेषां यज्ञत्वाविशेषात्। इह यज्ञेनैव यज्ञः इज्यते, तत्र लघवो यज्ञाः महतो यज्ञस्यान्नं भवति। तथा श्रूयते शतपथब्राह्मणे-

अहरहर्वा एष यज्ञस्तायते, अहरहः सन्तिष्ठते, अहरहरेनं
स्वर्गस्य लोकस्य गत्यै युङ्‍ते, अहरहरनेन स्वर्गं लोकं गच्छति।

(शत० ब्रा० ६-४-४-१५) इति। स एषः यज्ञः अग्नि-वाय्वादिदेवरूपैः ऋगादिवेदैः प्रवर्तितत्वात् देवयज्ञ इत्युच्यते। तमेतं देवयज्ञं वेदात् याथातथ्येन दृष्ट्वा तत्सादृश्येनैव याज्ञिकाः लोके अपि यज्ञान् प्रवर्तयन्ति। यथावत् इह जायते तत् यज्ञादेव जायते। तस्मात् वयं यत् कामयामहे तद् यज्ञादेव लप्स्यामहे इति याज्ञिकानां दृष्टिर्भवति।

अस्मिन् वेदविषये यद्यपि मीमांसायां जैमिनिना -

आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्,
तस्मादनित्यमित्युच्यते।

(मी० सू० १-२-१) इति सूत्रेण विधेय-कर्मोपपादकानां वाक्यानां सिद्धार्थबोधकत्वात् निष्प्रयोजनत्वलक्षणम-प्रामाण्यमाशङ्‍कितम् तथापि तत्र तेनैव परमर्षिणा -

विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः

(मी० सू० १-२-७) इति सूत्रेण एतन्निराकृतम्। अत्रायमभिप्रायो भवति यत् यद्यपि तानि सिद्धार्थप्रतिपादकानि वाक्यानि इति सत्यमेव, तथापि अप्ररोचिताः पुरुषाः कर्मसु न प्रवर्तन्ते, अतः विधेयप्रशंसया तेषां प्ररोचनामुत्पादयन्ति तानि वाक्यानि। ते विधिवाक्यैरेवान्वयं लब्ध्वा विधेयबोधकानीव साध्ये धर्मे प्रामाण्यं प्राप्नुवन्तीति।

अत्रेयमाशङ्का भवति यत् ऋग्यजुस्साम्नामेवोपयुक्तैः प्रमाणैः ग्रन्थात्मकतातिरिक्त-प्रमाणादिरूपता सिध्यति, न पुनः अथर्ववेदस्य। अतः सः वेदः किं ग्रन्थात्मकः उत अन्यविध इति। तत्र समाधानम् - अग्नीषोमात्मकं जगत् इति वैदिकानं सिद्धान्तानुसारेण अस्यां जगति यद् यावच्च दृश्यते तत्सर्वमग्नीषोमीयमित्युच्यते। तत्र ऋग्यजुस्सामानि अग्नि-प्राण-अन्नरूपाणि, अथर्ववेदः सोमप्रधानः अब्रूपो मवति। तत्र प्राणरूपः अग्निः अत्ता, सोमश्च तस्य खाद्यरूपम् अन्नमित्युच्यते। अन्नमपि अग्नावाहुतः अन्ततः अग्निरूपेणैव परिणमति इत्यतः अत्ता एवाख्यायते न पृथक् खाद्यरूपस्य सोमस्य प्राधान्यम्। एवं सोम-प्रधानभूतस्य अथर्ववेदस्य त्रय्यामग्निरूपायामेवान्तर्भावः भवितुमर्हतीति। अत एवोच्यते छान्दोग्ये -

तेनेयं त्रयी विद्या वर्तते, ओमित्याश्रावयति।

(छा० उ० १-१-९) इति। श्रुतेरस्याः शांकरं भाष्यं भवति -

तेनाक्षरेण प्रकृतेनेयं ऋग्वेदादिलक्षणा त्रयी विद्या

इति। शतपथब्राह्मणेऽपि -

त्रयी वै विद्या ऋचो यजूंषि सामानि

(शत० ब्रा० ४-६-७-१) इति श्रूयते। वस्तुतस्तु अबूरूपः सोमः अथर्ववेदे पठ्यते एव, तं विना क्षणमपि देवादीनां तपनाऽसम्भवात्। तस्मात् ऋगादिवेदाः इव अथर्ववेदोऽपि ग्रन्थात्मकत्वात् वेदत्रयेभ्यः भिद्यते, पृथग्वेदः इति च आम्नायते।

अपि च यत्र यत्र उपनिषदादिषु चतुर्णां वेदानामुल्लेखः दरीदृश्यते तत्र तत्र चत्वारो वेदाः ग्रन्थरूपेण वर्तन्ते इत्यर्थः। यत्र तु त्रयाणां वेदानामेव पठनं भवति तत्र अभिप्रायः एवं भवति - पद्यं, पद्यगद्योभयात्मकं, गायनमिति त्रेधा विभक्तत्वात् त्रयो वेदाः इति प्रसिद्धिरिति मन्तव्यम्। अत्र मीमांसासूत्रम् -

ऋक् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या।
शेषो यजुःशब्दः।

(मी० सू० २-१-३५-३७) इति भवति। पादव्यवस्थावन्मात्रत्वम् ऋक्त्वम्, मन्त्रत्वसमानगीतित्वं सामत्वम्, ऋक्सामाभिन्नमन्त्रत्वं यजुष्ट्वम् इत्येतेषां त्रयाणां वेदानां लक्षणानि भवन्ति। अथर्ववेदस्य मन्त्राः पादबद्धाः भवन्ति। अतः सः वेदः ऋग्वेदे अन्तर्भवति। तस्मात् त्रयो वेदाः अथवा चत्वारो वै वेदाः इत्यत्र मूलतः न कोऽपि भेदो वर्तते, केवलमस्मिन् विचारे दृष्टिविषयक एव भेद इति। एवं वेदस्वरूपविचारः सम्पन्नः।

### १ - २ अनन्ता वै वेदाः

ऋग्यजुस्सामाथर्वाख्याः चत्वार एव वेदाः इति न मन्तव्यम्। वेदाः अनन्ताः भवन्ति। मन्त्र-ब्राह्मणयोः वेदनामधेयम् इत्यादिवाक्येन वेदानामनन्तत्वं सिध्यति। काठकेऽपि एषा कथा प्रस्तूयते -

भरद्वाजो ह त्रिभिरायुर्भिः ब्रह्मचर्यमुवास। तं ह जीर्णं
स्थविरं शयानमिन्द्रः उपव्रज्योवाच - भरद्वाज! यत्ते चतुर्थमायुर्दद्यां
किमनेन कुर्या इति। ब्रह्मचर्यमेवैतेन चरेयमिति होवाच।
तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयांचकार। तेषां
हैकैकस्मान्मुष्टिनाददे। स हो वाच भरद्वाजेत्यामन्त्र्य वेदा वा
एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिः आयुर्भिरन्ववोचथाः।

(तै० ब्रा० ) इति। अत्र त्रयो गिरिरूपाः वेदाः ये इन्द्रेण भरद्वाजस्य पुरतः प्रत्यक्षमुपन्यस्ताः, तेषु च मुष्टित्रयं पृथक्कृत्य इन्द्रेण भरद्वाजेति सम्बोधितस्सन् एव दत्तायुषां त्रयाणां एतावान्मात्रस्ते परिश्रमः, वेदानामानन्त्यात् तव परिगणितैरेतैरायुर्भिः वेदाध्ययनस्यान्तवत्त्वं गन्तुं न पारयसि न सम्भवति च इति उदाहृताख्यायिकायाः सारः। अनया आख्यायिकया वेदा अनन्ताः इति सिध्यति। अत्रै तद् वक्तव्यं भवति यत् अद्यत्वे भारते समुपलभ्यमानाः ये वेदाः प्राप्यन्ते ते तु अनन्ताः न सन्ति। एवं सति पुनः के ते वेदाः? येषां कृते इन्द्रेण गिरिरूपेण निर्देशः कृतः? इत्याक्षिप्तप्रश्नस्य समाधानमेतद् भवति - यद्यपि अस्माकमिदानीं वेदाः

गणनायामन्तवत्वेनैव दरीदृश्यन्ते तथापि सूक्ष्मरूपेण अथवा युगान्तरे वा वेदा अनन्ता एव आसन्निति वक्तव्ये न काऽपि क्षतिः न च विप्रतिपत्तिः। अतः इदानीमपि तदुपलक्षणतया वेदाः अनन्ताः इति प्रोच्यन्ते। समाधानान्तरमपि भवति - इदानीमपि तत्तद्वेदानां ब्राह्मणारण्यकोपनिषदादीनां वेदत्वोपदेशेन, अथवा त्रि-संख्याकानामुपरितनसंख्यायाः गणनायामनन्तपदव्यवहाराच्च वेदाः अनन्ताः भवन्ति। ऋग्यजुस्सामाथर्वादिषु वर्तमानानां ग्रन्थानां रूपेण च वेदाः अनन्ताः भवन्ति। तथा लोके व्यवहारः -

लक्षग्रन्थात्मकं महाभारतम्

इति। तस्मात् वेदाः अनन्ताः भवन्ति।

## १-३ ऋग्वेदस्य प्राथम्यम्

लोकेऽस्मिन् अस्माकमपेक्षिता सर्वा सामग्री ऋग्वेदादेव लभ्यते। वेदस्यास्य शब्दस्वरूपमत्यन्तप्राचीनं भवति। आर्षसंकेतपदार्थव्यवस्था अतिरमणीयतया ऋग्वेदे दरीदृश्यते। अत्र ऋषीणामध्यात्मज्ञानबलसम्पत्तिश्च न दुर्ग्रहा। देवतानां तत्त्वं न सामान्यमानवस्य विवकेग्राह्यं भवति। अन्यदपि मुख्यं कारणं भवति - यजुर्वेदः यज्ञार्थइति प्रसिद्धः, अत एव तस्य अध्वर्युशाखा इति नाम भवति। यज्ञार्थम् ऋचां प्राधान्यं याजुषाः एवमामनन्ति -

यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्
यदृचां तद् दृढम्।

(तै० सं० ६-५-१०) इति। अपि च ऋग्भिस्सह यजूंषि सामानि च यज्ञार्थमेकीभूय वर्तन्ते। अतः ऋग्वेदात्परं यजुर्वेदः इति आधुनिकानामितिहासकथनं समीचीनं भवति। यतो हि ऋक्संहितायामेव यजुषां साम्नां चोल्लेखस्य दृश्यमानत्वात्। तस्मात् वेदेषु ऋग्वेद एव प्राधान्यं भजते।

वेदत्रयीं विना यज्ञः सम्पन्नो न भवति। त्रय्यामेकं वा विहाय न कोऽपि यागः अनुष्ठातुं शक्यः अवियोज्या सा यज्ञे। बहिर्यागे त्रयाणां वेदानामुपयोगवत् तत्प्रयोक्तॄणां स्थानानि च तत्र भवन्ति। यथा - होता, अध्वर्युः, उद्गाता इति। तत्र होता ऋचः शंसति। अनेन होत्रा मन्त्ररूपैः ऋग्भिः देवानामाह्वानं निर्वर्त्यते। तस्मात् आह्वाता होता इति तस्यानर्थान्तरम्। देवीं वाचमाविष्कुर्वाणानामृचामुच्चारणात् देवानुपस्थापयति अयं जनः। एतादृशो होता देव एव भवति न मानुषः पुरोहितः। ऐतरेयब्राह्मणे एवं श्रूयते -

यो ह वै त्रीन् पुरोहितान् त्रीन् पुरोधातृन् वेद
सः ब्राह्मणः पुरोहितः।

(ऐ० ब्रा० ८-२७) इति। अस्याः अयमभिप्रायः - वस्तुतः देवानामेव पौरोहित्ये अधिकारः इति यो जानाति सः द्विजः पुरोहितो भवति। यजुर्वेदाधारः अध्वर्युः। अयं यजुर्भिः याजयति, यज्ञतन्त्रानुसारेण अन्यान् ऋत्विजश्च नयति। अयमध्वर्युः यजनक्रियानिर्वाही क्रियादक्षः इत्युच्यते तदधीनमेव सर्वथा यज्ञनिर्वर्तनं कर्तव्यम्। य ऋक्षु साम गायति स उद्गाता इति कथ्यते। अयं देवान् आनन्दयति सप्तविधसाम्ना गानेन। अतः अस्य उद्गाता इति नाम। यागेषु ब्रह्मा इति एकः भवति। अयं तत्क्रतोः साक्षी भवति, एवं प्रचाल्यमानस्य सर्वस्यापि यज्ञकर्मकलापस्य च।

सः मौनमास्थाय आकर्मपरिसमाप्तिमन्त्र-तन्त्र-क्रियालोप-न्यूनातिरेकेभ्यः याज्ञिकं कर्म रक्षति इति ब्रह्मवत् ब्रह्म इति अस्य निर्देशः। यागरूपस्यास्य कर्मणः साक्षी अयं ब्रह्मा अथर्ववेदस्य प्रतिनिधिः भवति।

प्रकृतमनुसरामः। सर्वथाऽपि स्मृतावुपस्थाप्यमिदं यत् - न केवलं तैत्तिरीयसंहिता, सर्वाणि आध्वर्यवाणि ब्राह्मणानि च यज्ञाधिकारविचारे यज्ञ-कर्म-देवता-फलादिरहस्येषु ऋचां प्राधन्यमभिधास्यन्ति। एवं ब्राह्मणारण्यकोपनिषदादिषु च ऋचामेव प्राधान्यमुद्घुष्यते। एवं सति किमु वक्तव्यम्? ज्ञानैकलक्ष्याः उपनिषदः ऋचां प्राधान्यं ज्ञानाधिकारे प्रशंसन्तीति।

तदुक्तमृषिणा, तदेषः श्लोकः, अत्रैते मन्त्राःभवन्ति,
एतदभिधाय ऋषिरवोचत्, तदेषाभ्युक्ता तदेतदृचाभ्युक्तम्॥

साम्प्रदायिकैः ज्ञातानि इमानि उपनिषद्वाक्यानि च प्रत्यक्षं मन्त्रदृष्टीनाम् ऋचां प्राथम्यं प्राशस्त्यं च प्रशंसन्ति इति।

### १-४ ऋग्वेदः

उपलभ्यमानेषु एषु वेदेषु ऋग्वेद एव सर्वापेक्षया महान् प्राचीनश्च। ऋग्वेदा पेक्षया प्राचीनो ग्रन्थः अन्यः नास्ति, न कुत्रापि पुस्तकालये दृश्यते च।

एकविंशतिधा बह्वृचम् (महाभाष्ये पश्पशाह्निके)

इति महाभाष्यवचनानुसारेण अस्य वेदस्य एकविंशतिशाखाः भवन्तीति श्रूयते। कालक्रमेण इदानीं नाममात्रेण केवलं पंचैव शाखाः भारते समुपलभ्यन्ते। जनानां व्यवहारे तु इदानीं वर्तमानो ऋग्वेदः शाकलशाखायाः सम्बन्धो भवति। अतः अस्य वेदस्य नाम भवति शाकलऋक्संहिता इति। अस्मिन् ऋग्वेदे दश मण्डलानि सन्ति। साम्प्रदायिकाः पारायणपद्धत्या अमुं वेदमष्टाष्टकत्वेन, चतुष्षष्ट्यध्यायत्वेन च पठन्ति। अस्मिन् ऋग्वेदे १०१७ संख्याकानि सूक्तानि, एवं १०४७२ मन्त्राश्च विलसन्ति। एतदतिरिक्ततया वालखिल्यस्य एकादशसूक्तनि (११), अशीतिमन्त्रा (८०) भवन्ति। ऋग्वेदस्य एताः ऋचः स्तुतिप्रधानभूताः भवन्ति। अत एव ऋचां ऋक्त्वम् इत्युच्यते। तथा चोक्तं निरुक्ते - ऋग्भिः शंसन्ति (नि० १३-७) इत्यत्र।

अस्याम् ऋक्संहितायां प्रत्येकस्मिन् सूक्तारम्भे ऋषेः देवतायाः छन्दसश्च नामोल्लेखः क्रियते। तत्तस्मिन् सूक्ते ऋषेः महत्त्वपूर्णं स्थानं वर्तते। यस्मिन् मन्त्रे यस्याः देवतायाः स्तुतिःभवति सा एव देवता तस्य मन्त्रस्येति परिगण्यते। एकैकोऽपि मन्त्रः छन्दोभिः नियन्त्रितो भवति। तस्मात् अस्मिन् ऋग्वेदे ऋषिः, देवता, छन्दश्च परमत्यावश्यकाः भवन्ति। एतान्येव अत्र तत्त्वानि भवन्ति। इयमृग्वेदसंहिता इतरवेदापेक्षया महती अस्ति।

### १-५ अपौरुषेयो वेदः

इमे ग्रन्थात्मकाः वेदाः अपि अग्न्यादिप्राणविधवेदाः इव अपौरुषेयाः भवन्तीति मीमांसकाः। तत्र पौरुषेयत्वं नाम प्रमाणान्तरेण अर्थमुपलभ्य रचितत्वम्, तद्वेदे नास्ति। अतः अयं वेदः अपौरुषेय इति। अनेनैव कारणेन वेदस्य स्वतः प्रामाण्यमपि सिध्यति। पुरुषसम्बन्धसम्भाविताः भ्रम-प्रमाद-विप्रलिप्सादयः अप्रामाण्यहेतवः वेदे न सम्भवन्ति। अतः तेषामपौरुषेयत्वं सिध्यतीति च तेषां सिद्धान्तः।

ईश्वरकृताः वेदाः इति वैशेषिकाः नैयायिकाः वेदान्तिनश्च भणन्ति ।तत्र कारणम् - कण्ठताल्वाद्यभिघातजन्य-वर्ण-रूपाणां वेदानामपौरुषेयत्वासम्भवात् इति । आप्तोक्तत्वे यथा प्रामाण्यं तथा तेषां वेदानां प्रामाण्यम् । तथा चोच्यते न्यायसूत्रे -

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्

(न्या०सू० २-१-६९) इति । मन्त्रादयोऽपि भवन्ति -

तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥

(ऋ०सं०१०-९०-९) इति ऋग्वेदे,

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । (श्वे० उ० ६-१८) इति उपनिषन्मन्त्रश्च । एवमन्यत्रापि एतत्समानाः मन्त्राः वेदान्यतमेषु द्रष्टव्याः । एवमादिभ्यः मन्त्रौपनिषद्वाक्येभ्यः ईश्वरकृतत्वम् ईश्वरप्रोक्तत्वं वा वेदस्य स्पष्टमिति एतेषामाशयः । परमात्मनः श्वासोच्छ्वासरूपेण वेदाः बहिःनिःसृताः इति उपनिषद्वाक्यं स्पष्टं प्रतिपादयति -

अस्य महतो भूतस्य निःश्वासितमेतदृग्वेदो यजुर्वेदो
सामवेदोऽथर्ववेदः ।

(बृ०उ० २-४-१०) इति । अतश्च ईश्वरकृताः वेदाः इति ।

अत्रैतदवधार्यम् । वेदः पौरुषेयो वा अपौरुषेयो वा इति विशिष्य न चिन्तनीयम् । कीदृशा अपि ते ज्ञान-विज्ञानराशयः सन्ति । गुणैकपक्षपातिभिः विद्वद्भिः तेषामर्थानुसन्धानपूर्वकमध्ययनमवश्यं कर्तव्यमेव । तैरेव वेदैः वयं पुनरपि पुरा इव जगतः गुरुत्वं प्राप्तुं ज्ञातुं च शक्नुमः इति ।

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।

(ऋ० सं० १०-१९०-३) इति हि मन्त्रवर्णः अत्र निगदरूपेण प्रमाणं तिष्ठति ।

ईश्वरस्य निःश्वासरूपेण स्थिताः वेदाः पौरुषेया अपिलौकिकपुरुषनिर्मितत्वाभावमात्रेण अपौरुषेयाः भवन्ति । अत एव ते निर्दोषाः प्रामाणिकाश्च इति वदामः । तस्मात् वेदस्यापौरुषेयत्वं सिद्धम् ।

### १-६ वेदस्य नित्यता

भगवता परमर्षिणा जैमिनिना उच्यते - अर्थेन सह शब्दस्य सम्बन्धो भवति । अयं सम्बन्धः औत्पत्तिकरूपेण नित्यो भवति । न तु कृत्रिमः सांकेतिको वा । तस्य नित्यत्वं स्वाभाविकमित्युच्यते । अत एव विधि-वाक्योत्पन्नं ज्ञानमबाधितं सत् सत्यं भवति । वेदशब्दाः अज्ञातविषयाणां ज्ञानं जनयन्ति, अतः ते स्थायिनः भवन्ति । उच्चारणात्पूर्वं शब्दः अव्यक्तावस्थायां तिष्ठति । उच्चारणेन ते एव अव्यक्तभूताः शब्दाः व्यक्ता ः भविष्यन्ति । अतः शब्दो नित्यः उत्पन्ने शब्दे करणरूपक्रिया न सम्भवति । उच्चारणानन्तरमपि शब्दः तथैव तिष्ठति, किन्तु अव्यक्ता-वस्थायाम् । तदा तस्य नाशः न हि भवति । तस्मात् शब्दो नित्यः इति । शब्दानां नित्यत्वात् शब्दराशिभूतः

ज्ञानघनः वेदः अपि नित्यः । वेदशब्दानां नित्यत्वात् शब्दैः प्रतिपाद्यमाना देवता अपि नित्या एव भवति । एतेन देवतानामपि तेषामणिमाद्यैश्वर्यविषयेऽपि नित्यत्वं स्थापितं भवति ।

एवं संक्षेपरूपेण वेदानां वेदत्वविचारः जिज्ञासूनां - विचाराय उपस्थापितो भवतीति शम् ।।

**स्वीकृतग्रन्थानां संकेतविवरणम्**

| | | |
|---|---|---|
| ऋ० सं० | -- | ऋग्वेदसंहिता |
| ऐ० ब्रा० | -- | ऐतरेयब्राह्मणम् |
| छा० उ० | -- | छान्दोग्योपनिषत् |
| तै० सं० | -- | तैत्तिरीयसंहिता |
| तै० ब्रा० | -- | तैत्तिरीयब्राह्मणम् |
| नि० | -- | निरुक्तम् |
| न्या० सू० | -- | न्यायसूत्रम् |
| बृ० उ० | -- | बृहदारण्यकोपनिषत् |
| मनु० | -- | मनुस्मृतिः |
| मी० सू० | -- | मीमांसासूत्रम् |
| याज्ञ० स्मृ० | -- | याज्ञवल्क्यस्मृतिः |
| शत० ब्रा० | -- | शतपथब्राह्मणम् |
| श्वे० उ० | -- | श्वेताश्वतरोपनिषत् |

# नष्टजातकपद्धतयः

श्री. पी. नागमुनि रेड्डि

नष्टं जातकं यस्य सः नष्टजातकः न तु निर्भाग्यः। केनापि कारणेन जन्मतिथिसमयाधारेण निर्मितं जातकचक्रं यस्य नष्टं वर्तते अथ च इदानीं जन्मतिथिसमयादिकं स्मर्तुमशक्तः ज्ञातुमशक्तश्च यः वर्तते सोऽपि नष्टजातक इत्युच्यते। यस्य जन्मकालविवरणमेव नज्ञायते स तु सर्वथा जातकरहितः नष्टजातकः भवति। एतादृशानां विषये ज्योतिश्शास्त्रग्रन्थेषु किं सूचितमस्तीति ज्ञातुं प्रवृत्तः प्रस्तुतनिबन्धलेखकः बहुग्रन्थपरिशीलनानन्तरं ज्ञातवान् यत् बह्व उपायाः नष्टजातकमधिकृत्य सूचिताः इति।

तत्र 'जातकाभरणे' दैवज्ञेन ढुण्ढिराजेन स्पष्टं नष्टजातकस्य लक्षणमुक्तम्। तद्यथाः-०

''आधानकालोऽप्यथ जन्मकालो न ज्ञायते यस्य नरस्य नूनम्।
प्रसूतिकालं प्रवदन्ति तस्य नष्टाभिधानादपि जातकाच्च॥
तज्जातकं येन शुभाशुभाप्तिर्जातस्य जन्तोर्जननोपकालात्।
तस्मिन्प्रणष्टे सति जन्मकालो येनोच्यते नष्टकजातकं तत्॥

(जातकाभरणम् - नष्टजातकाध्यायः - 1, 2 श्लोकौ)

**तत्र नष्टजातकपद्धतयः काः?**

(क) लग्ने लग्नपतिर्बलान्वितवपुः केन्द्रेत्रिकोणेशिवे
पृच्छाजन्मविवाहराजतिलके कुर्यान्नृपं तं ध्रुवम्।
सच्छीलं विभवान्वितं गजयुतं मुक्तातपत्रान्वितं
जातं निम्नकुलेऽपि भूतिपुरुषं शंसन्ति गर्गादयः॥
(मानसागरी - चतुर्थोध्यायः - 136 श्लोकः)

(ख) यात्रा विवाहचौलान्नप्राशने जन्मनि व्रते।
नृपाभिषेके कर्तव्या भावा द्वादश सारथे॥
(होरारत्नम् - तृतीयोऽध्यायः 1 श्लोकः)

(ग) सीमन्ते जन्मचौलोपनीये यात्राप्रवेशने।
अभिषेके विवाहे च शस्तं भावफलं विदुः॥
(होरारत्नम्-तृतीयाध्यायः - अष्टमश्लोकः-)

(घ) प्रश्नात्मजस्वीकरणोपनीतिकन्याप्रदानाभिनवार्तवेषु।
आधानकालेऽपि च जन्मतुल्यं फलं वदेज्जन्मविलग्नतश्च॥
(कालदीपिका - द्वादशाध्यायः - 34 श्लोकः-)

**उपर्युक्तश्लोकैः ज्ञायते यत् महर्षिभिः निम्नसूचितपद्धतयः नष्टजातकस्य कृते सूचिताः इति । तद्यथा:-**

**(1) प्रश्नलग्नम् (2) विवाहलग्नम्, (3) राजतिलकलग्नम् (Now-a-days time of joining in a job), (4) दत्तपुत्रस्वीकरणलग्नम् (5) यात्रालग्नम्, (6) चौललग्नम्, (7) अन्नप्राशनलग्नम्, (8) व्रतलग्नम्, (9) सीमन्तलग्नम्, (10) उपनयनलग्नम्, (11) कन्यादानलग्नम्, (12) कन्याभिनवार्तलग्नम् इति ।**

**तत्र प्रश्नलग्नस्य अत्यधिकं प्राधान्यम् :**

**तत्र विविधैः आचार्यैः प्रश्नलग्नस्य महत्वं कीर्तितम् । तद्यथा:-**

(क) जातके यन्निगदितं भुवि मानवानां तत्प्राश्निकेऽपि सकलं कथयन्ति तज्ज्ञाः ।
प्रश्नोऽपि जन्मसदृशो भवतिप्रभेदः प्रश्नस्यचात्र जननस्य न कश्चिदस्ति ॥
(सर्वार्थचिन्तामणिः - प्रथमोऽध्यायः - पञ्चमश्लोकः)

(ख) एवं जन्मखगोदयैः फलमिदं सर्वं वदेज्जातके
तन्नो चेदथ जन्मपत्रमपि व। तत्प्रश्नलग्नाद्वदेत् ।
प्रश्नो जातकतुल्य एव न भवेद्भेदोऽथवा दुर्दिने
न ज्ञाते घटिकादिके ग्रहनवांशादींश्च पृच्छाद्वदेत् ॥
(उत्तरकालामृतम् - सप्तमप्रश्नखण्डः- प्रथमश्लोकः)

(ग) बुद्धवा शास्त्रं यथा न्यायं बलाबलविधानतः ।
यथोक्तं जातके सर्वं तद्वत्प्रश्नेऽपि चिन्तयेत् ॥
संप्रेर्यमाणस्त्ववशः शरीरी प्रसह्यदेवेन शुभाशुभेन ।
ज्योतिर्विदः सन्निधिमेति यस्मात् प्रश्नोऽप्यतो जन्मसमः फलेषु ॥
जन्मलग्नतया प्रश्नलग्नं संकल्प्य पण्डितः ।
जातके यद्यदुद्दिष्टं तत्तत्प्रश्नेऽपि चिन्तयेत् ॥
(प्रश्नमार्गः- प्रथमाध्यायः - 47 श्लोकः-)

(घ) अथ प्रश्नाध्यायः-
मैत्रेय उवाच
श्रुतं महर्षे ! निखिलं यदुक्तं कृपया त्वया ।
इदानीं वक्तुमुचितं प्रश्नैरेव तु जन्मिनाम् ॥
भावं मनोगतं वापि पथिकागमनादिकम् ।
स्त्री पुत्रयोर्लाभहानी मरणं जीवनं तथा ॥
रोगिणामेतदखिलं कृपया वद मे प्रभो ।
त्वामन्तरा न चान्योऽस्ति कश्चितत्त्वविशारदः ॥

**पराशर उवाच**

अथ ब्रवीमि ते विप्र ! यथाभिलषितं तव ।
प्रश्नाङ्गतो भवेत्सर्वं ज्ञेयं तच्छृणु यत्नतः ॥
भावैर्विचार्य विषयान् जानीयात् प्राग् बुधस्ततः ।
बलाबलविवेकेन शुभाशुभफलं दिशेत् ॥
स्वरूपलक्षणं प्रश्नकर्तुर्दुखसुखे तनोः ।
रत्नानां लाभहानी तु धनस्थानाद् विचिन्तयेत् ॥
पराक्रमं भ्रातृभृत्यसुखं सहजभावतः ।
मित्रालयग्राममातृवाहनानां सुखं सुखात् ॥
अपत्यमतिशास्त्राणि चिन्तयेत् पञ्चमालयात् ।
शत्रुमातुलरोगांस्तु व्रणानपि रिपोस्तथा ॥
विवादस्त्रीवणिग्वृत्ति गमनागमनानि वै ।
सप्तमात् मृत्युभावाच्च मृत्युं युद्धञ्च रुग्भयम् ॥
वापीदेवालयादीनां निर्माणं नवमालयात् ।
राज्यं पितृसुखं राजकर्म चिन्त्यं पितुर्गृहात् ॥
कन्या काञ्चनसस्यानि वाहनानि च लाभतः ।
व्ययतो रिपुरोधञ्च व्ययं भोगादिकर्मसु ॥
भावः स्वस्वामिखेटैर्युक्तो दृष्टोऽपि वर्धते ।
अशुभैरीक्षितयुतो नष्टो मिश्रैस्तु मध्यमः ॥
(''बृहत्पाराशरहोराशास्त्रम् - 94 अध्यायः)

It must be remembered that this time (time of query) indicates the birth of the mind in the person as he is prompted to approach an astrologer. Sometimes this would be more genuine than the birth time itself." *("Hindu Predictive Astrology" - 28th chapter 211th page By Dr. B.V. Raman.")*

**किम् अन्याः पद्धतयः अपि सन्ति?**

**आम् । सन्ति । तद्यथाः-**

**द्वादशभावेषु यस्य भावस्य फलं विश्लेषणीयं तमेव भावं लग्नत्वेन प्रकल्प्य ततः द्वादशभावपरिशीलनं एका पद्धतिः ।**

''भावस्य यस्यैव फलं विचिन्त्यं भावं तु तं लग्नमिति प्रकल्प्य ।
तस्माद्वदेद्द्वादशभावजानि फलानि तद्वप्रथमादिकानि ॥''

**(''फलदीपिका - पञ्चदशाध्यायः - 20 श्लोकः-)**

**उदाहरणार्थं यदि कस्यचन जातकं नास्ति तर्हि तस्य सन्ततेः (प्राधान्येन ज्येष्ठपुत्रस्य, यदि पुत्रसन्ततिः नास्ति तर्हि ज्येष्ठपुत्रिकायाः) पितृस्थानं (भाग्यस्थानं, नवमस्थानं) लग्नत्वेन परिकल्प्य ग्रहस्थितिं यथावत् संस्थाप्य तल्लग्नतः द्वादशभावविचारः क्रियते चेत् तदीयं सर्वमपि विवरणं समागच्छतीत्यर्थः । एतद्विषये परिशोधकर्त्रा**

प्रस्तुतनिबन्धलेखकेन बहूनि उदाहरणजातकानि परिशीलितानि। अथ च शास्त्रप्रमाणत्वं स्पष्टं अनुभवदृष्टमस्ति। उदाहरणरूपेण चक्रद्वयं अधः दीयते।

**प्रथमोदाहरणम्**

**निजजातकम्**

| | | | |
|---|---|---|---|
| गुरुः<br>रविः | | राहुः | चन्द्रः |
| बुधः<br>शुक्रः | राशिचक्रम् | | |
| कुजः | | | लग्नम् |
| | शनिः<br>केतुः | | |

| | | | |
|---|---|---|---|
| गुरुः<br>शक्रः | | | |
| शनिः<br>चन्द्रः | नवांशचक्रम् | | राहुः |
| गुरुः<br>केतुः | | | लग्नम् |
| | रविः | | कुजः |

**पुत्रस्य पितृस्थानं लग्नत्वेन परिकल्प्य निर्मितं जातकम्**

| | | | |
|---|---|---|---|
| लग्नम् | | रविः<br>बुधः/शनिः | कुजः<br>शुक्रः |
| | राशिचक्रम् | | केतुः |
| राहुः | | | |
| गुरुः | चन्द्रः | | |

| | | | |
|---|---|---|---|
| | | रविः<br>शनिः | |
| कुजः<br>बुधः | नवांशचक्रम् | | गुरुः<br>केतुः |
| लग्नम्<br>शुक्रः/राहु | | | |
| | चन्द्रः | | |

एते चतुश्शास्त्रपण्डिताः। उत्तमोपाध्यायत्वेन राष्ट्रपतिपुरस्कारसम्मानिताः। विश्वविद्यालयस्य परमोच्चाधिकारिणः सन्ति। इदानीं जातकद्वयेऽपि कथं बहुसाम्यमस्तीति पश्यामः।

### निजजातके योगाः

1. चन्द्रलग्नात् हंसमहापुरुषयोगः। चन्द्रलग्नात् गुरुः स्वक्षेत्रे दशमकेन्द्रे वर्तते। अतः अयं योगः सञ्जातः।
2. अमलयोगः। (चन्दलग्नात् दशमे शुभग्रहः गुरुः विद्यते। अतः अमलयोगः सञ्जातः)
3. लग्नाधियोगः। (लग्नात् सप्तमे बुधार्कौ स्तः। अष्टमे च गुरुः वर्तते। अतः लग्नाधियोगः जातः।)
4. बृहज्जातके सूचितराजयोगः। (वर्गोत्तमगते लग्ने चन्द्रे वा चन्द्रवर्जितैः। चतुराद्यैर्ग्रहैर्दृष्टे नृपाः द्वविंशति स्मृताः॥) लग्नं वर्गोत्तममस्ति। वर्गोत्तमलग्नं शनिः दशमविशेषदृष्ट्या पश्यति। कुजः अष्टमविशेषदृष्ट्या पश्यति। बुधशुक्रौ सप्तमदृष्ट्या पश्यतः। अतः राजयोगः जातः।

### अस्मिन् जातके योगाः

1. लग्नात्-दशमकेन्द्रे स्वक्षेत्रे गुरुः वर्तते। अतः अत्रापि हंसमहापुरुषयोगः सञ्जातः।
2. लग्नात् दशमे शुभग्रहः गुरुः विद्यते। अतः अमलयोगः जातः।
3. चन्द्रात् सप्तमे बुधः वर्तते। अष्टमे शुक्रश्च वर्तते। अतः ६६% चन्द्राधियोगः जातः।
4. अत्र भाग्याधिपराज्याधिपयोः दृष्टिसम्बन्धः वर्तते लग्नात्। अतः राजयोगः। चन्द्रलग्नादपि भाग्यराज्याधिपयोः चन्द्रसूर्ययोः दृष्टिसम्बन्धः वर्तते। अयमपि राजयोगः। लग्नात् जातं राजयोगं प्रोद्बलयति। लग्नात् राज्याधिपस्य राज्यस्थाने स्थितिरपि प्रबलराजयोगः।

5. षट्छास्त्रवल्लभः केन्द्रे गुरौ पारावतांशगे।

(चन्द्रलग्नात् दशमे केन्द्रे गुरुः वर्तते । अतः षट्छास्त्रवल्लभः जातः।

6. जीवार्कयोगः।

(जीवार्कयोगे ब्रह्मविदुत्तमस्स्यात्) नृपमान्यो धर्मनिष्ठो मित्रवानर्थवानपि।

उपाध्यायोऽतिविख्यातो योगे जीवार्कयोर्भवेत्॥

7. गजकेसरियोगः।

(चन्द्रात् दशमकेन्द्रे गुरुः वर्तते। अतः गजकेसरियोगः सञ्जातः।

8. "केसरियोगे जातो स्वकुलाधिपो महाप्राज्ञः। ग्रामपुरनगरकर्ता सहस्रमासेषु जीवितं विद्यात्" ॥

5. षट्छास्त्रवल्लभः केन्द्रे गुरौ पारावतांशगे।

(अत्रपि लग्नात् दशमकेन्द्रे गुरुः वर्तते। अतः षट्छास्त्र वल्लभः जातः।

6. गुरुभार्गवयोगः।

(गुरुशुक्रौ परस्परं सप्तमे स्थित्वा वीक्षतः। अतः योगोऽयं जातः।

गुरुभार्गवसंयोगे दिव्यदारोमहाधनी। धर्मास्तिकप्रमाणज्ञो विद्याजीवी च जायते" ॥

7. शुभसुनफा योगः।

(चन्द्राद्द्वितीये गुरुर्वतते अतः शुभसुनफायोगः जातः)

8. "स्वयमधिगतवित्तः पार्थिवस्तत्समो वा। भवति हि सुनफायां धीधनख्यातिमांश्च"।

## लग्नाधियोगफलम्

लग्नाधियोगे बहुशास्त्रकर्ता विद्याविनीतश्च बलाधिकारी।
मुख्यस्तु निष्कापटिको महात्मा लोके यशोवित्तगुणान्वितःस्यात्॥
(जातकपारिजातम् - षष्ठाध्यायः)

## हंसमहापुरूषयोगफलम्

"रक्तास्योन्नतनासिकः सुचरणः हंसस्वरः श्लेष्मको
गौराङ्गः सुकुमारदारसहितः कन्दर्पतुल्यः सुखी।
शास्त्रज्ञानपरायणोऽतिनिपुणो श्रीहंसयोगे गुणी
यातोऽशीतिकमायुरेति सयुगं साधुक्रियाचारवान्"॥

## अमलयोगफलम्

लग्नाद्वा चन्द्रलग्नाद्वा दशमे शुभसंयुते
योगोऽयममला नाम कीर्तिराचन्द्रतारकी।
राजपूज्यो महाभोगी दाता बन्धुजनप्रियः
परोपकारी गुणवानमलायोगसम्भवः" ॥

**द्वितीयोदाहरणम् :-**

**ज्येष्ठपुत्रिकायाः पितृस्थानं लग्नत्वेन परिकल्प्य निर्मितं जातकचक्रम् ।**

| | | | |
|---|---|---|---|
| | | | लग्नम्<br>राहुः |
| | राशिचक्रम् | | |
| | | | |
| कुजः<br>केतुः | चन्द्रः<br>शुक्रः | रविः/बुधः<br>गुरुः/शनिः | |

| | | | |
|---|---|---|---|
| लग्नम् | | | रविः/बुधः<br>गुरुः/केतुः |
| | नवांशचक्रम् | | शुक्रः |
| | | | चन्द्रः |
| राहुः | शनिः | | कुजः |

**जातकस्यास्य निजजातकं न विद्यते । जातकोऽयं विश्वविद्यालये व्याख्यातास्ति । अस्य संस्कृत - हिन्दी - आंग्लभाषासु समप्रावीण्यमस्ति । ज्योतिश्शास्त्रं जानाति । मनोविज्ञानशास्त्रे पट्टभद्रः । अद्वैताचार्योपाधिमान् । इदानीं यावत् पुत्रसन्ततिः नास्ति ।**

**जातकमेनं उपरितनं जातकचक्रं कथं स्पष्टं दर्शयतीति विचारयामः ।**

## योगविचारः

1. जीवार्कयोगः ।

(रविः गुरुश्च शशौ नवांशे च एकाराशौ युतौ स्तः । परस्परं 3 Degree अन्तरे एव स्तः । अतः अयंयोगः सञ्जातः । बुधयुतिरपि उभयत्र राशौ नवांशे च योगममुं प्रोद्बलयति ।

''नृपमान्यो धर्मनिष्ठो मित्रवानर्थवानपि ।
उपाध्यायोऽतिविख्यातो योगे जीवार्कयोर्भवेत् ॥''
(''मानसागरी - द्वितीयाध्यायः - १५५ श्लोकः-)

''जीवार्कयोगे ब्रह्मविदुत्तमस्स्यात्'' ।

2. ''केन्द्रकोणे गुरौ वेदान्तज्ञः''।
(''जातकतत्वम् - पञ्चमविवेकः - ५७ तत्वम्)

(लग्नात् पञ्चमकोणे गुरूः वर्तते । रविबुधयुतिः योगममुं वर्धयति । भाग्याधिपस्य उच्चस्थशनेः सम्बन्धोऽपि प्रबलयति ।)

3. ''धनेशे बलिनि केन्द्रायकोणे ज्ञे ज्योतिर्विदां श्रेष्ठः''।
(जातकतत्वम् - पञ्चमविवेकः - 52 तत्वम्)

(धनाधिपतिः चन्द्रः नीचे वर्तमानोऽपि शक्रयुतित्वात् प्रबलो जातः । नीचभङ्गराजयोगोऽपि जातः । अतः सः बली वर्तते । बुधः (ज्ञः) पञ्चमकोणे वर्तते । अतः ज्योतिर्वेत्ता जातः ।

4. मनोविज्ञानयोगः :-

''परेङ्गितज्ञो मेधावी कारकस्थितभागपे।
केन्द्रत्रिकोणसंयुक्ते कारकग्रहवीक्षिते॥''
(''सर्वार्थचिन्तामणिः - षष्ठध्यायः - ३५ श्लोकः)

(पञ्चमभावस्य कारकः गुरुः। अयं नवांशे मिथुने वर्तते। मिथुनराश्यधिपतिः राशिचक्रे त्रिकोणे वर्तते। पञ्चविधसम्बन्धे गुरूणा युतश्च। अतः युतिसम्बन्धः जातः। अनेन कारणेन जातकः Psychology शास्त्रे उपाधिमान् इति सूचितः।

5. राजलक्षणयोगः।

''बुधो जीवोऽथवा शुक्रो लग्ने चन्द्रसमन्वितः।
लग्नात्केन्द्रगतोवापि राजलक्षणसंयुतः॥''
(बृहत्पाराशरहोराशास्त्रम् - त्रयोदशोऽध्यायः - सप्तमश्लोक :-)
(चन्द्रलग्ने शुक्रः लग्ने एव वर्तते। अतः जातकः उपाध्यायसंघस्य founder Secretary वर्तते।)

6. शङ्खयोगः।

''अन्योन्यकेन्द्रगृहगौ सुतशत्रुनाथौ लग्नाधिपे बलयुते यदि शङ्खयोगः।
लग्नाधिपे च गगनाधिपतौ चरस्थे भाग्याधिपे बलयुते तु तथा वदन्ति॥
शङ्खे जातो भोगशीलो दयालुः स्त्रीपुत्रार्थक्षेत्रवान् पुण्यकर्मा।
शास्त्रज्ञानाचारस्साधुक्रियावान् जीवेद्वर्षवत्सराणामशीतेः॥
(जातकपारिजातम् - सप्तमाध्यायः - १३८, १३९ श्लौकौ)

(लग्नाधिपतिः बुधः गगनाधिपतिः गुरुश्च एकराशौ वर्तेते। चरराशौ च स्तः। भाग्याधिपः शनिः उच्चे त्रिकोणे च स्थितत्वात् बलयुतः जातः। अतः शङ्खयोगः प्रबलः समजनि। जातकस्य जीवनेऽपि योगफलं दृश्यते।)

7. हरिहरब्रह्मयोगः :-

''वित्तेशाद्द्यूनरिःफरन्ध्रभवनप्राप्ताश्च सौम्यग्रहाः
कामेशात्सुखभाग्यरन्ध्रगृहगा जीवाब्जचन्द्रात्मजाः।
देहेशाद्यदि बन्धुमानभवगा सूर्यास्फुजिद्भूमिजाः
प्रोक्तास्तत्र पुरातनैर्हरिहरब्रह्माख्ययोगा इमे॥

निखिलनिगमविद्यापारगः सत्यवादी
सकलसुखसमेतश्चारुवाक्कामशीलः।
जितरिपुकुलसङ्घो सर्वजीवोपकारी
हरिहरविधियोगे सम्भवः पुण्यकर्मा॥''
(जातकपारिजातम् - सप्तमाध्यायः -)

(द्वितीयाधिपते : चन्द्रात् द्वादशे गुरुबुधौ शुभग्रहौ स्तः। अतः अयंयोगः जातः। योगफलमपि वर्तते।)

8. राजयोगः :-

(क) ''चतुर्ग्रहैरेकगृहे च संस्थैर्धीधर्मदुश्चिक्यतनुस्थितैर्वा।
दासश्च जातः क्षितिपालतुल्यो भवेन्नरेन्द्रोऽर्णवपारगामी॥
(मानसागरी - राजयोगाध्यायः - 210 श्लोकः।)

ख. त्रिकोणपाभ्यां यदि बन्धुनाथो युतोऽपि वा दृष्टियुतोऽपि वा स्यात्।
साम्राज्यलक्ष्मीं लभते मनुष्यो विद्याच्चिरायुस्सुतसम्पदश्च।

(ग) धर्मकर्मभवनाधिपती द्वौ संयुतौ महितभावगतौ चेत्।
राजयोग इति तद्वदिह स्यात्केन्द्रकोणयुतिर्यदि शङ्कः॥''
(फलदीपिका - षष्ठाध्यायः - 37 श्लोक :-)

**सूचना :**

(क) चत्वारः ग्रहाः पञ्चमत्रिकोणे सन्ति। अतः राजयोगः।

(ख) बन्धुनाथः (चतुर्थाधिपः बुधः भाग्यत्रिकोणाधिपतिना युतः। अतः राजयोगः।

(ग) धर्माधिपतिः शनिः कर्मस्थानाधिपतिः गुरुश्च पञ्चमत्रिकोणे युतौ। वस्तुतः मिथुनलग्नस्य कृते केवला गुरुशनियुतिः राजयोगः नास्ति यतो हि शनिः अष्टमाधिपत्यदोषेण युक्तः वर्तते। परं अत्र लग्नाधिपचतुर्थाधिपबुधयुतित्वात् राजयोगः प्रबलः जातः। एवं इतरे योगाः यथा (1) पारिजातयोगः (2) काहलयोगः (3) कलानिधियोगः (4) शुभवेशियोगः (5) सुनफादुरुधुरायोगाः जातकस्य उच्चस्थितिं दर्शयन्ति। एतत् सत्यं वर्तते।

(ख). सूर्यस्थितराशिः पितुः लग्नं भवति। यतो हि रविः पितृकारकः वर्तते।

अतः पितृपरिशीलनाय इयमन्या पद्धतिः। उक्तञ्च :-

''सूर्यस्थितर्क्षाज्जिनकस्वरूपं वृद्धिं द्वितीयोन तु तत्प्रकाशम्।
तद्भ्रातरं तस्य गुणं तृतीयात् तन्मातरञ्चापि सुखं चतुर्थात्॥

बुद्धिप्रसादं सुतभाच्च षष्ठात्पीडां पितुर्दोषमरिञ्चरोगम्।
कामं मदं तस्य तु सप्तमेन दुःखं मृतिं मृत्युगृहात्तदायुः॥

पुण्यं शुभं तत्पितरं शुभेन व्यापारमुद्रादिकं हि कर्मभावात्।
लाभं ह्युपान्त्यात् क्षयमन्त्यभावाच्चन्द्रादिकानां फलमेवमाहुः॥

तत्तभ्दावात्कारकादेवमूह्यं तत्तन्मातृभ्रातृपित्रात्मजाद्यम्।
तस्मिन्भावे कारके भावनाथे वीर्योपेते तस्य भावस्य सौख्यम्॥''

(फलदीपिका - पञ्चदशोऽध्यायः - 22तः 25 पर्यन्तं श्लोकाः)

एवं सूर्यस्थितराशिं पितुः परिशीलनाय लग्नं परिकल्प्य ततः द्वादशभावाः द्रष्टव्याः इति स्पष्टं सूचितमस्ति।

(ग) कलत्रपरिशीलनाय (अर्थात् भर्तुः जातकात् पत्न्याः परिशीलनाय एवं कलत्रजातकात् भर्तुः द्वादशभावपरिशीलनाय) कलत्रनवांशलग्नं परिशीलनीयमिति पराशरमहर्षिभिः सूचितम् - तद्यथा :-)''

नवांशे कलत्राणां दशकांशे महत्फलम् (बृहत्पराशर होराशास्त्रम् - अष्टमाध्यायः - तृतीय श्लोकस्य प्रथमपादः)

(घ) कञ्ची, मद्रास्, तिरुवन्नामलै, वैदीश्वरन् कोइल्, कुम्भकोणमादिषु तमिलनाडुप्रदेशस्थपट्टणेषु महर्षिप्रणीतानि नाडीपत्राणि उपलभ्यन्ते। तत्र गत्वा अस्माकमङ्गुष्ठरेखासाहाय्येन अस्मत्पत्रमस्ति वेति परिशीलनं अन्या पद्धतिः। अस्मत्पत्रमुपलभ्यते चेत् तस्मिन् पत्रे अस्माकं पितुर्नाम, मातुर्नाम, पत्न्याः नाम (विवाहितश्चेत्) लिखितं भवति। तथैव भ्रातृभगिनीसंख्या, संततिसंख्या (विवाहितश्चेत्) लिखिता भवति। कदा अस्माकं जन्म अभूदिति विवरणमपि लिखितं भवति। अस्मज्जातकचक्रमपि तत्पत्रात् विलिख्य नाडीपत्रपाठकाः दास्यन्ति। (प्रस्तुतनिबन्धलेखकस्य पत्रमुपलब्धं ततश्च एते सर्वेऽप्यंशाः तत्र उल्लिखिता विद्यन्ते। जातकचक्रमपि दत्तम्। सर्वमपि सत्यम्।)

स्वल्पेस्मिन् निबन्धे यतो हि सर्वासां पद्धतीनां उदाहरणानि प्रस्तुतीकर्तुं न शक्यन्ते अतः उदाहरणद्वयमेव केवलं पुत्रस्य पितृस्थानं लग्नत्वेन परिकल्प्य दर्शितम्। परिशोधनादिकं अग्रे प्रचलति। एतन्निबन्धमाध्यमेन इयं मे प्रार्थना यत् ज्योतिर्विदः एतन्निबन्धपाठकाः एतद्विषये अनुसंधानादि कृत्वा लोकोपकारकाः भवेयुरिति। तथैव शास्त्रगौरवं वर्धयेयुः।

# CONCEPT OF VIVRTTI IN THE SIKSAS AND PRATISAKHYAS

- *Prof. Bhabani Prasad Bhattacharya*

The concept of Vivrtti occupies an important position in the Siksas and Pratisakhyas. The word Vivrtti is derived from vi-vrt "to fly in different directions' and means "the opening of two vowels upon each other without blending.' Thus, Vivrtti, in other words denotes hiatus. In the RP.II.3 Vivrtti has been defined as the interval between two vowels (svarantaram tu vivrttih). Uvaṭa, the learned commentator explains it thus-asyam eva samhitayam, yat svarayor antaram vaksyati tad vivrttisamjnam syat.' The commentator, in course of his exposition, focusses on the concept of Vivṛtti. According to him, the pause or interval between two vowels in euphonic combination goes by the name of Vivrtti. In the example "nuittha' the two vowels "u' and "i' are separated by Vivrtti and as a result they do not enter into sandhi combination. In the Yajnavalkya Siksa also we find a similar concept of Vivrtti which runs thuṣ dvayostu svarayor madhye sandhir yatra na drsyate Vivrttis tatra vijneya ya iseti nidarśanam. (Ys.94). The Siksavatta commentary says that where no sandhi takes place between two vowels existing side by side, there occurs the Vivrtti. An instance cited in this connection is "yasise', where ṭhe two vowels "a' and "I' exist side by side without being coalessed Let us quote the relevant portion of the commentary which runs as follows- "vivekena prthagbhavena vartate iti vivrttir iti nuruktya "ya' iti padam "ise' iti padad vicchidya uccarya madhye yasrdhamatrika viratih sandhyavhavad bhavati sa vivrttih. ata evardhamatroccaranajnapakkam khandakaracihnham(s) diyate vaidikaih.' From the above derivation of Vivrtti we get the meaning "separation' when the word "ya' is pronounced separately from "ise' and in between them an interval of half a mora occurs as a result of absence of sandhi it is called vivrtti. In order to indicate its occurence the Vedicists use a sign(s).

Regarding the duration of Vivrtti or hiatus there is difference of opinion among scholars. According to RPII.4 the Vivrtti is said to have the same duration as svarabhakti. "Uvata in his commentary on the above rule explains it thus-"sa vivrtth svarabhaktikala va syat, adhikakala va.' From this statement it appears that the quantity of hiatus is of the same duration as svarabhakti. Alternatively it may be of longer duration than that of svarabhakti. Pause for hiatus is of one mora as laid down in TP. XXII.13. It does not take into account whether both the vowels are long or short or one of them long and other short and vice versa. Uvata on the other hand prescribes half a mora for Vivrtti in the case of a long vowel followed by a short one. RT35 also declares half a mora between the two vowels, be they short or long. Uvata in his commentary on RPII.4 furnishes a threefold classification of Vivrtti. In his opinion, wher both the vowels are short, the hiatus is of one quarter of a more e.g. pra rbhubhyah, pratyu adarsi. where either of the vowels is long, the hiatus is of half a mora e.g. nu ittha te, sano avye. Where both the vowels are long, the vivrtti is of three quarter of a more e.g. ta im vardhanti, ima gavah sarame ya aicchah. This threefold divition of Vivrtti as laid down by the learned bhasykara is not recognised in the RP. Only two kinds of svarabhaktis having been recognised in this Pratisakhya (cf. I.33,35; VI, 48,49), Vivrtti which is here

stated to have the same duration as svarabhakti must have the same two-fold division. Over and above, both the second Uvata as consisting of 1/2 and 3/4 mora respectively are called long vivrttis in RP.II.79. Uvatas commentary runs thus -"svarantaram tu vivrttih (II.3) ityuktam. tatra yato dirghasvaro bhavati purastat pascad ubhayato va tato dirgha vivrttayo veditavyah. gosa indo nrsa asi (RV. IX.2.90), ya anayat paravatah (RV.VI.45.1) ta apo devir iha mam avantu (RV.VII.49.9). vividhany udaharanani.' It may not be out of place to mention here that the commentator most probably bases his three-fold division on the word "va' in the sutra II.4.

Uvata's commentary on RP.II.4 contains an observation which requires a careful consideration. After illustrationg the three kinds of Vivrtti the Bhasyakara statas - "vivrttisu pratyayader adarsanam (XIV.59) iti dosam vaksyati. atos chayosnavad vivrttir iti samyag vyakhyanam na bhavati. The meaning of this passage is not very clear. It might mean that, according to some, just as there is a correspondence between the decrease of taya (shade) and the increase of Usna (light) in the same manner there is a correspondence between the decrease of the side-vowels and the increase of vivrtti. But Uvata holds that it is not true, as pratyayader adarsanam (loss of the initial letter of the following word) is looked upon as a fault in pronunciation. Otherwise, pratyayader adarsanam, like chayaya adarsanam at the extreme point ought to have been recognised as a fact and not as a fault. But in view, of the explicit rule "yato dirghas tato dirgha vivrttayah' (II.79) the accuracy of this suggested meaning appears all the more doubtful to us. Another explanation may be offered here that Uvata is referring to a view which, because of the word "va' in the sutra, was suggested or held by some other authority as an alternative to the view expressed by "svarabhaktikala.' The interpretation of this passage is still open to further examination and the present author is sure scholors will be able to analyse the concept of vivrtti in the light of the above observation of the reputed commentator.

The four-fold classification of Vivrtti is also found in the Siksa literature. In the YS II.10-12 four kinds of vivrtti are recognised and they are designated as Pipilika, Pakavati, Vatsanusarini and Vatsanusrjita (or Vatsanusrta). Where both the vowels are long, the Vivrtti is known as Pipilika or ant (adyantadirgha); where both the vowels are short, the Vivrtti is called Pakavati "possessed of yound ones' (ubhayor hrasva); where the first is long and the second short, the Vivrtti is known as Pipilika or ant (adyantadirgha); where the first is short and the second long, the Vivrtti is called Vatsanusrjita or Vatsanusrta "followed by the calf' (ante vatsanusrjita).

In the Manduki Siksa 92-96 and Naradiya Siksa, all the above four varities of Vivrtti have been enumerated. According to RP.II.79, when one of the vowels is long the vivrtti is styled Dirgha. so Pipilika, Vatsanusarini and Vatsanusrta will all come under Dirgha Vivrtti. In VP. VII.6 we come across the use of Vivrtti which runs as follows "hrasvakanthyopadham visarjanoantam ariphitam vivrttya.

Let us now deal with the quantity of the pause or hiatus in the Siksas and Pratisakhyas. The pause between two individual sounds had duration of very infinitesimal time. The Vyasasiksa XXVII.5 "viramo varnayor madhye'pyanukulo' Pyasamyute' attributes one quarter of a more of the hiatus between two individual sounds. But kalanirnayasiksa does not accept this view. It is interesting to note that the minimum standard of quantity was called "anu' which could not be perceived by the senses. Sambha Siksa 46 says: "Indriyavisayo yo'savanur ityucyate budhaih.' The Lomasiksa, on the other hand, compares the "anu' to a particle reflecting the sun's rays- "suryarasmipratikasa it is "matrardham vyaktamatrakam.' According to VP.I.61, "paramanu' being equal to two anus. gives rise to half a mora which is prescribed for the quantity of a consonant.

Pause for hiatus in the interior of a word is of half-mora, e.g. "pra-ugam' In RP.II. 13 four cases of Antahpada Vivrtti or internal hiatus are enumerated. They are pura-eta, tita-una, pra-ugam and nama-uktibhih. According to Uvata, these inter-word hiatuses are shown in order to remove the doubt of their confirms the fact that in the case of internal hiatus the duration is of half-mora, while in the case of Avagraha the interval is of one mora. TP. XXII.13 also prescribes half mora for pause for hiatus in the interior of a word. The commentary Tribhasyaratna on the above sutra quotes a couple of verses laying down four sub-divisions of the pause of hiatus and assigning them different quantities: That between a short and long vowel is vatsanusrti andis the more long, that between a long and following short in vatsanusarini, of the same length', between two short vowels "pakavati', three quarters of a mora; between two long vowels "pipilika,' a quarter mora only. Uvata's comment on the RP.II.4 states the intervals of hiatus quite differently.

The nature of hiatus is the next important topic for discussion. the commentary on Vyasasiksa "viramah tusnim bhutah kalah syat' defines it as a time of silence. But this definition goes against the traditional Indian theory of continuity of sounds so strongly maintained by Patanjali on Pa.I.4.109 and others. Nor there is any proof to presume that the hiatus was accompanied by a glottal stop. By "hiatus' then the ancient grammarians may have meant a glide between one sound and another and this is, in a way, confirmed by the RP.II.4 which assigns only a quarter of a mora (time of a svarbhakti) to the hiatus.

The nature as well as quantity of the hiatus forms an interesting study in the realm of Siksas and Pratisakhyas. Ancient authorities have expended their energy in dealing with the concept of Vivrtti and they have been successful to a great extent in focussing on its true essence.

The quantity of pause deserves a careful analysis from the phonetic stand-point in the light of researches carried out in the fields of Siksa and modern linguistics. A comprehensive study of this important phonetic phenomenon will go a long way in throwing a fresh light on an unexplored area of Oriental learning.

**Abbreviations**

| | |
|---|---|
| RP. | Rgveda Pratisakhya (Vol.II & III) edited by M.D. Shastri |
| RT. | Rktantram, edited by Surya Kanta |
| RV. | Rgveda Samhita, edited by Satvelkar |
| TP. | Taittiriya Pratisakhya, edited by W.d. Whitney |
| VP. | Vajasaneyi-Pratisakhya, edited by Indu Rastogi |
| Pa. | Panini-sutram (Astadhyayi) |
| YS. | Yajnavalkya Siksa (with the Siksavalli commentary) edited by A.N. Shastri. |

# Contribution of anvitabhidhanavada and Abhihitanvayavada of Prabhakar and Bhatta Schools of Mimansa to sentence theories and linguistic science"

- *Dr. R.N. Aralikatti, Tirupati.*

Traditional Indian theories on languages particularly on sentence meaning are widely discussed and hotly debated by the traditional grammarians, logicians, rehetricians, Mimansakas and Vedantins holding devergent views under the topic "Sabdabodha' (verbal testimony). To describe the content of "Sabdabodha' amounts to describing the meaning of the utterances or knowledge of some sentence meaning. It is primarily concerned with the mechanism of decoding the signals by the hearer, which are coded or uttered by the speaker. It should not be confused with the speaker's coding system or Cognition which is his private property.

Among the three fundamental sciences or schools of Indian philosophy viz., Padashastra (Science of grammer) Pramanashastra (Science of logic) Vakyashastra (Science of Minansa), the last one directly deals with the sentences and their meaning though the discussion mainly pertains to vedic sentences. This has a wider application to the theory of language particularly main aspects of syntax and semantics. It was Jaimini, who was the propounder of the Purvamimansa school through his Mimansasutras (300 B.C). Sabara (C 200 A.D.) wrote an elaborate commentary well known as Sabara bhasya. Of the four original commentaries on Sabarbhasya only two-one by Kumarilabhatta and the other by Prabhakara are well known and are written by the close of 6th century and beginning of 7th century A.D. These two schools known prominently as Bhatta and Prabhakara schools have held both common as well as contrary views on many tenets and theories following Sabara's commentary.

Anvitabhidhanavada of Prabhakara school and abhihitanvayavada of Bhatta School held different views on Sabdabodha (sentence meaning/decoding process). This paper takes up this topic for considerations, comparing and contrasting their views with those held by grammarians and logicians and also modern communication theories of Miller and some of modern concepts of linguistics like (non-verbal) equational sentences etc., According to the Mimansakas all words and denotations are eternal, ever lasting, independent of all conventions and agencies and meanings of words can be known only when they occur in an injunctive sentences. From this, it follows that the word must denote things only as related to other factors of injunction and no word can be comprehended as having any denotation when taken apart from such sentences. This theory known as abhihitanvayavada, advocated by Prabhakara school has the tacit support of Sabara (pp - 32-35 & 132). It holds that words only express meaning as parts of sentence and as grammatically connected with each other, they only express an action or something connected with action; in the example "gamanaya" "bring the cow"-gam-does not properly mean gotva but anayananvita gotva - (genus) as connected with bringing; we can't have a case of noun, without some governing verb and vice versa. Just as we regard a number of letters as one word on the ground of their denoting

one definite (complete) idea or unit of thought or action following the maxim - pigeons on threshing floor - khale kapota nyaya - (viz. pigeons on threshing floor, simultaneous come down to picks up grains.)

वृद्धा युवानः शिशवः कपोताः खले यथामी् युगपत् पतन्ति
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति (सि.मु V.33)

Similarly in a sentence the meaning of the words being mutually connected as, verb, object etc., become the object of simultaneous verbal comprehension. What the Mimansakas meant by the eternity of the relations between words and their meaning is that is not possible to trace the origin of the relation to a person. We learn language from our parents and elders. They in turn must have learnt it from their forefathers, this process might have gone on from generation to generation. The term used in the sutra is ""autpattika". (औत्पत्तिक)

It is derived from utpatti ie., origin; what it suggests is that a word is a word only when it has meaning, that from the beginning of the word the association with its meaning is there. (ie. times immemorial). This principal of eternity applies not only to vedic language and classical Sanskrit language but also to all languages) including म्लेच्छभाषा (mlecchabhasa). This theory lays stress on usage of elders or popular usage or Vrddhavyavahara. They cite the classical example : gamanaya, ""bring the cow", asvamanaya, (bring the horse) gama badhana (tie, the cow), asvam badhana - (tie the horse). Seeing the use of those words connected with the respective activities, a child learns the meaning of the words by the process of inclusion and exclusion (anvaya - vyatireka). This process of 1 comprehending the language through connected sentences and usage of the elders is called anvitabhidhana - expression of the connected. In contrast to this view, abhihtanvayavadins - (Bhattas and others) maintain that words themselves can express their separate meanings by the function of abhidha or denotation. These are subsequently construed into a sentence, expressing one connected idea through the process of purport that is brought out by means of akanksa, (syntactical) expectancy, (semantic) consistency ie. yogyata and physical proximity ie. asatti or sannidhi. Some others viz grammarians, logicions and rhetoricians also hold the view that a sentence is a cluster of words which possess those three properties, mentioned above. Akansa might have originally meant the desire or expectation on the part of the listner roused by incompleteness of an utterance as a psychological process but here it is identified with syntactic property which a sentence lacks when it is not grammatical. It is an accompaniment of one string "X' with another string "Y' in such a way that "X' would not generate cognition of the meaning unless accompanied by "Y'.

यस्य येन विना स्वार्थान्वयाननुभावकत्वं तस्य तत्पदसंनिधानम्

(Gangesha's तत्त्वचिंतामणि- IV)

The classic sanskrit example is ""ghatamanaya" is said to possess the property of expectancy because the verb (bring) is accompanied by an accusative or karma viz., ghatam the agent (Karta) being understood as usual. The same meaning if conveyed through following words - घट कर्मत्वं, आनयनं कृतिः would not constitute a connected grammatical sentence. It violates syntactic rule of the language as the discrete elements don't have syntactic relation to each other. Yogyata or semantical competency may be defined as compatibility (or rather absence of the absurdity or incompatibility in one object) with another object in accordance with the syntactical and grammatical connection of the respective words denoting those objects. The classical example cited

is (1) Vahnina sincati (he) sprinkles (the field) with fire lacks yogyata, while the sentence (2) jalena sincati (he) sprikles (the field) with water possesses yogyata. Both the sentences (1&2 above) are grammatically acceptible but while (2) is also semantically acceptible, (1) one is not. So yogyata implies both grammatical and semantical acceptability. Since fire unlike water can't be a fit object to sprinkle with, it is termed as incompatible with the activity of sprinkling and hence the knowledge of the meaning of the sentence will not be generated because of lack of this property called yogyata.

The third property - physical proximity or asatti means absence of any unnecessary intervention or interval (temporal when the string is uttered and spatial when it is written ) between the constituent words of a sentence. A counter example is cited thus girir bhukto vahniman devadattah - "hill has eaten, has fire Devadatta". Obviously this is non-sensical even in Sanskrit where there are no strict rules about the word order. This string has to be construed as two sentenced - girir vahniman and bhukto Devadattah." But as a single sentence it can't generate any knowledge of the meaning of a sentence.

Thus when a grammatically correct and semantically coherent sentence is uttered by a speaker, a rational and mechanical reaction is produced in the ideal hearer who knows the language very much as blowing a horn produces particular vibrations in the air. Obviously it is presumed that the hearer is reasonably attentive and no other negative non-linguistic-condition is present to prevent this sabdabodha (sentence meaning). As we have already seen that the Mimansakas consider all sentences Vedic and non-Vedic as injunctive in their import and hence according to them verb is a principle word in a sentence. On this point grammarians also agree with them. All the constituent words in a sentence convey a meaning in relation to action (Kriya). That is to say, the remaining words have Karaka relation to the verb. (Kriyanvayi) Prabhakara's contend that the construed meaning of the sentence, not being something different from the expressed meaning of several constituent words and hence there is no necessity of postulating a separate function called tatparya as has been done by abhihitanvayavadin. Again according to Prabhakaras every sentence, is composed of two portion is the constituent words and second is their mutual relation called ""construction" anvaya or sansarga. It is therefore necessary to understand the signification or power (Sakti) of the portion of anvaya, as that of the portion of the constituent words. For, if we shall understand simply the signification of individual words we are at a loss to understand their mutual relation. Hence it is essential to comprehend the signification of anvayansa also. But according to Bhattas and Naiyayikas who are also abhihitanvayavadins, single words exist independently in language and their meanings can be known from dictionaries and reliable person. If we deny the existence of such words, how can we classify different parts of speech. Moreover while reading a book or hearing a speech sentences become unintelligible, if individual words in them are not known. Dictionary does help us in this respect althogh dictionary meanings are modified a little in the context of a sentence in speech or writing. Moreover, while explaining a prose passage or a poem, particular words which are difficult or significant are selected and not all. All these points show that words have general unconnected sense also. One must know the individual senses of separate words in a language and then their construction or combination into a sentence. This unified sense of a sentence or the purport which results from the correlation of individual senses, is not only a totality of them but something more than that totality. If then assumes a peculiar shape (विशेष वपुः) and is distinct from the individual senses of words as rightly summed up by Mammata.

तथापि यावन्ति शरीरजन्यत्वानि, तावत्प्रतियोगिकाभावकूटत्वेनैव हेतुता वाच्या । तथाच तदपेक्षया लघुभूतकृतिजन्यत्वाभावत्वेनैव हेतुता युक्तेत्यभिप्राय इति रामरुद्रभट्टाचार्याः ।

दीधितिकृतस्तु कार्यत्वेन कृतित्वेन हेतुताऽनभ्युपगमेऽपि घटत्वेन कुलालकृतित्वेन विशेषहेतुत्वोपगमात् सर्गाद्यकालीनघटकर्तृकत्वेन ईश्वरसिद्धिः । यद्वा घटस्य किञ्चिद्भङ्गे खण्डघट उत्पद्यते इति सर्वतार्किकसंमतम् । तथाच खण्डघटं प्रति कारणत्वेन ईश्वरसिद्धिः इत्याहुः ।

न च ईश्वरस्य कुलालत्वापतिः । कुलालत्वं हि न जातिः । किन्तु घटकर्तृत्वमेव । तच्च ईश्वरेऽपि भवत्येव । अतएव ''नमः कुलालेभ्यः कमरिभ्यश्च वो नमः'' इति श्रुतिरप्युपपद्यते ।

न च घटत्वेन कुलालत्वेन पटत्वेन तन्तुवायत्वेन इत्यादिरीत्या विशेषकार्यकारणभावैरेवोपपत्तौ कार्यत्वेन कृतित्वेन कार्यकारणभावे मानाभाव इति वाच्यम् । यद्विशेषयोः कार्यकारणभावः असति बाधके, तत्सामान्ययोरपि इति न्यायात् सामान्यकार्यकारणभावस्यापि अभ्युपेयत्वात् । अत एव प्रलये कार्यसमामान्याभावे, किं प्रयोजकम् इति जिज्ञासायां तत्तद्विशेषकृत्यभावकूटापेक्षया कृतिसामान्याभावस्य एकस्य प्रयोजकत्वे लाघवमित्याहुः ।

यदुक्तं, लाघवस्य अप्रमाणत्वात् न लाघवेन ईश्वरे एकत्वादिसिद्धिरिति अयुक्तमिति । तन्न कार्यत्वकारणत्वादौ लाघवप्रमाणेनैव कार्यत्वेनकृतित्वेन कार्यकारणभावः, न तु तद्घटत्वेन, तत्कपालत्वेन गौरवात् इति वदतां मते शास्त्रे लाघवस्य प्रमाणत्वमिष्यत एव ।

# ॥ वैशेषिकाभिमतस्य समवायस्य अद्वैतिकृता परीक्षा ॥

डा० वेम्पटि कुटुम्ब शास्त्री

द्रव्यादिषड्भावपदार्थेषु द्रव्यातिरिक्ताः पञ्च अपि पदार्थाः द्रव्यात्, परस्परमपि, अत्यन्तभिन्नाः सन्तोऽपि द्रव्यमेव आश्रित्य तिष्ठन्ति, द्रव्यं विना पृथगवस्थातुं नैव शक्नुवन्ति, यथा घटे रूपं, क्रिया, घटत्वजातिः इत्यादि। एतद्विपरीततया घटपटादिद्रव्याणि तु परस्परपरिहारेण पृथगाश्रयाश्रितानि सन्तोऽपि क्व चिदाधाराधेयभावेनापि तिष्ठन्ति, यथा घटे पटः, कुण्डे वा बदराणि। स्थलद्वयेऽपि आधाराधेययोः मध्ये सम्बन्धेन केनचित् भाव्यमेव। यतो हि भिन्नयोः पदार्थयोः सम्बन्धेन केनचित् विना परस्परोपश्लेषः न सम्भवति। किन्तु एक एव सम्बन्धः स्थलद्वयमपि निर्वोढुं पर्याप्तो न भवति। स्थलद्वयस्य अत्यन्तवैलक्षण्यात्। तथा हि 1) प्रथमस्थले - रूपादेः घटादीनां च यः सम्बन्धः तस्य विभागेन नाशः नास्ति। द्वितीयस्थले - कुण्डबदरयोः यः सम्बन्धः तस्य विभागेन नाशः अस्ति। 2) एवं प्रथमस्थले रूपादीनां द्रव्यपरतन्त्रता अस्ति। द्वितीयस्थले बदरादीनां कुण्डपरन्त्रता नास्ति। 3) प्रथमस्थले सर्वदा सर्वत्र सम्बद्धपदार्थद्वयस्य आधाराधेयभाव एव। द्वितीयस्थले तु आधाराधेयभावोऽपि भवति; किन्तु तदतिरिक्ततया ऐकाधिकरण्यादिकमपि सम्भवति। 4) एवं प्रथमस्थले विद्यमानः सम्बन्धः सम्बन्धिद्वये अथवा अन्यतरस्मिन् वा विद्यमानया क्रियया वा संयोगेन वा जनितो, नास्ति। द्वितीयस्थले तु स सम्बन्धः सम्बन्धिद्वये अथवा अन्यतरास्मिन् विद्यमानया क्रियया संयोगेन वा जनितो वर्तते। अतः स्थलद्वयमेतत् निर्वोढुं सम्बन्धद्वयमङ्गीकरणीयं भवति। तत्र प्रथमस्थलेद्रव्यगुणयोः, द्रव्यकर्मणोः, जातिव्यक्त्योः, विशेषनित्यद्रव्ययोः अवयवावयविनोः च मध्ये समवाय इति विलक्षणसम्बन्धः ,द्वितीयस्थले स्वतन्त्रयोः परस्परपरिहारेण पृथगाश्रयाश्रितयोः द्रव्ययोः मध्ये संयोग इति विलक्षणश्च सम्बन्धः अङ्गीकरणीयः इति वैशेषिकाणां मतम्।

तत्र संयोगसम्बन्धविषये दार्शनिकानां मध्ये वैमत्यमधिकं नास्ति। अद्वैतिनः समवायसम्बन्धं न केवलं न अङ्गीकुर्वन्ति; नित्यस्य तस्य अङ्गीकारे अद्वैतहानेः, अपि तु सयुक्तिकं तत् निराकुर्वन्ति।

"अयुतसिद्धानाम् आधार्याधारभूतानां यः सम्बन्धः इहप्रत्ययहेतुः स समवायः।" इति समवायस्य स्वरूपनिरूपणपरं प्रशस्तपादभाष्यम्। अस्मिन् लक्षणे अयुतसिद्धमितिपदम् अस्पष्टार्थं सत् बहुविकल्पानां विषयतामगमत्। न केवलं समवायानङ्गीकर्तॄणां दृष्टौ किन्तु वैशेषिकाणामेव मते पदस्य अस्य योगार्थनिर्वाहः क्लेशकरः आसीत्। तथा हि। शाङ्करभाष्ये "तत्पुनरयुतसिद्धत्वम् अपृथग्देशत्वं वा स्यात् अपृथक्कालत्वम्, अपृथक्स्वभावत्वं वा? सर्वथापि नोपपद्यते।" इत्यादिना, न्यायकन्दल्यां च - किं युतौ न सिद्धौ आहोस्वित् अयुतौ सिद्धौ? यदि युतौ न सिद्धौ कस्तयोः सम्बन्धः? धर्मिणोः अभावात्। अथ अयुतौ सिद्धौ, तथापि कः सम्बन्धः ? अपृथक्सिद्धत्वादेव" इत्यादिना च अयुतसिद्धपदमिदं बहुधा विकल्प्य सर्वेऽपि विकल्पाः दूषिताः आसन्। अयुतसिद्धत्वं च "युतसिद्धिः पृथक्सिद्धिः, पृथगवस्थितिः, उभयोरपि सम्बन्धिनोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वम्, सा ययोः नास्ति तावयुतसिद्धौ।" इति कन्दल्यां व्याख्यातम्। किरणावल्यां तु "अयुताः प्राप्ताश्च ते सिद्धाश्च इति अयुतसिद्धाः, प्राप्ताः एव सन्ति न तु वियुक्ताः"। इत्यादिना "यु" मिश्रणामिश्रणयोः

इत्यस्य धातोः अमिश्रणार्थत्वं स्वीकृत्य; तदभावः मिश्रणं, तन्नाम प्राप्तिः इत्यर्थं ततोऽवतार्य, कर्मधारयाङ्गीकारेण अयुतसिद्धपदं व्याख्यातमासीत्। ''अयुतसिद्धानाम् अपृथग्भूतानां, सर्वदा मिथः समवेतानाम् इति यावत्'' इति सूक्तिव्याख्यायाम्; तथा ''अयुतसिद्धिश्च उभयोः असम्बद्धयोः अविद्यमानता।'' इति सेतुव्याख्यायां च अयुतसिद्धपदं व्याख्यातम्। एतेषु व्याख्यानेषु योगार्थस्य आञ्जस्येन समन्वये क्रियमाणे अनुभूयत एव क्लेशः। एवं कथमपि कृतेऽपि योगार्थनिर्वाहे कार्यकाणयोः अयुतसिद्धत्वाङ्गीकारात्, तयोश्च मध्ये कार्येण असम्बद्धस्य कारणस्यावस्थितेः सर्वैरङ्गीकर्तव्यतया ''उभयोरसम्बद्धयोः अविद्यमानता।'' इति सेतुव्याख्यानम्; ''प्राप्ताः एव सन्ति न तु वियुक्ताः।''इति किरणावलीव्याख्यानमपि भूयोऽपि परिष्करणार्हं भवति। एवं तन्तुपटयोः मध्ये यद्यपि पटस्य तन्तुसमवेतत्वं वर्तते, तथापि तन्तूनां पटसमवेतत्वं नास्ति इत्यतः ''मिथः समवेतानाम्।'' इति सूक्तिव्याख्यानस्यापि परिष्कारः अवश्यम्भावी। एवमपि नित्यद्रव्यस्थले युतसिद्धत्वं पृथग्गमनयोग्यत्वमिति, तदभावः अयुतसिद्धत्वमिति च अन्यथैव अयुतसिद्धपदं व्याख्यातव्यं भवति। अत एव अर्वाचीनग्रन्थे तर्कसंग्रहे - ''ययोर्द्वयोर्मध्ये एकमविनश्यत् अपराश्रितमेवावतिष्ठते तावयुतसिद्धौ'' इति अन्यथैव अयुतसिद्धत्वं लक्षितम्। कारिकावल्यां च अयुतसिद्धपदेन लक्षणीयानाम् अङ्गुलिमात्रगण्यत्वात् अयुतसिद्धाशं पूर्णतया परित्यज्य साक्षादेव लक्षणीयपदार्थानां गणना आश्रिता :-

''घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः॥

''इति मुक्तावल्यामपि''- ''अवयवावयविनोः, जातिव्यक्त्योः, गुणगुणिनोः, क्रियाक्रियावतोः, नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः।'' इति लक्षणीयानां साक्षात् गणना एवाश्रिता अयुतसिद्धपदं क्लिष्टव्याख्यानं परित्यज्य।

· अथ लक्षणस्थानाम् इतरदलानां विषये किञ्चिद्विचारयामः। लक्षणे तावत् अयुतसिद्धानामित्यस्य आधाराधेयभूतानामित्येतत् विशेषणतया उपात्तमस्ति। पूर्वप्रदर्शितस्य कन्दलीव्याख्यानस्य अनुसारेण सुखधर्मयोरपि अयुसिद्धत्वं सम्भवति। तयोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वाभावात्, तयोः आत्मैकाश्रितयोः युतसिद्ध्यभावात्, अयुतसिद्धेश्च सम्भवात्। अतः तयोः मध्ये यः कार्यकारणभावः सोऽपि समवायसम्बन्धः भवेदित्यापत्तिः। अतः अयुतसिद्धानामित्यस्य ''आधाराधेयभूनाम्'' इति विशेषणं देयमेव। एवञ्च सुखधर्मयोः अयुतसिद्धत्वेऽपि आधारादेयभावो नास्तीति नातिव्याप्तिः। एवमपि आकाशस्य आकाशपदस्य च यः वाच्यवाचकभावाख्यः सम्बन्धः सोऽपि समवायः स्यादित्यापत्तिः। यतो हि आकाशवाचकस्य ''आकाश'' इति पदस्य शब्दत्वात्। शब्दस्य च आकाशगुणत्वात्, तयोः अयुतसिद्धत्वम्, आधाराधेयभावोऽपि अस्त्येव। अतः तत्र अतिव्याप्तिं परिहर्तुं ''इहप्रत्ययहेतुः'' इति दलम् उपादेयं भवति। एवञ्च आकाश इति पदात् आकाशरूपोऽर्थो ज्ञायते, न तु ''इहेदम्'' इति रूपेण। तस्मात् नातिव्याप्तिः। एवञ्च लक्षणे सर्वाणि दलानि सार्थकानि इति, दलत्रयमपि लक्षणशरीरघटकमेवेति च कन्दलीकारस्याशयः।

किरणावलीकारमते तु अयुतसिद्धयोः सम्बन्धः इत्येव समवायस्य लक्षगम्। अयुतसिद्धपदस्य च नित्यप्राप्तौ पदार्थौ अर्थः। तयोः प्राप्तिलक्षणः सम्बन्धः समवायः इत्यभिप्रायः। अत्र समवायस्य प्राप्तिरूपताकथनेनैव वाच्यवाचकभावादिरूपः सम्बन्धः व्यावृत्तो भवति, प्राप्तिसम्बन्धस्य वृत्ति नियामकसम्बन्धरूपत्वात्,

वाच्यवाचकभावस्य च वृत्यनियामकत्वात्। आधाराधेयभूतानामिति दलं तादृशः आधाराधेयभावः स्वभावतो भवेत्, न तु आगन्तुकेन धर्मेण इति बोधयितुं स्वपष्टार्थमेव। इहप्रत्ययहेतुरितिदलं च प्रमाणप्रदर्शनार्थम्। एवञ्च आधाराधेयभूतानाम् इहप्रत्ययहेतुः इति दलद्वयं न लक्षणशरीरघटकम् इति।

सूक्तिव्याख्याकारमतेऽपि कन्दलीकारयते इव दलत्रयमपि एकस्यैव लक्षणस्य घटकं भवति। किन्तु "इहप्रत्ययहेतुः" इति दलस्य "इह द्रव्ये द्रव्यत्वम् इत्याकारकप्रत्यये हेतुः सम्बन्धमर्यादया भासमानः" इत्यर्थं स्वीकृत्य; तद्द्वारा " न तु तादृशप्रत्यये विषयविधया हेतुः" इत्यर्थमवतार्य तद्द्वारा च वैशेषिकमते समवायस्य अतीन्द्रियत्वकथने तात्पर्यमिति विशेषतो व्याख्यानं दृश्यते।

सेतुव्याख्यायां च "अयुतसिद्धयोः सम्बन्धः" इत्येव समवायस्य लक्षणम्। आधार्याधारभूतानामित्यनेन समवायस्वरूपं दर्शितं भवति, तथा "धर्मधर्मिणोरेव समवायः, न तु धर्मधर्मिभावानापन्नयोः अपि क्वचित्" इत्यपि च सूचितं भवति। "इहप्रत्ययहेतुः" इत्यनेन समवाये प्रमाणं दर्शितं भवति इति व्याख्यातम्।

एतेन इदं सिद्ध्यति यत् वैशेषिकभाष्यव्याख्यातृणामेव मते भाष्यस्थलक्षणे सर्वेषां दलानां सार्थक्ये वैमत्यमस्ति इति। यतो हि किरणावलीसेतुव्याख्ययोः आधार्याधारभूतानामिति दलस्य स्पष्टार्थतैव। अत एव चित्सुखाचार्यः दलस्यास्य व्यर्थतां लक्षणदोषत्वेन दर्शयति।किञ्च आधार्याधारभूतानामित्यस्य इहप्रत्ययहेतुरित्यनेन पुनरुक्ततां स्पष्टमुद्घोषयति "अनाधार्याधारभूतयोः इहप्रत्ययस्यैवानुदयात्।" इति।

आस्तां तावत् दलसार्थक्यपरीक्षा। यद्यपि दलमेकं द्वयं वा स्पष्टार्थं भवति तथापि लक्षणं तु कथितमेव भवति इति चेत्:- अत्र चित्सुखाचार्यः दोषद्वयं पश्यति। प्रथमं लक्षणस्यास्य विशेषणविशेष्यभावस्थले अतिव्याप्तिः। तथाहि। "इह भूतले घटाभावः" इति प्रतीतिस्थले भूतलघटाभावयोः मध्ये विशेषणविशेष्यभावः सम्बन्धः। तत्र भूतलस्य स्वावयवाश्रितत्वेऽपि अभावस्य भूतलातिरिक्ताश्रयाश्रयित्वाभावात् अयुतसिद्धत्वमस्ति। आधाराधेयभावः इहप्रत्ययहेतुत्वं च वर्तते एव। यदि तु भावयोरेव अयुतसिद्धयोः सम्बन्धः समवायः, न भावाभावभूतयोः इति नियमः क्रियते; तथापि भावरूपगुणगुण्यादिनिष्ठसमवायसमवायिगतविशेषणविशेष्यभावस्थले "इह पटे रूपसमवायः" "रूपसमवायवान् पटः" इति विशेषणविशेष्यभावे अतिव्याप्तिरेव। भावभूतयोरेव पट - रूपसमवाययोः आधाराधेयभूतयोः इहप्रत्ययहेतुभूः योऽसौ विशेषणविशेष्यभावः सोऽपि समवायः स्यादित्यतिव्याप्तिः। अथ अयुतसिद्धत्वरूपतां परिहृत्य व्यक्तिशः गणनया "गुणगुणिनोः, क्रियाकारकयोः, अवयवावयविनोः, जाति जातिमतोः, विशेषतद्वतोश्च यः सम्बन्धः" स एव समवायः, विशेषणविशेष्यभावस्तु यद्यपि पूर्वोक्तेष्वपि स्थलेषु सम्भवत्येव तथापि ततोऽन्यत्रापि पूर्वप्रदर्शितक्रमेणैव सम्भवतीत्यतः प्रकृतेषु पञ्चसु स्थलेषु समवाय एव सम्बन्धः इति नियम्यते; तेन च "इह पटे रुपसमवायः" इति स्थले रूपसमवायस्य गुणत्वाभावात् तत्र न समवायः किन्तु विशेषणविशेष्यभाव एव इत्युच्येत; अयमपि पक्षः न युक्तः। यतो हि "इह पटे रूपं" इत्यादिस्थलेषु रूपस्य पटविशेषणत्वात्, गुणगुणिनोरेव, आधा राधेयभूतयोः, इहप्रत्ययहेतुत्वमस्ति।

अथोच्येत - यत् "इह पटे रूपं" इत्यादिस्थले योऽयं विशेषणविशेष्यभावः सः औपचारिकः, अमुख्यः; समवायसम्बन्धस्तु मुख्यः, एवञ्च मुख्यसम्बन्धस्वीकारसम्भवे सति अमुख्यसम्बन्धस्वीकारस्य अयुक्तत्वात् नात्र विशेषणविशेष्यभावः सम्बन्धत्वेन ग्रहणीयः; एवञ्च नातिव्याप्तिरिति। तथापि इदमवधेयं यत् प्रकृतस्थले

विशेषणविशेष्यभावस्य अमुख्यत्वकथनं तथा सुलभं नास्ति । तथा हि । मुख्यसम्बन्धत्वं किंरूपमिति परीक्षणे क्रियमाणे यत् स्वरूपं संयोगादिसम्बन्धानां, यच्च तेषां कार्यं तत् विशेषणविशेष्यभावस्यापि सर्वात्मना समानमित्यतः, विशेषाभावात्। अमुख्यत्वं वक्तुं न शक्यते। एकस्तु विशेषः भवितुमर्हति यत् विशेषणविशेष्यभावः स्वसिद्ध्यर्थं मूलभूतं सम्बन्धान्तरं तु अपेक्षते। तेनैव हेतुना अमुख्यत्वं तस्य भवतीत्युक्तौ संयोगोऽपि स्वसिद्ध्यर्थं मूलसम्बन्धं समावायमपेक्षत एव। तेन संयोगसम्बधोऽपि अमुख्य एव स्यादित्यापत्तिः। तस्मात् वैशेषिककृतानां सर्वेषां नियमानामङ्गीकारेऽपि "इह पटे रूपं" इति विशेषणविशेष्यभावस्थले लक्षणस्यातिव्याप्तिः अपरिहार्या इत्येको दोषः।

द्वितीयस्तु - "इह आकाशे शब्दः" इत्यत्र यः वाच्यवाचकभावः सम्बन्धः तत्र अतिव्याप्तिरिति। तथाहि। पूर्वप्रदर्शिते कन्दलीकारव्याख्याने आकाशपदस्य आकाशस्य च यः वाच्यवाचकभावः सम्बन्धः तत्र अयुतसिद्धत्वस्य, आधाराधेयभावस्य च सत्त्वात् अतिव्याप्तिमाशङ्क्य "इह प्रत्ययहेतुत्वाभावात्" सा परिहृता। इदानीं "इह आकाशे शब्दः" इति प्रतीतौ इहप्रत्ययहेतुत्वमप्यस्तीति अतिव्याप्तिः स्पष्टैव। इमामतिव्याप्तिं परिहर्तुं यद्यत्रापि समवाय एव सम्बन्धः इह प्रत्ययहेतुः, न वाच्यवाचकभावः इत्युच्येत तर्हि समवायरूपसम्बन्धस्य सत्त्वादेव वाच्यवाचकभावज्ञानरहितानामपि, सङ्गतिग्रहणं विनैव, इहेति पदश्रवणात् इहेति बुद्ध्युदयप्रसङ्गापत्तिः भवति। इदञ्च सर्वेषामनिष्टमेव।

अतः कन्दलीव्याख्यापरम्परामनुसृत्य यदिदं प्रशस्तपादीयं समवायलक्षणं तत् सदोषम् इति पर्यवसितम्।

अथ किरणावलीपरम्परामनुसृत्य यदि "नित्यः सम्बन्धः समवायः" इति नव्यैः लक्षणान्तरम् अभिधीयते तदपि विशेषणविशेष्यभावे एव अतिव्याप्तं भवति इति चित्सुखाचार्यस्य अभिप्रायः। तथाहि। सम्बन्धत्वं तु विशेषणविशेषणभावे अङ्गीकर्तव्यमेव। अथ तत्र नित्यत्वं नास्ति इति वक्तव्यम्। तत्र को हेतुः ? इत्युक्ते विशेषणविशेष्यभावस्य यौ अनुयोगिप्रतियोगिनौ तयोरनित्यत्वात् तद्गतसम्बन्धस्यापि अनित्यत्वम् इति वक्तव्यम्। तर्हि समानो दोषः समवायेऽपि स्यात्। समवायप्रतियोगिनोरपि घटतद्रूपादेः अनित्यत्वात्। एवं "आत्मत्ववान् आत्मा" इत्यादिस्थले विशेषणविशेष्यभावप्रतियोगिनोः नित्यत्वात्, तद्गतविशेषणविशेष्यभावस्यापि नित्यत्वात्। तत्रातिव्याप्तिः स्पष्टैव। एवमेव विभुद्वयसंयोगः यद्यपि वैशेषिकैः नाङ्गीक्रियते, तथापि अनङ्गीकारे सूत्रकारेण अनुक्तत्वमात्रमेव तैः प्रमाणं प्रदर्श्यते, यदितरेषां प्रमाणत्वेन इष्टं न भवति। किञ्च केनचित् अनुमानेन विभुद्वयसंयोगोऽपि साधयितुं शक्य एव। एवञ्च विभुद्वयसंयोगस्य प्रमाणसिद्धत्वे साधिते तस्य नित्यसम्बन्धत्वेन संयोग एव भवतीति, तत्रातिव्याप्तिरिति अन्योऽपि दोषः।

एवञ्च सर्वात्मना विशेषणविशेष्यभावं, वाच्यवाचकभावं च आदाय लक्षणद्वयमपि दुष्टमेवेति सिद्धं भवति।

यद्यपि नैयायिकाः वैशेषिकाश्च समवायपदार्थमङ्गीकुर्वन्ति तथापि वैशेषिकाः तस्य प्रत्यक्षसिद्धत्वं नाङ्गीकुर्वन्ति। नैयायिकास्तु प्रत्यक्षसिद्धत्वं तस्य अङ्गीकुर्वन्ति। किञ्च, संयोगस्योत्पत्तौ सम्बन्धिनोः समवायिकारणत्वं यतः, अत एव सम्बन्धिनोः नाशे संयोगस्यपि नाशः, तस्मात् संयोगः अनित्यः; अत एव तस्य सम्बन्धिभ्यां सम्बन्धे सम्बन्धान्तरस्य समवायस्यापेक्षा। समवायस्य तु सम्बन्धिनौ पदार्थौ न कारणम्; अत एव

तस्य उत्पत्तिः नास्ति; उत्पत्यभावात् नाशाभावः, एवञ्च समवायः नित्यः, अत एव तस्य सम्बन्धिभ्यां सम्बन्धे सम्बन्धान्तरस्य आवश्यकता नास्ति, स्वयमेव समवायस्य सम्बन्धरूपत्वम् नित्यत्वात् । एवं समवायस्य नित्यत्वमङ्गीकृत्य, यस्मात् नित्यः तस्मात् अनैन्द्रियकः अप्रत्यक्षः; अत एव च सम्बन्धिभ्यां सम्बन्धे सम्बन्धान्तरस्यावश्यकता नास्ति इति प्रशस्तपादभाष्ये कन्दल्यां च समवायस्य नित्यत्वम्, अप्रत्यक्षत्वं, स्वत एव सम्बद्धत्वं च व्याख्यातम् ।

तत्र चित्सुखाचार्याः प्रत्यक्षवादिनां पक्षं त्रेधा विकल्प्य खण्डयन्ति । "इह तन्तुषु पटः" इति प्रत्यक्षे तन्तुबुद्धेः, पटबुद्धेश्च विषयतया तन्तुपटौ प्रतीयेते । एवम् "इह" इति बुद्धेः जनकतया

समवायोऽपि प्रतीयते इति प्रत्यक्षवादिनः अभिमानः । तत्र प्रतीयमानः समवायः आधारबुद्धिं जनयति इत्युक्तौ तन्तुपटयोरुभयोरपि अविशेषेण आधारबुद्धिः स्यादिति आपत्तिः । आधेयबुद्धिं जनयति इत्युक्ते उभयत्राधेयबुद्धिः स्यादिति आपत्तिः । यदि च उभयबुद्धिं जनयति इति पक्षः तदा उभयोरपि तन्तुपटयोः आधारबुद्धिराधेयबुद्धिश्च स्यात् इति आपत्तिः । एवं "जातिजातिमन्तौ मिथः सम्बद्धौ" इति प्रत्यक्षं समवाये प्रमाणं इति चेत् तत्रापि यदि समवायस्य तदीयत्वेन सम्बन्धिद्वयेन सम्बद्धत्वेन प्रतीतेरङ्गीकारे तादृशसम्बन्धसिद्धयर्थं सम्बन्धान्तरावश्यंभावितया अनवस्थादोषः । समवायस्य अन्यदीयत्वेन प्रकृतसम्बन्धिद्वयभिन्नसम्बन्धिद्वय-सम्बद्धतया प्रतीतेरङ्गीकारे तु अन्यत्रैव सम्बन्धबोधः स्यात्, न तु प्रकृते इति अनपेक्षित एव एष विकल्पः । समावायस्य सम्बन्धिभ्यां सम्बद्धत्वमनङ्गीकृत्य स्वरूपतः प्रतीतेरङ्गीकारे तु जातिजातिमतोरपि सम्बन्धप्रतीतिः न स्यात् इत्यापत्तिः । एवं समवायस्य सम्बद्धत्वाङ्गीकारे अनवस्था; असम्बद्धत्वाङ्गीकारे च सम्बन्धभानानुपपत्तिः इति उभयतः पाशा रज्जुः इति भावः । सम्बन्धिभ्याम् असम्बद्धे एव समवाये अनुभवबलादेव तदीयत्वप्रतीतिः इत्यङ्गीकारे तु जातिजतिमतोरपि समवायरूप सम्बन्धं विनैन सम्बद्धत्वप्रतीतिरङ्गीकर्तुं शक्येति समवायाङ्गीकारः वृथा इति आपत्तिः । किञ्च अविद्यमानस्य सम्बन्धिसम्बन्धस्य भानाङ्गीकारे असत्ख्यातिवादाङ्गीकारप्रसङ्गः इति अन्यो दोषः। अथ समवायस्य सम्बन्धिभ्याम् असम्बद्धत्वेऽपि सम्बन्धिद्वयनिरूपितत्वमस्ति, अत एव तदीयत्वप्रतीतिः इति चेत् - जातेरपि व्यक्तिनिरूपणीय त्वात् तदीयत्वप्रतीतिरिति समवायानङ्गीकारापत्तिः । तस्मात् समवायस्य तदीयत्वेन भानाभावे तदङ्गीकारवैयर्थ्यम्; तथा अनवस्थाभयेन सम्बन्धान्तराङ्गीकारं विनैव तदीयत्वभानस्य निर्वाहार्थं कोऽपि प्रकारः आश्रीयेत तर्हि तेनैव प्रकारेण द्रव्यगुणादीनामपि प्रतीतिनिर्वाहस्य सुकरत्वात् समवायस्याङ्गीकारस्यावश्यकता न स्यात् इति ॥

एवं चित्सुखाचार्यकृतः यः समवायस्य प्रत्यक्षत्वनिराकारणप्रकारः सोऽयं न तदुपज्ञः, किन्तु वैशेषिकैः कृतचर एव । विशिष्य च न्यायलीलावत्यां वल्लभाचार्याः अक्षरशः एवमेव प्रत्यक्षसिद्धत्वं निराकुर्वन्ति । निराकृत्य च प्रत्यक्षसिद्धत्वं समवायस्य, अनुमानद्वयेन ते समवायं स्थापयन्ति ।

तथाहि । "जात्यादिगोचरः विशिष्टव्यवहारः, सम्बन्धनियतः, भावमात्रविषय - अबाधित - विशिष्टव्यवहारत्वात्, सघटं भूतलम् इति व्यवहारवत् ।" इति प्रथममनुमानम् । "सामानाधिकरण्यज्ञानम्, अबाधितसम्बन्धज्ञानपुरस्सरम्, अबाधित - सामानाधिकरण्यज्ञानत्वात्, दण्डकुण्डले देवदत्त संसृष्टे इति ज्ञानवत्।" इति द्वितीयमनुमानम् । अत्र प्रथमानुमाने हेतौ "भावमात्रविषयत्व" रूपांशाभावे "अघटं भूतलम्"

इति व्यवहारे व्यभिचारः। तत्र अबाधितविशिष्टव्यवहारसत्त्वेऽपि समवायाभावात्। एवम "अबाधितत्वां" शाभावे "पीतः शङ्खः" इति व्यवहारे व्यभिचारः। तत्र भावमात्रविषयत्वविशिष्टव्यवहारसत्त्वेऽपि समवायाभावात्। एवं "विशिष्टव्यवहारत्व" रूपांशाभावे "इमौ घटपटौ" इति व्यवहारे व्यभिचारः। तत्र भावमात्रविषयाबाधितव्यवहारसत्त्वेऽपि समवायाभावात्। अतः त्रिषु स्थलेषु सम्भवद्व्यभिचारवारणाय हेतुशरीरे अंशत्रयं निवेशितम्।

"सघटं भूतलम्" इति संयोगस्थलीय - भावमात्रविषय - अबाधितविशिष्टव्यवहारमादाय समन्वयः सुकरः। तद्बलेन च जात्यादिगोचरविशिष्टव्यवहारस्थलेऽपि सम्बन्धः कश्चन सिद्ध्यति। स च न संयोगः। स्वरूपतो वैलक्षण्यात्। तस्मात् समवायः सिद्ध्यति इति वल्लभाचार्यस्य हृदयम्। एवं द्वितीयानुमाने "सामानाधिकरण्य-ज्ञानम्" इति पक्षस्य "अबाधितत्वे सति" इति विशेषणं देयम्। अन्यथा भ्रान्तिस्थलीयसामानाधिकरण्य-ज्ञानमादाय " अबाधितसामानाधिकरण्यज्ञानत्वात्" इति हेतोः असिद्धिः स्यात्। "इदं रजतम्" इत्याद्यारोपितसम्बन्धस्थलीयसामानाधिकरण्यज्ञानमादाय व्यभिचारवारणाय हेतौ अबाधितेति विशेषणं दत्तम्। एवमनेन अनुमानेन अबाधितसामानाधिकरण्यज्ञानस्थले जात्यादिविशिष्टज्ञानस्थले इव अबाधितः सम्बन्धः कश्चन सिद्ध्यति। स च न संयोगः, स्वरूपतो वैलक्षण्यात्। अतः समवायः सिद्ध्यति इति वल्लभाचार्यस्य मतम्।

अत्र उभयत्र संयोगभिन्नस्य कस्यचन सम्बन्धस्य सिद्धिमात्रं साध्यते, न तु समवायस्य। तादृशजात्यादिविशिष्टव्यवहारस्थले संयोगभिन्नविशेषणविशेष्यभावादिसम्बन्धः सिद्धान्तिनोऽपि मते सिद्ध एव। एवञ्च विशेषणविशेष्यभावसम्बन्धमादाय सिद्धसाधनं दोषः। अतः एतादृशसिद्धसाधनदोषनिरासार्थं विशेषणविशेष्यभावस्य सम्बन्धत्वमेव नास्ति इति स्थापनस्य आवश्यकता वल्लभाचार्यस्य आसीत्। अत एव न्यायलीलावत्यां विस्तरेण विशेषणविशेष्यभावस्य सम्बन्धत्वखण्डनं दृश्यते।

तथाहि विशेषणविशेष्यभावः आधाराधेयभावः इत्यादिस्वरूपसम्बन्धाः न अनुयोगिप्रतियोगिनोरुभयोरपि समानतया सम्बद्धाः भवन्ति। यतः विशेषणत्वं विशेषणे एव भवति, विशेष्यत्वं विशेष्ये एव। अतः एते सम्बन्धाः न द्विष्ठाः भवन्ति। अथ कथमपि विशेषणविशेष्यभावादीनां द्विष्ठत्वमेव साध्ये त तर्हि अविशेषेण अनुयोगिप्रतियोगिनोः उभयोरपि विशेषणबुद्धिर्वा विशेष्यबुद्धिर्वा ततो जायेत इति आपत्तिः। संयोगसमवायौ तु द्विष्ठौ। समानतया अनुयोगिप्रतियोगिनोरुभयोः अपि भवतः। अतः संयोग संभवायावैव सम्बन्धौ; इतरे विशेषण विशेष्यभावादयः नैव सम्बन्धाः। तस्मात् सिद्धसाधनदोषो नास्ति। किञ्च विशेषणत्वं विशेष्यत्वं च न सर्वत्रानुगततया एकरूपम् अस्ति। अप्रधानत्वं विशेषणत्वम्, प्रधानत्वं च विशेष्यत्वमित्युक्तावपि तदेतत् प्राधान्यमप्राधान्यं च एकरूपं नास्ति। तथाहि। "दण्डी पुरुषः इत्यत्र पुरुषस्य दण्डाधारत्वं दण्डपतनप्रतिबन्धकत्वम्, आधेयत्वं च दण्डस्य प्रतिबद्धगुरुत्वाधिकरणत्वमप्राधान्यम्। समवायिकारणत्वं च तन्त्वादेः विशेष्यत्वं, समवायिकार्यत्वं च पटादेः विशेषणत्वम्। समवायित्वे सति व्यञ्जकत्वं च व्यक्तीनां विशेष्यत्वम्; व्यङ्ग्यत्वं च विशेषणत्वम्। नित्येषु च द्रव्यत्वं विशेष्यत्वं गुणत्वं च विशेषणत्वम्। अभावेऽपि तत्प्रतियोग्यधिकरणत्वं विशेष्यत्वम्, अभात्वं च विशेषणत्वम्।" एवं विशेषणविशेष्यस्वरूपस्य एकरूपत्वाभावात् तस्य सम्बन्धत्वाङ्गीकारे अनन्तविशेषणविशेष्यभावानां कल्पना आवश्यकी। तदपेक्षया एकस्यातिरिक्तस्य समवायस्यांगीकारे एव लाघवम् इति वल्लभानुयायिनां वैशेषिकाणां मतम्।

अत्रेदं समाधानम्। ''कुण्डे बदराणि'' इति प्रतीतौ संयोगस्य द्विष्ठत्वेऽपि स संयोग; नियमेन कुण्डे आधार बुद्धिं, बदरेषु आधेयबुद्धिं जनयति; न तु तद्विपरीततया। एवं ''तन्तुषु पटः'' इति प्रतीतौ समवायस्य द्विष्ठत्वेऽपि तन्तुष्वेव इहबुद्धिः आधारबुद्धिः जायते, पटे तु आधेयबुद्धिरेव इति नियमोऽस्ति; न तु तद्विपरीततया। तदेतत् कुतः इत्युक्ते स्वभावविशेषं विना अन्यदत्र कारणं वक्तुं न शक्यते। एवं तर्हि स एव स्वभावविशेषः विशेषणविशेष्यस्थलेऽपि अङ्गीकर्तुं शक्य इति, द्विष्ठत्वेऽपि विशेषणविशेष्यभावादेः व्यञ्जकशक्तिवैचित्र्याद्वा स्वभावविशेषाद्वा प्रतिनियतविशेषणविशेष्यप्रतीतिः इति, न प्रथमा युक्तिः वैशेषिकाणं पटीयसी। अथ लाघवगौरवपरीक्षात्मिका या द्वितीया युक्तिः, तत्रापि धर्मिणः अतिरिक्तस्यैकस्य कल्पनापेक्षया अनन्तानामपि धर्माणामेव कल्पनं लघीयः, ''वरं धर्मिकल्पनातो धर्मकल्पना'' इति न्यायेन इति प्रथमं समाधानम्। किञ्च ''तन्तुमान् पटः'' तन्तुसमवायवान् पटः'' ''समवायिनौ इमौ'' इत्यादि सर्वजनसिद्ध सामानाधिकरण्य-प्रतीतिनिर्वाहार्थं तन्तुपटयोरेव विशेषणविशेष्य भावः वैशेषिकैरपि अङ्गीकरणीयः। तर्हि तेनैव सम्बन्धेन सर्वत्र व्यवहारसिद्धौ अतिरिक्तसमवायकल्पना महागौरवं भवति, इति समवायानङ्गीकर्तृमते एव लाघवानुग्रहो वर्तते। यत्तु वैशेषिकाः ''तन्तुमान् पटः'' इत्यादि प्रतीतीनां औपचारिकत्वं वदन्ति; तन्न शोभनम्। मुख्यत्वे बाधाभावात्।

किञ्च समवायः स्वतन्त्रो वा परतन्त्रो वा? स्वतन्त्रश्चेत् स्वतन्त्रपदार्थयोः संयोगातिरिक्तसम्बन्धो न सम्भवेत्। संयोगोऽपि न सम्भवति। समवायस्य अद्रव्यत्वात्, द्रव्ययोरेव संयोगाङ्गीकारात्। एवञ्च असम्बद्धः एव समवायः सम्बन्धिभ्यां स्यात्। असम्बद्धत्वे समवायिविषयकप्रतीतौ घटको न भवेत्। यदि हि असम्बद्धस्यापि समवायस्य सम्बन्धि प्रतीतिघटकत्वमङ्गीक्रियेत तर्हि सर्वेषामेव पदार्थानां तद्घटकत्वं स्यादित्यापत्तिः। अथैतद्दोषभयात् परतन्त्र एव समवायः इत्यङ्गीक्रियेत - तर्हि असम्बद्धस्य परतन्त्रताभावात् सम्बन्धिभिः सम्बद्धता वक्तव्या, एवञ्च अनवस्था दोषः। अथैतद्दोषपरिहारार्थं समवायः स्वभावविशेषादेव सम्बन्धिभ्यां सम्बंद्धो भवति, न तु सम्बन्धान्तरेण इति वक्तव्यम्। एवं तर्हि संयोगेऽपि दीयतामेषा दृष्टिः। कुतः तत्र समवायाङ्गीकारः ? इति निरुत्तरं चोद्यं भवत्येव।

किञ्च अनित्यघटादिनिष्ठत्वेनैव हेतुना संयोगस्य अनित्यत्वं अङ्गीकुर्वन्ति वैशेषिकाः। घटाद्यभावदशायाम् अनाधारस्य स्थित्यनुपपत्तेः इति। समानमेतत् समवायस्यापि अनित्यतैवाङ्गीकार्या। अथ समवायस्य एकत्वात्, तस्य च कतिपयनित्यपदार्थद्वयाश्रिततया घटादीनां रूपादीनां नाशेऽपि क्वचिदाश्रितत्वं व्याख्यातुं शक्यमित्यतः नित्यत्वं तस्य अङ्गीक्रियेत; तर्हि संयोगोऽपि भवतु एक एव. अतश्च नित्यः, का हानिः? ''घटसंयोगः'' ''पटसंयोगः'' इति बुद्धिभेदात् संयोगभेदः इत्यङ्गीकारे, ''रूपसमवायः'' ''गोत्वसमवायः'' इति बुद्धिभेदात् समवाययोः नित्यत्वैक् त्वादिविषयेषु यत् वैलक्षण्याङ्गीकारः वैशेषिकाणां स न परीक्षाक्षम एव।

अतः समवायाङ्गीकारेऽपि क्वचित् स्वभाववादमवलम्ब्यैव स निर्वोढव्यो भवति वैशेषिकैः इति पूर्वमेव सधितम्। एवं तर्हि अवश्याश्रयणीये स्वभावविशेषे तेनैव सर्वत्र व्यवहारनिर्वाहः सुकरः इति न ''कल्पनागौरव - अनवस्थादुःस्थ - समवायस्वीकारावकाशः'' इति चित्सुखाचार्यस्य मतम्।

अत्रेदभवधेयम्। प्रशस्तपादभाष्यस्य व्याख्यायां सेतुनाम्न्यां पद्मनाभमिश्रः स्वभाववादमनवलम्ब्य अपि समवायः साधयितुं शक्यः इति दीर्घं अत्यन्तयुक्तिपूर्णं च कंचन विचारं प्रवर्तयति। तन्मध्येच समवायस्थाने स्वरूपसम्बन्धस्य अङ्गीकारपक्षम् आशङ्क्य, पूर्वोक्त प्रकारेण अनन्तस्वरूपसम्बन्धकल्पनायेक्षया एकस्य

समवायस्य कल्पने लाघवं स्यात् इति वैशेषिकपक्षमुपस्थाप्य; अभावस्थलीयविशेषणविशेष्यभावस्थलेऽपि अनुगतवैशिष्ट्याख्यपदार्थान्तर स्वीकारः कुतो न क्रियते इति प्रतिबन्द्या आक्षिपति। एषोऽपि विचारः वस्तुतः समवायानङ्गीकर्तृणाम् उपादेयो भवति।

तथाहि। "इह" इति प्रमारूपा प्रतीतिः स्थलत्रये भवति। "इह कुण्डे बदराणि" "इह भूतले घटाभावः" "इह तन्तुषु पटः" इति। तत्र प्रथमस्थले संयोगसम्बन्धः, द्वितीयस्थले स्वरूपसम्बन्धः, तृतीयस्थले च समवायः इति व्यवस्थाकरणं विना "इह" इति प्रतीतिः स्थलत्रयेऽपि समाना। इदानीं प्रश्नः उदेति किमर्थं "इह तन्तुषु पटः" इति स्थलेऽपि स्वरूपसम्बन्ध एव न स्वीक्रियते इति। तथाहि 1) यदि स्वरूपस्य अननुगततया अनुगतः एकः समवायः एव कल्प्यः इति चेत् अभावस्थलेऽपि भिन्नभिन्नेषु विशेषणविशेष्यभावेषु अनुगतं वैशिष्ट्यमिति पदार्थान्तरं किं न कल्प्येत? इति पर्यनुयोगो भवितुमर्हति। 2) अथ वैशिष्ट्यस्य एकत्वे घटाभाववति पटवति भूतले वैशिष्ट्यस्य एकत्वात् पटाभावव्यवहारापत्तिः भवेत् इति आशङ्क्येत तर्हि समाना आपत्तिः समवायस्थलेऽपि। समवायस्यापि एकत्वाङ्गीकारात् रूपाभाववति स्पर्शवति वायौ रूपस्य व्यवहारापत्तिः स्यात् इति। 3) अथ समवायस्य एकत्वेऽपि स्पर्शनिरूपितः एव समवायः वायौ वर्तते न रूपनिरूपितः, अतः वायौ रूपव्यवहारापत्तिः नास्तीत्युच्यते; समानमेतत् वैशिष्ट्ये अपि। घटाभाव निरूपित वैशिष्ट्यस्य भूतले सत्वेऽपि पटाभावनिरूपितं वैशिष्ट्यं तत्र नास्ति इति वक्तुं शक्यत्वात्। 4) "भूतले घटाभावः" इति प्रतीतौ सम्बन्धद्वयं विषयतया भासते, एकः घटतदभावयोः मध्ये, अन्यश्च अभावभूतलयोः मध्ये। एतौ द्वौ सम्बन्धौ परस्परविलक्षणौ, य तो हि अभावभूतलयोः मध्ये यः सम्बन्धः तस्मिन् आधाराधेयभावः प्रतीतो भवति; अन्यत्र घटतदभावयोः मध्ये यः सम्बन्धः तत्र आधाराधेयभावः प्रतीतो न भवति। अतः एकस्यैव वैशिष्ट्यस्य अङ्गीकारे कुत्र स्वरूप सम्बन्धः? कुत्र वैशिष्ट्यमिति विनिगमना न भवति इति हेतोः सर्वत्र एकं वैशिष्ट्यं नाङ्गीकरणीयम्। किन्तु परस्परविलक्षण स्वरूपसम्बन्धद्वयमेव अगत्या अङ्गीकरणीयमिति; नास्ति एकविधं वैशिष्ट्यमिति चेत् - न। "आकाशसंयुक्ते भूतले घटः" इति विलक्षणप्रतीतिस्थले एकविधेनैव संयोगेन यथा निर्वाहः क्रियते, एवमेवात्रापि एकविधेनैव वैशिष्ट्येन निर्वाहस्य कर्तुं शक्यत्वात्। 5) भूतल घटयोः मध्ये आधाराधेयभावः अस्ति, आकाशभूतलयोः मध्ये तु आधाराधेयभावो नास्ति इति हेतोः संयोगस्य साम्येऽपि प्रतीतौ वैलक्षण्यं सिद्ध्यति इत्युक्तौ पूर्वोक्त वैशिष्ट्यस्थलेऽपि समानमेतत्। 6) अथ वैशिष्ट्यस्थले आधाराधेयभावस्य आवश्यकत्वात् अवश्यभूतेन तेनैव आधाराधेय भावेन व्यवहारः उपपद्यते, तस्मात् नास्ति वैशिष्ट्याङ्गीकारस्यावश्यकता। संयोगस्थले तु नैवम्। यतः प्रत्यक्षतः, द्रव्यं प्रति असमवायिकारणापेक्षा निर्बन्धेन च संयोगः सिद्ध्यत्येव, इति संयोगसाम्येन वैशिष्ट्यं न साधनीयमिति चेत् -एवं तर्हि समवायः दत्तज लाञ्जलिः भवेत्। यतो हि समवायस्थले सर्वत्र आधाराधेयभावोऽस्ति, अतः तेनैव निर्वाहसम्भवे किं समवायेन इति आपद्यते। न हि संयोगस्य इव प्रत्यक्षं वा अन्यः कोऽपि निर्बन्धो वा समवायस्याङ्गीकारे प्रमाणमस्ति।

एवं समवायस्य पृथक्पदार्थत्वाङ्गीकारे बहुविधापत्तिसद्भावम् उपदर्श्य, केवलं प्रबलया एकया युक्तया समवायः अङ्गीकरणीयो भवति इति स्थापयति पद्मनाभमिश्रः। एतेनेदं सिद्ध्यति यत् चित्सुखाचार्यादिभिः विशेषणविशेष्यभावस्थलमादाय समवाय साधकानुमाने ये सिद्धसाधनादयो दोषाः प्रदर्शिताः ते वैशेषिकादिभिरप्यङ्गीकृता एव इति। अथ यैषा एका युक्तिः पद्मनाभमिश्रेण समवायाङ्गीकारस्यानुकूलतया अन्ते

प्रदर्शिता सैव प्रामाणिकेषु दिनकर्यादिग्रन्थेषु उट्टङ्किता न पूर्वोक्ताः अन्याः युक्तयः। अथ तामेवैकां युक्तिं परिशीलयामः।

न्यायवैशेषिकसिद्धान्ते कारणं त्रिविधं समवायिकारणम्, असमवायिकारणं, निमित्रकारणं चेति। एतानि च परस्परं भिन्नान्येवाङ्गीकरणीयानि एतेषां पारस्परिकभेदः समवायाङ्गीकारं विना समञ्जसो न भवति इति तदीयवैलक्षण्य निरूपणरूप निर्बन्धात् समवायः सिद्ध्यति इति तस्य आशयः। तथाहि। द्रव्यत्वे सति कारणत्वं समवायिकारणत्वम् इत्युक्तौ दण्डे अतिव्याप्तिः। आधारीभूतं सत् कारणं समवायि कारणम् इत्युक्तौ कालदिशोः अतिव्याप्तिः। स्वरूपसम्बन्धविशेषसम्बद्धं कारणं समवायिकारणम् इत्युक्तौ स्वरूपसम्बन्धविशेषे प्रमाणाभावो दोषः। तस्मात् "यत्समवेतं कार्यमुत्पद्यते इत्याद्येव समवायिकारणादि लक्षणम्। तस्मात् सिद्धः समवायः" इति।

एषापि युक्तिः न परीक्षाक्षमा इति वयं मन्यामहे। यतो हि आरम्भवादमाश्रित्य कारणत्रयपक्षमवलम्ब्य - जगतः सृष्टिं व्याख्यातुं प्रवृत्तानां, "इह तन्तुषु पटः" इति वैयधिकरण्यप्रतीतिं चावलम्ब्य विश्लेषयतां न्याय वैशेषिकाणां मते एषा युक्तिः अङ्गीकर्तुं योग्या चेत् स्यात्, स्तान्नाम। विवर्तवादमाश्रित्य, "नीलो घटः" इति सामानाधिकरण्य प्रतीतिं चावलम्ब्य विश्लेषयताम् अद्वैतिनाम् एषा युक्तिः सुतरामनादरणीया एव। किञ्च, सिद्धे समवायपदार्थे, यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणमित्यादि कारणवै लक्षण्य व्यवस्था सिद्धिः, तादृश वैलक्ष्यण्य व्यवस्था सिद्ध्यर्थं समवायाङ्गीकारः इति स्पष्ट एवात्र अन्योन्याश्रयदोषः।

एवं समवायसाधकम् अनुमानं न परीक्षामम् इत्यायातम्। एवमेव समवायस्य एकत्वं निर्वोढुमशक्यतया नव्याः अनेकत्वमेव तस्याङ्गीचक्रुः। अथ तस्य नित्यत्वं परीक्षणीयमवशिष्यते।

अत्र नृसिंहाश्रमस्वामिनः वेदान्ततत्वविवेके समवायस्य नित्यत्वम् एवं निराकुर्वन्ति। 1) यदि समवायः नित्यः स्यात् तर्हि स्वेन सम्बद्धेन घटादिना रूपादिना, तथा तयोः प्रतीत्या च विनापि "अस्ति" इति "प्रतीयते" इति च समवायः अङ्गीकरणीयो भवति। नित्यत्वात्। परन्तु न कोऽपि सम्बन्धः एवंरूपेण स्थातुमर्हतीति समवायस्य सम्बन्धत्वमेव व्याहन्यते इति। तथाहि। संयोगः स्वसंयुक्त पदार्थद्वयस्य स्थितौ प्रतीतौ एव स्वयं तिष्ठति प्रतीयते, न त्वन्यथा। एवं सम्बन्धत्वसामान्यात् समवायोऽपि तथैवाङ्गीकार्यः। एवञ्च नित्यत्वं तस्य न सम्भवति। 2) पाकरक्ते घटे इदानीं श्यामता सम्बन्धो नास्ति इत्यनुभवेन समवायस्य अनित्यत्वस्य स्पष्टं प्रतीचमान त्वादपि समवायस्य अनित्यत्वं सिद्ध्यति। अथ "इदानीं श्यामघटो नास्ति" इति प्रतीतिः श्यामताभावमेव विषयीकरोति, न तु श्यामतासमवायाभावम् इति चेत् उच्येत तर्हि श्यामता कुत्रापि न स्यादित्यापत्तिः। प्रकृतघटादन्यत्र श्यामतायाः सत्वे कस्यापि विप्रतिपत्तेः अभावात्। अत्र नास्ति; तेन तद्भावः पूर्वोक्त प्रतीत्या गृह्यते इति कथनं तु नैव समञ्जसम्। यतो हि श्यामता अस्ति, तत्सम्बन्धः समवायोऽपि अस्ति इत्यायातम्, तर्हि कथं घटो न श्यामः? अतः "इदानीं श्यामघटो नास्ति" इति प्रतीतिस्थले श्यामतायाः श्यामता सम्बन्धस्य समवायस्यापि अभावः अङ्गीकर्तव्यः, एवञ्च अनित्य एव समवायः इति। 3) अथ यदि समवायः अनित्यः तस्य अन्य एव समवायः तत्समवायिकारणतया अभ्युपेयः एवं तस्य तस्यापि इत्यनवस्था भवेदिति चेन्न। समवायस्य जन्यत्वेऽपि समवेतत्वं नाङ्गीकुर्मः। समवेतकार्यस्यैव समवायिकारणजन्यत्वं भवति। अयं तु समवायः निमित्तकारणमात्रजन्यः, यथा घटध्वंसः। तस्मान्न अनवस्था। अतः समवायः अनित्य एव। 4) जन्ययोः तथा च अनित्ययोः घटतद्रूपयोः नित्यसम्बन्धाङ्गीकारे प्रमाणमपि नास्ति। यथा समवायं विनैव भूतले घटाभावविशिष्ट प्रतीतिः प्रत्यक्षेण जायते

तद्वत् समवायं विनैव नीलविशिष्टघटप्रतीतिः प्रत्यक्षेण सिद्ध्येत्। 5) अत्र वैशेषिकाणामेष अभिप्रायः यत् अनन्तानां विशेषण विशेष्य भावानां स्वरूपसम्बन्धानां कल्पनापेक्षया एकस्य समवायस्य कल्पनं लाघवाय भवति इति। इदञ्च पूर्वमेव प्रतिपादितम्। अस्मिन् विषये श्रीनृसिंहाश्रमस्वामिनां विचारः गणनीयोऽस्ति। स्वरूपसम्बन्धोऽपि न स्वरूपमात्रं भवति; किन्तु स्वरूपातिरिक्तः एव कश्चित् अङ्गीकरणीयः। अन्यथा घटादि ज्ञानादपि चक्षुरादि व्यवहारः स्यात्। एवं तर्हि लाघवात् सोऽपि एक एव अङ्गीकरणीयः इति। तादृशस्वरूपसम्बन्धः अभावस्थलं, सामानाधिकरण्यस्थलं च निर्वोढुं वैशेषिकेनाप्यङ्गीकरणीय एव। एवञ्च अवश्यकल्प्येन स्वरूपसम्बन्धेनैव प्रकृतेऽपि निर्वाहे सम्भवति समवायकल्पना नावश्यकी, प्रामाण्यरहिता च इति।

किञ्च प्रत्यक्षप्रतीतिमवलम्ब्य समवायसाधने क्रियमाणे प्रतीतिरेव परिशीलनार्हा भवति। तत्र ''इह तन्तुषु पटः'' इति नैयायिकालिमतप्रतीतिः विरला। किन्तु ''मृत् घटः'' इति 'तन्तुपटः'' (तन्त्वात्मकः पटः) इति च प्रतीतिः सर्वजनसिद्धा अबाधिता च वर्तते। एवम् अवयवावयविनोरपि समवायाङ्गीकारात् ''इह अवयवेषु अवयवी'' इति प्रतीतिमवलम्ब्य नैयायिकेन ''इह शाखासु वृक्षः'' इति प्रतीतिरङ्गीकरणीया। किन्तु आपामर जनप्रसिद्धा प्रतीतिस्तु ''इह वृक्षे शाखाः'' इत्येव। तद्वदेव ''इह तन्तुषु पटः'' इति प्रतीतेः प्रातिलोम्येन ''इह पटे तन्तवः'' इति प्रतीतिः लोके अबाधिता सिद्धा च वर्तते। अतः नैयायिकेन अबाधितत्वेन स्वीकृता या ''इह तन्तुषु पटः'' इति प्रतीतिः, सा ''इह पटे तन्तवः'' इति प्रतीत्या बाधितैवेति, अबाधितप्रत्यक्षप्रतीतिमवलम्ब्य समवाय साधनमपि दूरापास्तमेव। तदुक्तं सदानन्दयतिभिः अद्वैतब्रह्मसिद्धौ ''तस्मादबाधितेहप्रत्ययस्य बाधितत्वात् असिद्धो हेतुः इति।

एवञ्च समवायस्य नित्यत्वम् एकत्वमपि न परीक्षाक्षम मित्यायातम्। अनुमानेन, प्रत्यक्षेण वा साध्यमानोऽपि सः नित्यत्वैकत्वरहितः सिद्ध्येत् चेत् नास्ति अद्वैतवेदान्तिनां विरोधः। यथा खल्वस्माभिः आदावेव संयोगसमवायस्थलयोः स्वरूपभेदप्रदर्शनेन संयोगातिरिक्तः कश्चन सम्बन्धः गुणगुण्यादि स्थले अङ्गीकरणीयः इति स्थापितम्; तावन्मात्रमेव वैशेषिक प्रदर्शितानुमानैः वा प्रत्यक्षेण वा सिद्ध्यति। न तु नित्यत्वैकत्व घटित सम्बन्धरूपः समवायः सिद्ध्यति इति प्रदर्शितम्। स तादृशः संयोगातिरिक्तः सम्बन्धः तादात्म्यमेव इति अद्वैतिनां सिद्धान्तः। तादात्म्यं चैतत् भिन्नत्वे सत्यभिन्न सत्ताकत्वं, सत्तानवच्छेदक भेदवत्त्वमिति आश्रमस्वामिनः। ''एतदेव सिद्धान्ते कल्पित भेदः उपादानोपादेययोः इत्युच्यते'' इत्यपि आश्रमस्वामिनः। अतः अद्वैतवेदान्ते सिद्धान्ते कल्पित भेदः उपादानोपादेययोः इत्युच्यते'' इत्यपि आश्रमस्वामिनः। अतः अद्वैतवेदान्ते उपदानोपादेययोः अभेद एव तात्त्विकः, भेदस्तु कल्पितः इति।

**टिप्पणी**

1. प्रशस्तापाद भाष्यम् - न्यायकन्दलीसहितम्। Ed. दुर्गाधर झा. गङ्गानाथ झा ग्रन्थमाला -1. Research Institute Varanaseya Sanskrit Viswavidyalaya, Varanasi, 1963. पृ. 775
2. तत्रैव पृ. 37
3. ब्रह्मसूत्रशाङ्करभाष्यम् Ed. अनन्तकृष्ण शास्त्री, चौखम्बा संस्कृत सीरिज् आफिस, वाराणासी, 1982, पृ. 518
4. प्रशस्तपादभाष्यम् - न्यायकन्दलीसहितम्। उदाहृतपूर्वम्, पृ. 38-39
5. तत्रैव। पृ. 37
6. प्रशस्तपादभाष्यम् किरणावलीसहितम्।

7. प्रशस्तपादभाष्यम् - सूक्ति - सेतुसहितम् । Ed. ढुण्ढिराज शास्त्री चौखम्बा, वाराणसी, 1930. पृ. 58
8. तत्रैव पृ. 58
9. तर्कसंग्रहः - चौखम्बा, वाराणासी, 1969. पृ. 76
10. कारिकावली Ed. Sankara Rama Sastry, Balamanorama press, Madras. 1923. पृ. 130
11. तत्रैव पृ. 130
12. प्रशस्तपादभाष्यम् - न्यायकन्दलीसहितम् । उदाहृतपूर्वम्, पृ. 38
13. प्रशस्तपादभाष्यम् - किरणावलीसहितम् । उदाहृतपूर्वम्, पृ 18.
14. प्रशस्तपादभाष्यम् - सूकित-सेतुसहितम् । उदाहृतपूर्वम्, पृ. 58
15. तत्रैव - पृ. 58-59
16. तत्रवप्नदीपिका - Ed. स्वीमी योगीन्द्रानन्दः, षड्दर्शन प्रकाशन प्रतिष्ठानम् । वारणासी 1985 २. 333
17. तत्रैव । पृ. 332-333
18. तत्रैव । पृ. 333-334
19. प्रशस्तपादभाष्यम् - न्यायकन्दलीसहितम् । उदाहृतपूर्वम् । पृ. 775-786
20. तत्त्वप्रदीपिका - उदाहृतपूर्वा, पृ. 335-336
21. न्यायलीलावती - Ed. हरिहरशास्त्रीढुण्ढिराजशास्त्री, चौरवम्बा वाराणसी, 1934. पृ. 704-706
22. तत्रैव । पृ. 707-708
23. तत्रैव । पृ. 713-714
24. तत्वप्रदीपिका । उदाहृतपूर्वा, पृ. 338-339
25. प्रशस्तपादभाष्यम् । सूक्तिसेतुसहितम् । उदाहृतपूर्वम् । पृ. 59-60
26. तत्रैव पृ. 60-61
27. वेदान्ततत्त्वविवेकः - Ed. S. Narayana Swamy Sastry, Oriental Research Institute, Mysore, 1955 पृ. 297-302
28. तत्रैव पृ. 301-302
29. अद्वैतब्रह्मसिद्धिः - University of Calcutta, Calcutta, 1932. पृ. 13-14
30. वेदान्ततत्वविवेकः - उदाहृतपूर्वः पृ. 304.

# सविकल्पकनिर्विकल्पकविचारः

पण्डित न.ध. श्रीनिवासशास्त्री

**सविकल्पकनिर्विकल्पकविचारः**

सर्वोऽपि लोको विषयज्ञानपुरःसरमेव प्रवर्तते निवर्तते चेत्येतत् सर्वानुभवसाक्षिकम् । प्रवृत्तिनिवृत्त्योः कारणीभूतं च ज्ञानं नामजातिगुणादिप्रकारकं व्यक्तिविशेष्यकं विशेषणविशेष्यवैशिष्ट्यविषयकं सविकल्पकमेवेति सर्वतन्त्रसिद्धान्तः । ज्ञाने प्रकारीभूतं जात्याद्यवस्त्विति बौद्धाः । वस्त्वित्यपरे । सर्वव्यवहारस्य सविकल्पकज्ञानपूर्वकत्वाद्व्यवहारानुपयोगि निष्प्रकारकं विशेषणविशेष्यवैशिष्ट्यानवगाह्यसंसृष्टवस्तुमात्रगोचरं निर्विकल्पकसंज्ञकं ज्ञानं किमर्थमिति प्रश्नः समुत्तिष्ठति । अमुं प्रश्नमसहमाना बौद्धास्तावदिन्द्रियार्थसंनिकर्षाज्जायमानं ज्ञानं निर्विकल्पकमेव, तदेव प्रत्यक्षं प्रमाणं चेति घोषयन्ति । कणादप्रभृतय उदयनाचार्यपर्यन्ताः प्राचीनाः सर्वेऽपि निर्विकल्पकज्ञानाङ्गीकारस्यावश्यकतामुपपादयन्ति । निर्विकल्पकज्ञानसद्भावे प्रमाणविचारं न प्रवर्तयन्ति । उदयनाचार्यादर्वाचीनो गङ्गेशोपाध्यायात्प्राचीनः शशधरमिश्र एव स्वकीये षड्विंशतिवादात्मके न्यायसिद्धान्तदीपनामके निबन्धे निर्विकल्पकवादे प्रथमतया प्रमाणविचारं प्रस्तौति । नव्यन्यायमहर्षिर्गङ्गेशोपाध्यायस्तत्त्वचिन्तामणौ शशधरसरणिमनुसरतीत्येतदुभयग्रन्थपरिशीलिनामतिरोहितम् । प्राधान्येन शशधरनिर्विकल्पकवादं विदुषां पुरतः प्रकटयितुकामा अपि वयं यावच्छक्यं सविकल्पकनिर्विकल्पकविषये सर्वदार्शनिकानां मतान्यनुक्रमेणोपक्षिपामः ।

**॥ योगदर्शनम् ॥**

पतञ्जलिः ''वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः (यो.सू. १.५) '' प्रमाणविपर्ययविकल्प निद्रास्मृतयः'' (यो.सू. १.६) इति सूत्राभ्यां पञ्चधा वृत्तिं विभज्य ''प्रत्यक्षानुमानागमाः प्रमाणानि'' (यो.सू. १.७) इति सूत्रेण प्रमाणवृत्तिं निरूपयति । तत्र ''इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात्तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्'' (यो.सू.भा. १.७) इति प्रत्यक्षप्रमाणविवरणपरं व्यासभाष्यं योगदर्शने सविकल्पकमेव प्रत्यक्षं, न निर्विकल्पकमिति निःशङ्कं प्रतिपादयति । ''तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः'' (यो.सू. १.५१) इयसंप्रज्ञातसमाधिप्रतिपादकं पातञ्जलं सूत्रम् । अस्यायमर्थः- तस्यापि संप्रज्ञातस्यापि निरोधे सर्वनिरोधात् सर्वासां चित्तवृत्तीनां निरोधात् निर्बीजः समाधिः। या चित्तस्य निरुद्धावस्था सा निर्बीजसमाधिशब्देन व्यवह्रियते - इति । निर्बीजसमाधिः असंप्रज्ञातसमाधिः निर्विकल्पसमाधिः इत्यनर्थान्तरम् । अस्मिन् समाधौ निर्विकल्पिका सविकल्पिका वा कापि वृत्तिर्नास्त्येव । तस्माद्योगदर्शने निर्विकल्पकं ज्ञानं नास्त्येव ॥

## ॥ सांख्यदर्शनम् ॥

उपलभ्यमानेषु सांख्यग्रन्थेषु अतिप्राचीना ईश्वरकृष्णकारिकाः, सांख्यप्रवचनसूत्राणि त्वर्वाचीनानीति कालपरीक्षाकुशला अभिप्रयन्ति। श्रीवाचस्पतिमिश्रव्याख्यापेक्षयात्यन्तं प्राचीना सांख्यकारिकाटीका युक्तिदीपिका इत्यत्र न कस्यापि विप्रतिपत्तिः सांख्यदर्शने अहंकारकार्याणीन्द्रियाणि प्राप्यकारीणि। तेषां विषयसंबन्धेन वृत्तिः = व्यापारः = परिणामः भवति। इन्द्रियवृत्तौ या विषयताद्रूप्यापत्तिः विषयाकारतापत्तिः तदेव आलोचनं = ग्रहणं इत्युच्यते। विषयग्रहणलक्षणा इन्द्रियवृत्तिः = प्रमाणम्। इन्द्रियवृत्तिमनु मनसो विविक्तविषयाकारपरिणामो भवति। पुरुषस्य चैतन्यं प्रत्ययशब्देनाभिधीयते। इन्द्रियवृत्त्यनुपाती मनसो विविक्तविषयाकारपरिणामः पुरुषचैतन्यव्याप्त एव जायते। प्रत्ययशब्दवाच्यप्रकाशशून्या इन्द्रियवृत्तिर्विषयाकारापि विषयं न प्रकाशयति। पुरुषचैतन्यरूपप्रत्ययवती विषयाकारा मनोवृत्तिरेव विविक्ततया जात्यादियोजनया विषयं प्रकाशयतीति प्रत्ययवतीं सङ्कल्पात्मकमनोवृत्तिमेवाध्यवसायपदेन व्यपदिशन्ति सांख्याः। तस्मात् सांख्यदर्शने सर्वं ज्ञानं सविकल्पकमेव। उक्तार्थे युक्तिदीपिकां प्रमाणयामः "सांख्यवृद्धा आहुः आहंकारिकाणां तु तेषां (इन्द्रियाणां) व्यापकत्वाद्विषयाकारपरिणामात्मिका वृत्तिर्वृत्तिमतोऽनन्या सती संभवत्येवेति सुवचं प्राप्यकारित्वम्" (१०३.२५-२७) "करणस्य कस्मिन्नर्थे वृत्तिः, किंलक्षणा वा वृत्तिः इति। उच्यते - यदुक्तं तस्य कस्मिन्नर्थे वृत्तिरित्यत्र ब्रूमः:- 'रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः' (सां.का. २८)। रूपादिषु शब्दस्पर्शरूपरसगन्धेषु स्वभेदभिन्नेषु पञ्चानां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां श्रवणस्पर्शनदर्शनरसनघ्राणलक्षणो व्यापारो वृत्तिरित्युच्यते। यत्पुनरेतदुक्तं किंलक्षणेत्यत्र ब्रूमः:- आलोचनमात्रं इष्यते इति। आलोचनं ग्रहणमित्यनर्थान्तरम्। विषयसंपर्कादिन्द्रियवृत्तेस्ताद्रूप्यापत्तिरेव ग्रहणमित्युच्यते। मात्रशब्दो विशेषनिवृत्त्यर्थः। छन्दोमात्रमधीते माणवक इत्युक्ते नान्यदधीत इति। एवंमालोचनमात्रमिन्द्रियाणामिष्यते वृत्तिरित्युक्ते नान्यो विशेष इति गम्यते। तस्मादिन्द्रियमप्रत्ययमिति। ग्राहकं श्रोत्रादि, व्यवसायकमन्तः करणम्" इति (पृष्ठ १०२ - १०३)।" 'प्रतिविषयाध्यवसायो दृष्टम्' (सां.का. ५) अध्यवसायो बुद्धिः। विषयं विषयं प्रति वर्तत इति प्रतिविषयम्। इन्द्रियम्। तस्मिन्योऽध्यवसायः सः प्रतिविषयाध्यवसायः। उपात्तविषयाणामिन्द्रियाणां वृत्त्युपनिपाति मनसः सत्त्वोद्रेकादरजस्तमस्कं यत् प्रकाशरूपं तद् दृष्टम् प्रत्यक्षमित्यर्थः" (पृष्ठ. ३५)

योगदर्शनभट्टवार्तिकवासनावासितान्तः करणाः श्रीवाचस्पतिमिश्राः पूर्वोक्तकारिकागतस्य वृत्तिशब्दस्य संनिकर्षार्थकत्वं, आलोचनशब्दस्य निर्विकल्पार्थकत्वं चाभिप्रेत्य विषयेन्द्रियसंनिकर्षसमनन्तरं 'इदम्' इति संमुग्धं वस्तुमात्रदर्शनमालोचनं निर्विकल्पकं जायते, ततः संकल्पकं मनः 'इदमेवम्' 'न एवम्' इति सम्यक् कल्पयति। विशेषणविशेष्यभावेन विवेचयतीति सांख्यतत्त्वकौमुद्यामभिदधति। यद्यपि वाचस्पतिमिश्रास्तात्पर्यटीकायां "वार्षगण्यस्यापि लक्षणमयुक्तमित्याह - श्रोत्रादिवृत्तिरिति। पञ्चानां खल्विन्द्रियाणामर्थाकारेण परिणतानामालोचनमात्रं वृत्तिरिष्यते" (पृष्ट. २४२, ९-१०) इति सांख्याचार्यस्य वार्षगण्यस्य सिद्धान्तं खण्डयत्वे नानुवदन्ति, तथापि वार्षगण्ययुक्तिदीपिकाकारौ प्रमाणयन्तः सांख्यदर्शननिष्णाताः ईश्वरकृष्णकारिकायाः श्रीवाचस्पतिश्रव्या ख्या सांख्यसिद्धान्तं न स्पृशतीति तां नाद्रियन्ते। तस्मात् सांख्यदर्शने निर्विकल्पकज्ञानं नास्त्येव॥

## ॥ भर्तृहरिमतम् ॥

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ (वा.प. १.११५)
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥ (वा. प. १.११६)

इति सर्वस्य ज्ञानस्य वाग्रूपतां प्रतिपादयति भर्तृहरिः। विषयं विना ज्ञानमेव नास्ति, यतो विषयनिरूप्यं ज्ञानम्। विषयनामधेयेनैव ज्ञानं व्यपदिश्यते। शब्दार्थयोस्तादात्म्यमन्तरा विषयनिरूप्यज्ञानस्य वाग्रूपत्वं दुर्वचम्। अर्था हि प्रतीयमाना नामधेयैरुपेतास्तत्सामानाधिकरण्येनावगम्यन्ते, गौरिति अर्थः, अश्व इति अर्थः इति। नामधेयात्मानोऽर्थाः, तत्सामानाधिकरण्येन प्रतीयमानत्वात्; यत्पुनर्यदात्मकं न भवति न तत्तत्सामानाधिकरण्येन प्रतीयते; यथा गौरश्वसामानधिकरण्येन; प्रतीयन्ते चार्थाः शब्दसामानाधिकरण्येन; तस्माच्छब्दात्मानोऽर्था इति। बालमूकादीनामपि विज्ञानं शब्दानुव्याधवदेव, अनादिशब्दवासनावशात्। उक्तं च हरिणा -

"आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥" (वा.प. १.११४) इति।

तस्मात् सर्वमर्थज्ञानं शब्दतादात्म्यरूपसंबन्धविषयकं इति ज्ञानं सविकल्पकमेव, न निर्विकल्पकम्॥

## ॥ अक्षपादमतम् ॥

"इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" (न्या.सू. १.१.४) इति प्रत्यक्षसूत्रम्। इदं सूत्रं प्रत्यक्षलक्षणपरमेव। विभागलक्षणोभयपरत्वे वाक्यभेदः प्रसज्येत। योगविभागेन यद्यप्युभयपरत्वं वक्तुं शक्यं तथापि लक्षणकथनानन्तरं लक्षितस्य वस्तुनो विभागप्रदर्शनमित्युत्सर्गः। प्रकृते अवसायः = निश्चयः। व्युपसृष्टोऽवसायः = विकल्पितो निश्चयः। तदात्मकं ज्ञानं प्रत्यक्षमितिफलितम्। लक्षणघटकमव्यपदेश्यपदं लक्ष्यासंभववारकतया सार्थकम्। सर्वं प्रत्यक्षं विषयनामधेयपुरःसरमेवोत्पद्यते विषयनामधेयेन व्यपदिश्यते च। नियमेन यत्पूर्वकं यज्जायते तत्तदुपायकं; यथा इन्द्रियपूर्वकं प्रत्यक्षमिति इन्द्रियकरणकमुच्यते तथा शब्दपूर्वकमिति शब्दोपायकमपि। विकल्पज्ञाने शब्दस्य साधकतमत्वात् सर्वं प्रत्यक्षं शाब्दमिति केवलेन्द्रियासाधारणकरणकत्वं प्रत्यक्षस्य न संभवतीत्यशाब्दं प्रत्यक्षमेव नास्तीति शङ्का समुन्मिषति। अव्युत्पन्नस्येन्द्रियेण शब्दानुपायकं यादृशं व्यवसायात्मकं प्रत्यक्षं जायते व्युत्पन्नस्यापि तादृशमेव जायते। व्यवहारकाले तु शब्दः व्याप्रियते। अतो नियमेन शब्दपूर्वकत्वाभावादशाब्दं प्रत्यक्षं संभवतीति पूर्वोक्तामाशङ्कां परिहर्तुमव्यपदेश्यपदमिति सूत्रकाराशयाभिज्ञो भाष्यकारो वात्स्यायनः "इन्द्रियार्थसंनिकर्षादुत्पन्नमर्थज्ञानं रूपम् इति वा, रस इत्येवं वा भवति, रूपरसशब्दाश्च विषयनामधेयम्। तेन व्यपदिश्यते ज्ञानम् रूपमिति जानीते, रस इति जानीते। नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्यते। अत आह - अव्यपदेश्यमिति। यदिदमनुपयुक्ते शब्दार्थसंबन्धे अर्थज्ञानम्, न तत् नामधेयशब्देन व्यपदिश्यते, गृहीतेऽपि च शब्दार्थसंबन्धे अस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते, तदा तत्-पूर्वस्माद र्थज्ञानात् न विशिष्यते, तत् अर्थविज्ञानं तादृगेव भवति..... अर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते, व्यवहारकालेतु व्याप्रियते। तस्मादशाब्दम्

अर्थज्ञानमिन्द्रियार्थसंनिकर्षोत्पन्नम्'' (पृष्ठ. १९७.२१-१९८.१०) इति भाष्येण इन्द्रियार्थसंनिकर्षोत्पन्नस्य ज्ञानस्य अव्यपदेश्यपदेनाशाब्दत्वमुपपाद्य इन्द्रियार्थसान्निकर्षोत्पन्नमव्यभिचारि व्यवसायात्मकं सविकल्पात्मकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणपरतया सूत्रं व्याचक्षाणः सविकल्पकमेव प्रत्यक्षमभ्युपैति, न निर्विकल्पकम्।

भाष्याशयमेव विवृण्वन्नुद्योतकरोऽपि ''तच्चेन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं विषयनामधेयेनाभिधीयते इति भाष्यम्। तत्प्रतिषेधार्थमाहअव्यपदेश्यमिति। तदिदमनुपयुक्तशब्दार्थसंबन्धस्य विषयभेदानुविधायि ज्ञानं तत् प्रत्यक्षम्। कृतशब्दार्थसंबन्धस्यापि तदुत्पत्तिकाले तादृगेव'' (पृष्ठ. २०३, २४-२०४.२) इति वार्त्तिकेन निश्शङ्कं प्रत्यक्षलक्षण सूत्रप्रतिपाद्यं ज्ञानं सविकल्पकमेवेति मन्यते।

जयन्तभट्टाः न्यायमञ्जर्यां उभयजज्ञानस्य व्यवच्छेदार्थं सूत्रे अव्यपदेश्यपदमिति आचार्याणामभिप्रायं वर्णयन्ति। तथा हि - ''व्यवच्छेद्यान्तरमव्यपदेश्यपदस्य वर्णयांचक्रुराचार्याः। शब्दार्थेषु स्थविरव्यवहारतो व्युत्पद्यमानो जनः संशयावगमसमये संज्ञोपदेशकादयं पनस उच्यत इति वृद्धेरिताद्वाक्यात् पुरोऽवस्थितशाखादिमन्तमर्थं पनसशब्दवाच्यतया जानाति। तदस्य ज्ञानमिन्द्रियजमपि न केवलेन्द्रियकरणकं भवितुमुचितम्। असति संज्ञोपदेशिनि शब्दे तदनुत्पादात्। तेन शब्देन्द्रियाभ्यां संभूय जनितत्वादुभुयजमिदं ज्ञानं व्यपदेशाज्जातमिति व्यपदेश्यमुच्यते। तदव्यपदेश्यपदेन व्युदस्यते। न चेदं पञ्चमप्रमाणमवतरति, किं तु शाब्दमिवैतदनुमन्यते लोकः। तथा च कथं पुनर्जानीते भवान् पनसोऽयमिति पृष्टः प्रतिवक्ति मम देवदत्तेनाख्यातं पनसोऽयमिति। न पुनरेवं विस्मृत्यापि ब्रवीति चक्षुषा मया प्रतिमन्नं पनसोऽयमुच्यत इति। तदिन्द्रियान्वय-व्यरिकानुविधाने सत्यपि शब्द एवात्र करणम् ''इन्द्रियानुप्रवेशेऽपि शाब्दतामस्य मन्यते सूत्रकारः। इह पुनः अव्यपदेश्यविशेषणपदोपादानेन शब्दानुप्रवेशनिषेधान्न प्रत्यक्षफलमेतज्ज्ञानम्। तस्मादेवंविधव्य-पदेश्यविज्ञानव्यवच्छेदार्थमव्यपदेश्यपदम्'(७३.२७-७४.१०) इति। अत्र जयन्तभट्टेन निर्दिश्यमाना आचार्या न श्रीवाचस्पतिमिश्राः, यत उदयनार्चाः परिशुद्धौ उपमानप्रकरणे ''अत्रोपमानस्य फले विप्रतिपद्यमानान् प्रति साशङ्कं जरन्नैयायिकजयन्तप्रभृतीनां परिहारमाह-यद्यपीति''(पृष्ठ.३६२.३-४) इति श्रीवाचस्पतिवाक्यमवतारयन्ति।

किं च श्रीवाचस्पतिमिश्रा न्यायकणिकायां श्रीमण्डनमिश्रवाक्यव्याख्यानसमये वात्स्यायनभाष्याशयमेवं वर्णयन्ति ''भाष्यकारो हि शाब्दज्ञाननिवृत्त्यर्थम् अव्यपदेश्यपदं वर्णयांबभूव तथा हि - यत्र प्रत्यक्षेण दृश्यमाने केसरादिमति वस्तुनि नागरिकेणारण्यकं प्रत्युच्यते तुरङ्गोऽयमिति तत्रारण्यकस्तस्य वस्तुनस्तुरङ्गम-पदवाच्यतामवैति, मानद्वयव्यापारात् .........तच्चैतदुभयमपि ज्ञानं शाब्दमेव, शब्दस्य तत्र साधकतमत्वात्। सत्यपीन्द्रियार्थसंनिकर्षे शब्दाभावे तदनुपपत्तेः।..... तस्मादुभयजस्य विज्ञानस्य शाब्दस्य निवृत्त्यर्थमव्यपदेश्यपदं व्याख्यातम् अयुक्तं स्यात्'' (पृष्ठ. १२६.९-१९) इति। न्यायमञ्जर्युक्ताचार्यव्याख्यादृष्ट्या च सूत्रकारेण निर्विकल्पकं नाभिप्रेतमिति स्पष्टं जानीमः।

अत्रायमाक्षेपः - ''यदिदमनुपयुक्ते शब्दार्थसंबन्धेऽर्थज्ञानं न तत् नामधेयशब्देन व्यपदिश्यते। गृहीतेऽपि च शब्दार्थसंबन्धेऽस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते तदा तत् पूर्वस्मादर्थज्ञानान्न विशिष्यते। तदर्थविज्ञानं तादृगेव भवति '' इति हि वात्स्यायनभाष्यम्। इदं भाष्यं श्रीवाचस्पतिमिश्राः टीकायामेवं विवृण्वन्ति ''यथा अव्युत्पन्नस्य रूपादिषु शब्दरहितं निर्विकल्पकं प्रत्यक्षं तथा व्युत्पन्नस्यापि नामधेयस्मरणाय पूर्वमेषितव्यो

विनैव नामधेयमर्थप्रत्ययः । यदा तु सोऽर्थः नामधेयरहितो नामधेयस्मरणात्पूर्वमविकल्पेन गृह्यते तदा पूर्वस्मात् अव्युत्पन्नावस्थायां अर्थज्ञानात् न विशिष्यते इति । यतो न विशिष्यते तस्मात् तदर्थज्ञानं तादृगेव भवति'' (पृष्ठ. २२२.२५-२२६.२) इति । उदयनाचार्या अपि ''तदर्थज्ञानं तादृगेव भवति'' इत्यस्य ''तत्समानजातीयमेव भवतीत्यर्थः'' (पृष्ठ. २६३.२२) इति विवरणं कुर्वन्ति ।

जयन्तभट्टोऽपि ''यदिदमविदितपदपदार्थसंबन्धस्य ज्ञानमुत्पद्यते विदितसंबन्धस्यापि वा यत् प्रथमाक्षसंनिपातसमय एव ज्ञानमनुल्लिखितशब्दकं शब्दानुस्मरणे हेतुभूतमुपजायते तदशाब्दम् । अशब्दावच्छिन्नविषयमव्यपदेश्यमिन्द्रियार्थसंनिकर्षैककरणं अविकल्पकं प्रत्यक्षम्'' (७६.४-७) इति न्यायमञ्जर्यां वदति ।

जयन्तभट्टटीकाकारावुभावपि पूर्वनिर्दिष्टभाष्यस्याव्युत्पन्नस्य इन्द्रियार्थसंनिकर्षेण नामधेयरहितं यादृशं निर्विकल्पकं प्रत्यक्षं भवति तादृशमेव व्युत्पन्नस्यापि प्रथमाक्षसंनिपातसमनन्तरक्षणं नामधेयसंस्पर्शरहितं निर्विकल्पकं प्रत्यक्षं भवतीत्याशयं वर्णयतः ।

एवं स्थिते यथा अव्युत्पन्नस्य नामधेयरहितं सविकल्पकं प्रत्यक्षं भवति तथा व्युत्पन्नस्य तादृशमेव सविकल्पकं प्रत्यक्षं जायत इति कथं जयन्तभट्टटीकाकारविरुद्धं भाष्याशयं भवान् वर्णयति-इति ।

इदमत्र समाधानम् - व्याख्याग्रन्थाननवलम्ब्य केवलं भाष्यवाक्यं समालोचनीयमस्माभिः । लोके कश्चन अश्वपदार्थं न जानीते । स वाजिशालां गतः । तत्र बहून् वाजिनः पश्यति । गृहीतसंकेतेन पुरुषेण यादृशाकृतिरूपादिविशिष्टव्यक्तयः प्रत्यक्षीक्रियन्ते तथैव अविदिताश्वपदार्थपुरुषेणापि आकृतिरूपादिविशिष्टा व्यक्तयः प्रत्यक्षीक्रियन्ते । नामधेयज्ञानाभावात् पदार्थं तज्ज्ञानं वा अश्वनामधेयेन न व्यपदिशति । गृहीतसंकेतस्तु पुरुषो नामधेयशब्देन व्यवहरति । अत एवं ''अर्थज्ञानकाले सः समाख्याशब्दो न व्याप्रियते, व्यवहारकाले तु व्याप्रियते'' इति भाष्यम् संगच्छते । अनुपयुक्तशब्दार्थसंबन्धे यदिदमर्थज्ञानं न तन्नामधेयशब्देन व्यपदिश्यते, गृहीते तु शब्दार्थसंबन्धे तेन शब्देनार्थो ज्ञानं च व्यपदिश्यते इति लोकानुभवः । भाष्यकार एकमेव पुरुषं मनसि निधाय अव्युत्पन्नतादशायां नामधेयं विना तस्य संस्थानविशेषरूपादियुक्तवस्तुप्रत्यक्षं यादृग्भवति तादृगेव व्युत्पन्नतादशायामपि भवतीति वदति । व्युत्पन्नतादशाया मस्यार्थस्यायं शब्दो नामधेयमिति जानाति व्यवहरति च। अयमेव विशेषः पूर्वावस्थात उत्तरावस्थायाः । तस्मात् वात्स्यायनो निर्विकल्पं प्रत्यक्षं नाभिप्रैति । भाष्याशयवर्णनपरः उद्योतकरोऽपि निर्विकल्पकं न वदतीति वयं ब्रूमः । वात्स्यायनः सविकल्पकप्रत्यक्षे नामधेययोजनां नाङ्गीकुरुते । तदनन्तरकालिका वसुबन्धुदिङ्नागप्रभृतयः सविकल्पके, नामयोजनां वक्तुं प्रारभन्त। ताननुसरन्तो भट्टपादाः सविकल्पके नामयोजनां नामधेयस्मरणजनकसंस्कारोद्बोधकत्वेन निर्विकलपकस्य आवश्यकतां च प्रोचुः । भट्टपादमार्गमनुसरन्तः सर्वेऽपि नैयायिकाः सविकल्पके नामयोजनां प्रतदर्शयन्ति इति न विस्मर्तव्यम् ।

## ।। कणाददर्शनम् ।।

''आत्मेन्द्रियमनोऽर्थसंनिकर्षाद्यन्निष्पद्यते तदन्यत्'' (वै.सू. ३.१.१३) इति सूत्रे आत्मलिङ्गत्वेनोक्तं प्रत्यक्षं सविकल्पकमेव निर्दिशति कणादः । प्रत्यक्षस्य लक्षणसूत्रमपीदमेव । सूत्रस्यायमर्थः - आत्मेन्द्रियमनोऽर्थचतुष्टयसंनिकर्षाद्यदुत्पद्यते प्रत्यक्षं तदन्यत् आत्मज्ञापकं हेत्वन्तरमिति । '' द्रव्येषु ज्ञानं

व्याख्यातम्'' (वै.सू.८.१) इति सूत्रेण द्रव्यविषयकं ज्ञानं व्याख्यातमित्युक्त्वा ''समवायिनः श्वैत्यात्श्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते'' (वै.सू. ८.९) इति सूत्रेण गुणज्ञानं व्याख्याति। सूत्रस्यायमर्थः -श्वेतगुणसमवायिनः श्वेतत्वसामान्यात् श्वेतत्वसामान्यज्ञानाच्च श्वेतगुणज्ञानं जायते। अतो विशेषणबुद्धिः कारणं, विशेष्यबुद्धिः कार्यमिति। अनेन सूत्रेण कणादः श्वेतत्वविशिष्टश्वेतगुणज्ञानं प्रति श्वेतत्वरूपसामान्यज्ञानस्य कारणत्वं वदन् श्वेतत्वसामान्यस्य श्वेतत्वसामान्यसंबन्धस्य च स्वरूपसत्तया कारणत्वं वदति। अनेन सूत्रेण स्पष्टतया विशिष्टज्ञानात् पूर्वं केवलजातिविषयकं निर्विकल्पकं ज्ञानमस्तीति ज्ञायते। तस्मात् कणादो निर्विकल्पकं सविकल्पकं च ज्ञानमङ्गीकरोतीति प्रतीमः।

प्रशस्तपादोऽपि ''द्रव्ये तावात्त्रिविधे महत्यनेकद्रव्यवत्वोद्भूतरूपप्रकाशचतुष्टसंयनिकर्षाद् धर्मादिसाम्ग्ये च स्वरूपालोचनमात्रम्'' (पृष्ठ. १८४.४-६) इति ग्रन्थेन केवलस्वरूपविषयकं ग्रहणं निर्विकल्पकमित्युक्त्वा ''सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षादात्ममनःसंनिकर्षात् प्रत्यक्षमुत्पद्यते 'सद्' 'द्रव्यम्' 'विषाणी' 'शुक्लो' 'गौः 'गच्छति' इति' (पृष्ठ. १८४.६-९) इतिग्रन्थेन सविकल्पकं प्रत्यक्षमभिदधाति। भेदवादिनां वैदिकानां मध्ये निर्विकल्पकज्ञानं कणादोपज्ञमित्युक्तिर्नातिशयोक्तितामावहति॥

## ॥ वसुबन्धुदिङ्नागादिमतम्॥

वसुबन्धुः ''ततोऽर्थात् जातं विज्ञानं प्रत्यक्षम्'' (प्र.स. १५) इति प्रत्यक्षलक्षणं वदति। तद्वाक्यस्यायमर्थः - ततः तन्मात्रात् स्वलक्षणात् अर्थात् अर्थक्रियाकारिणो वस्तुन आलम्बनात् जातं विज्ञानं निर्विकल्पकं ज्ञानं प्रत्यक्षम् - इति। एवं वदन् वसुबन्धुः नामजातिगुणविशिष्टविषयकं ज्ञानमप्रत्यक्षं मन्यते। दिङ्नागश्च वसुबन्धुशिष्यः प्रमाणसमुच्चये ''प्रत्यक्षं कल्पनापोढम् नामजात्याद्यसंयुतम्'' (प्र.स.३) इति प्रत्यक्षप्रमाणस्य लक्षणमुक्त्वा ''अथकेयं कल्पना नाम - नामजात्यादियोजना'', यत्रैषा कल्पना नास्ति तन्निर्विकल्पकं प्रत्यक्षं प्रमाणम्। अवस्त्वात्मकनामजात्यादिसंबन्धविषकं सविकल्पकं ज्ञानं, निर्विकल्पकं प्रत्यक्षमनुजायमानं, प्रत्यक्षायमाणमप्रत्यक्षमेव, अत एव न प्रमाणमिति वदति। प्रमाणसमुच्चये उत्तरत्र ''स्वसंविन्निर्विकल्पकं प्रत्यक्षं शुद्धवस्तुजम्'' इति वक्ति। 'शुद्धम्' इति पदस्यासंकीर्णं जात्यादिरहितं स्वलक्षणं वस्तु इत्यर्थः। कणादप्रशस्तपादौ निर्विकल्पकज्ञानमभ्युपगच्छतः कणादो विशेषणज्ञानमित्येवोल्लिखति। प्रशस्तपादः स्वरूपालोचनमात्रमिति निर्दिशति। दिङ्नाग एव तज्ज्ञानमिदंप्रथमतया निर्विकल्पकपदेन व्यपदिशति। पश्चात्तनो धर्मकीर्तिरपि '' कल्पनापोढमभ्रान्तं प्रत्यक्षम्'' (न्या.बि. १.४) इति दिङ्नागोक्तमनुवदति। शान्तरक्षितोऽपि तत्त्वसंग्रहे नामजात्यादिकल्पनारहितस्वलक्षणमात्रविषयकं निर्विकल्पकं प्रत्यक्षं प्रमाणं नामजात्यादिवैशिष्ट्यविषयिणी सविकल्पिका प्रतीतिरप्रमणमिति

''प्रत्यक्षं कल्पनापोढमभ्रान्तमभिलापिनी।
प्रतीतिः कल्पनाक्लृप्तिहेतुत्वाद्यात्मिका न तु॥'' (कारिका १२१४)

इति कारिकया वदति।

## ॥ कुमारिलमतम्॥

दिङ्नागः शुद्धवस्तुजं निर्विकल्पकं प्रत्यक्षमिति वदति । भट्टपादा अपि "अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ (प्रत्यक्ष. ११२) "निर्विकल्पकवोधेऽपि दूयात्मकस्यापि वस्तुनः ।

ग्रहणम्, ................................ ॥" (प्रत्यक्ष. ११८) इति श्लोकाभ्यां शुद्धवस्तुजमेव निर्विकल्पकं प्रत्यक्षं, जातिव्यक्तिद्व्यात्मकमेव शुद्धं वस्तु, न स्वलक्षणमित्त्वा द्व्यात्मकस्य वस्तुनः राहित्यरूपशुद्धत्वं कथमित्याशङ्क्य समादधति -

"न विशेषो न सामान्यं तदानीमनुभूयते ।
तयोराधारभूता तु व्यक्तिरेवावसीयते ॥" (प्रत्यक्षं ११३)

इति । श्लोकस्यास्यायमर्थः - विशेषः व्यावृत्तिः खण्डव्यक्तौ मुण्डादिव्यक्तिव्यावृत्तिः तदानीं निर्विकल्पकबोधकाले नानुभूयते । सामान्यं अनुवृत्तिः सर्वव्यक्त्यनुगतत्वं जातौ तदानीं नानुभूयते । तयोः व्यावृत्त्यनुवृत्त्योः आधारभूता व्यक्तिरेव व्यक्त्यात्मकं वस्तु जात्यात्मकं च वस्त्वेव ज्ञायते । संपिण्डिताकारं अविभक्तं बालमूकविज्ञेयादिसदृशं निर्विकल्पके भासते इति यावत् । कुतो जातिरनुवृत्तत्वेन व्यक्तिर्व्यावृत्तत्वेन निर्विकल्पके न भासते इति शङ्कां समादधति -

"न त्वसाधारणत्वेन परव्यावृत्त्यकल्पनात् । विशेषानुगमाक्लृप्तेः
सामान्यमिति नापि तत् ॥" (प्रत्यक्ष. ११९)

इति । अस्यायमर्थः - परव्यावृत्त्यकल्पनात् परेषां मुण्डादिव्यक्तीनामनवबोधात् परेभ्यो मुण्डादिभ्यो व्यावृत्तेर्ज्ञातुमशक्यत्वाद्व्यक्तिः असाधारणत्वेन व्यावृत्ताकारत्वेन निर्विकल्पके न भासते । विशेषानुगमाक्लृप्ते : विशेषाणामन्यव्यक्तीनामनवबोधाद्विशेषेषु इतरव्यक्तिषु अनुगमस्य अनुवृत्तत्वस्य अक्लृप्तेः अकल्पनात् जातिः सामान्यमिति सर्वानुगतमिति निर्विकल्पके न भासते - इति । तथा च नि र्विकल्पके जाति व्यक्त्युभयात्मकं अनुवृत्तिव्यावृत्त्यात्मना अविभक्तं संपिण्डितं वस्तु भासते । तदनु

"ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता ॥" (प्रत्यक्ष. १२०)

इति श्लोकेन व्यक्तौ जात्यादिवैशिष्ट्यावगाहि सविकल्पकं जायते । एतदपि प्रत्यक्षप्रमाणमेव, जात्यादेर्वस्तुभूतत्वादिति वदन्तो भट्टपादाः सविकल्पकं निर्विकल्पकमुभयमप्यङ्गीकुर्वन्ति । किं च निर्विकल्पकाभावे सविकल्पकं ज्ञानमेव नोदेतुमर्हति । यतो निर्विकल्पकज्ञानमेव नामधेयस्मरणजनकसंस्कारोद्बोधकं वक्तव्यम्, तदभावे नामधेयस्मरणाभावात् नामजात्यदियोजनात्मकं सविकल्पकमेव दुर्घटमित्यपि निरूपयन्ति ॥

**॥ प्राचीननैयायिकानां मतम् ॥**

जयन्तभट्टः

"नन्वेवं सविकल्पस्य प्रत्यक्षत्वे प्रसाधिते ।
नेदानीं संगृहीतं स्यात् प्रत्यक्षं निर्विकल्पकम् ॥

यत्र शब्दानुवेधेऽपि प्रत्यक्षं ज्ञानमिष्यते।
तत्र तत्स्पर्शशून्यस्य तथात्वे का विचारणा॥
निर्विकल्पकवत्तस्मात् प्रत्यक्षं सविकल्पकम्।
समग्रहीच्च तदिदं पदेनानेन सूत्रकृत्॥'' (न्या. म. ८२.१३-२०)

इति अव्यपदेश्यपदेन सूत्रकारेण निर्विकल्पकं संगृहीतमिति वदन्नपि अव्यपदेश्यपदात् तल्लाभप्रकारं नावोचत्। जयन्तभट्टमनु त्रिलोचनगुरवः अव्यपदेश्यपदेन निर्विकल्पकज्ञानलाभप्रकारं विविच्य वर्णयामासुः। जयन्तभट्टत्रिलोचनश्रीवाचस्पतिप्रभृतयः संपिण्डितं द्व्यात्मकं वस्तु न निर्विकल्पके विषयः, अपि तु सामान्यं व्यक्तिश्च विशकलिततया एव भासते इति मन्यन्ते। प्राचीननैयायिकानां मते निर्विकल्पके संबन्धो न भासते। श्रीवाचस्पतिमिश्राः स्वगुरुत्रिलोचनोन्नीतपद्धतिमवलम्ब्य सविकल्पकनिर्विकल्पकपरतया न्यायसूत्रस्य विवरणं कुर्वन्ति। तथा हि - ''इह द्वयी प्रत्यक्षजातिरविकल्पिका सविकल्पिका चेति। तत्रोभय्यपि इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यभिचारीति लक्षणेन संगृहीतापि स्वशब्देनोपात्ता, तत्र विप्रतिपत्तेः। तत्राविकल्पिकायाः पदम् अव्यपदेश्यमिति, सविकल्पिकायाश्च व्यवसायात्मकमिति। तत्र व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि, तत्कर्मव्यपदेश्यं विशेष्यमिति यावत्। तद्यथा डित्थोऽयं गौरयं शुक्लोऽयं कमण्डलुमानयं गच्छत्ययमिति सर्वं हि सविकल्पकं विशेषणविशेष्यभावेन वस्तुषु प्रवर्तते। अविद्यमानं व्यपदेश्यं यस्मिंस्तदव्यपदेश्यं जात्यादिस्वरूपावगाहि, न तु जात्यादीनां मिथो विशेषणविशेष्यभावावगाहि इति यावत्'' (पृष्ठ. २२०.७-१४) इति।

किं च अर्थस्य शब्दतादात्म्यनिराकरणं विना नामरहितं निर्विकल्पकं दुर्वचमिति मन्यमानाः श्रीवाचस्पतिमिश्राः भर्तृहरिमतमपाकुर्वाणा वदन्ति ''सामानाधिकरण्येन शब्दात्मकत्वं रूपादीनामभिधीयमानं शब्दब्रह्मात्मकत्वं वोच्येत, श्रूयमाणगौरित्यादिपदभेदात्मकत्वं वा? न तावदाद्यः कल्पः। न खल्वस्मदादिसमस्तदर्शनपथातिवृत्तेन शब्दब्रह्मणा रूपादीनामस्ति सामानाधिकरण्यप्रतीतिः लौकिकानाम्। श्रूयमाणशब्दसामानाधिकरण्येन तु तादात्म्यप्रसाधने अनुपयुक्तशब्द संबन्धस्य बालमूकादेः रूपादिज्ञानेषु नास्ति श्रूयमाणशब्दगन्धोऽपि, प्रागेव तु तत्सामाधिकरण्यम्। न च तेषामपि प्राग्भवीयशब्दभावनानुगमेन तत्सामानाधिकरण्यमिति सांप्रतम्। न खलु रूपाद्यात्मनः शब्दस्य रूपादिवैशद्येनावैशद्यं संभवति। युगपद्वैशद्यावैशद्यरूपविरुद्धधर्मयोगेन भेदप्रसङ्गात्। वैशद्ये तु व्युत्पन्नवदव्युत्पन्नोऽपि शब्दैः व्यवहरेत्, न तु संबन्धग्रहणमपेक्षेत। न च तादात्म्यादन्यद् वाचकत्वं शब्दानां यत्र संबन्धग्रहापेक्षा भवेत्.... तस्मादव्युत्पन्नानामस्ति शब्दरहितं रूपादिषु निर्विकल्पकं प्रत्यक्षमिति। न केवलमव्युत्पन्नानाम्, व्युत्पन्नानामप्यस्ति (पृष्ठ. २२१.२४-२२२.९) ..... अपि च श्रूयमायणशब्दात्मत्वे रूपादीनाम्, तेषामपि श्रवणग्राह्यत्वमित्यन्धोऽपि रूपं गृह्णीयात्। अस्ति हि तस्य श्रोत्रं च शब्दज्ञानं च। एवं बधिरोऽपि शब्दं गृह्णीयात्। अस्ति हि तस्य लोचनं च रूपज्ञानं च'' (पृष्ठ. २२३.१६-१८)इति

उदयनाचार्या अप्यमुमेव पन्थानमङ्गीकृत्य सविकल्पकं निर्विकल्पकं च ज्ञानमुपपाद्य निर्विकल्पके जातिभानस्य व्यक्तिभानस्य च संनिकर्षवत् संबन्धभानेऽपि इन्द्रियसंयुक्तविशेषणताख्यसंनिकर्षस्य सत्त्वात्, संबन्धः कुतो न भासते इत्याशङ्क्य संबन्धज्ञानं प्रति संबन्धिज्ञानस्य कारणत्वात् निर्विकल्पकज्ञानात्पूर्वं संबन्धिभूत जातिव्यक्त्योर्ज्ञानाभावात् संबन्धिज्ञानघटितसंनिकर्षरूप सामग्र्यभावात् संबन्धो न भासते, सविकल्पकात् पूर्वं

विशेषणविशेष्ययोः संबन्धिनोर्ज्ञानं निर्विकल्पात्मकं जायते, तस्माद्विशेषणविशेष्ययोः संबन्धस्यावगाहि सविकल्पकं ज्ञानमुदेतीति "सहकारिवैकल्यात्तु निर्विकल्पके समवायाग्रहणम्" इति प्रतिपादयन्ति। उदयनाचार्या निर्विकल्पकज्ञानमतीन्द्रियं सविकल्पकोन्नेयमिति कुसुमाञ्जलौ यद्यपि वदन्ति तथापि निर्विकल्पकसत्त्वे किं प्रमाणमिति विप्रतिपत्तिं प्रदर्श्य न प्रमाणमवतारयन्ति ॥

## ॥ शशधरमिश्रः ॥

गङ्गेशोपाध्यायात् सार्धशतवर्षैर्ज्येष्ठः शशधरमिश्रः निर्विकल्पकवादे "ज्ञानत्वं निष्प्रकारकवृत्ति न वा। यद्वा ज्ञानत्वं निष्प्रकारकत्वसमानाधिकरणं न वा" (पृष्ठ. ४५.१-२) इति विप्रतिपत्तिं प्रदर्श्य निर्विकल्पकसद्भावेऽनुमानं प्रमाणमवतारयति। निर्विकल्पकस्यातीन्द्रियत्वात् प्रत्यक्षं प्रमाणं न भवितुमर्हति। व्यवहारोऽपि न प्रमाणम्, शब्दप्रयोगात्मकव्यवहारं प्रति सविकल्पकज्ञानस्यैव कारणत्वात्। "जागराद्यसविकल्पकं जन्यविशेषणज्ञानजन्यं, जन्यविशिष्टज्ञानत्वात्, दण्डी पुरुष इति ज्ञानवत्" (पृष्ठ. ४५.३.४) इत्यनुमानेन निर्विकल्पकं साधयति। अत्र हेतोः पक्षधर्मताबलाज्जागराद्यज्ञानाव्यवहितपूर्वसमयवर्ति ज्ञानं विशेषणविषयकमप्रकारं सिध्यति। तद्विशेषणज्ञानं यदि सप्रकारकं भवेत् तदेव जगराद्यसविकल्पकं स्यात्, न तु पक्षीकृतं ज्ञानमिति पक्षीकृते ज्ञाने जागराद्य सविकल्पकत्वरूपपक्षतावच्छेदकधर्मो विरुध्येत। अनन्तरकालिको गङ्गेशोपाध्यायस्तु दण्डी पुरुष इति दृष्टान्तस्तु साध्यविकलः, दण्डपुरुषयोरुभयोरपि युगपच्चक्षुःसंनिकर्षे सति दण्डरूपविशेषणज्ञानं विनैव एकसमयावच्छेदेन दण्डीति ज्ञानमुत्पत्तुमर्हति इति मत्वा अनुमितिं दृष्टान्तीकरोति, यथा पर्वतो वह्निमानित्यनुमितिः पक्षसाध्यवैशिष्ट्यविषयिणी वह्न्यात्मकविशेषणज्ञानरूपसाध्यप्रसिद्धिजन्या तथा जागराद्यसविकल्पकमपि जन्यविशेषणज्ञानजन्यमित्यभिप्रेत्य चिन्तामणौ वदति। शशधरः जन्यविशेषणज्ञानं यदि सप्रकारकं भवेत् तदेवाद्यं सविकल्पकं स्यात्, न तु पक्षीकृतम् इति तत्र पक्षतावच्छेदकधर्मविरोधं वदति। गङ्गेशस्तु विशेषणज्ञानं यदि सविकल्पकं तस्य विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वमावश्यकमिति तस्यापि विशेषणज्ञानस्य विशिष्टज्ञानत्वे तस्यापि विशेषणज्ञानजन्यत्वमिति अनवस्था प्रसज्यते इत्यभिधाय प्रथमं विशेषणज्ञानं निर्विकल्पकमेवेत्यभिदधाति।

अत्र पूर्वपक्षी शङ्कते - जागराद्यसविकल्पकं सुषुप्तिप्राक्कालीनसविकल्पकेनैव विशेषणविषयकेन संस्कारद्वारा जायते। व्यवहितस्यापि विशेषणज्ञानस्य संस्कारद्वारा विशिष्टज्ञानजनकत्वं सर्वसंमतमेव, तथा अनुभवः संस्कारद्वारा स्मरणजनकः इति पूर्वोक्तानुमाने जन्यविशेषणज्ञानसाधके सिद्धेन विशेषणविषयकेन सविकल्पकेन सिद्धसाधनम् - इति।

सिद्धान्ती समादधाति - पक्षीकृतं ज्ञानं जागराद्योऽनुभव एव, अनुभवस्याव्यवहितपूर्ववर्तिविशेणज्ञानजन्यत्वनियमात् सुषुप्तिप्राक्कालीनं विशेषणविषयकं सविकल्पकमादाय न सिद्धसाधनम् - इति।

पूर्वपक्षी - यो योऽनुभवः सोऽव्यवहित पूर्ववर्तिविशेषणज्ञानजन्य इति नियमो नास्ति, अनुभवत्वमस्तु अव्यवहितपूर्ववर्तिज्ञान जन्यत्वं मास्तु इत्यप्रयोजकशङ्कायां तद्बाधकतर्कस्याभावात्। किं च जागराद्यज्ञानमनुभव एवेत्यत्र प्रमाणं नास्ति, तत् स्मरणमपि भवितुमर्हति। स्मरणं च सुषुप्तिप्राक्कालीनेन व्यवहितेनापि विशेषणज्ञानेन जन्यते इति किमिति निर्विकल्पककल्पनम्? इति।

सिद्धान्ती - प्रत्यग्रोत्पन्नं यद्विशेषणं तद्विशिष्टघटादिविषयकं सविकल्पकं ज्ञानं पक्षीकृत्य निर्विकल्पकज्ञानं साधयामः । प्रत्यग्रोत्पन्नस्य रूपादेः पूर्वानुभवो वक्तुमशक्यः, येन व्यवहितेन रूपविषयकेण विशेषणज्ञानेन संस्कारद्वारा सिद्धसाधनमाशङ्क्येत - इति ।

पूर्वपक्षी - प्रत्यग्रोत्पन्नं रूपादिकमपि रूपत्वादिना सामान्यलक्षण-प्रत्यासात्त्या पूर्वं ज्ञातमेव । अतः प्रत्यग्रोत्पन्नैतद्रूपविषयकं ज्ञानं सामान्यलक्षणप्रत्यासत्त्या पूर्वं मजातमेव । अतो व्यवहितेन प्रत्यग्रोपन्नरूप - व्यक्ति-विषयकेण सविकल्पकेन विशेषणज्ञानेन संस्कारद्वारा सिद्धसाधनं दुर्वारमेव - इति ।

सिद्धान्ती - व्यवहारस्तावदयं सकलजनसाधारणो यत् ममास्मिन् विषये सविकल्पकं ज्ञानं न संजातम् किंतु निर्विकल्पकमेव इति । तथा च व्यवहारानुरोधेनावश्यं निर्विकल्पकं स्वीकर्तव्यम् - इति । (गङ्गेशोपाध्यायस्तु 'इदं पूर्वं मया संमुग्धतया ज्ञातम्, अधुना तु सम्यग्जानामि' इत्याकारकोऽनुभवो निर्विकल्पके प्रमाणमिति वदति )

पूर्वपक्षी - 'ममास्मिन् विषये निर्विकल्पकं वृत्तम्' इति व्यवहारस्य संमुग्धसविकल्पकगोचारत्वात् निर्विकल्पकस्यातीन्द्रियत्वाङ्गीकाराच्च भवदुक्तव्यवहारो न निर्विकल्पकसाधकः - इति । (गङ्गेशोऽपि' पूर्वं वस्तु परिमितविशेषणविशिष्टत्वेन ज्ञातम्, अधुना तु बहुविशेषणविशिष्टतया जानामि' इत्येव पूर्वोक्तनुभवार्थः । तस्मात् 'पूर्वं मया संमुग्धतया ज्ञातम्' इत्यनुभवेन निष्प्रकारकं ज्ञनं न सिध्यति इति ब्रूते )

सिद्धान्ती - 'ज्ञानत्वं निष्प्रकारकत्वसमानाधिकरणम्, सकलज्ञानवृत्तित्वात्, सत्तावत्' इत्यनुमानेन निर्विकल्पकं ज्ञानं सिध्यति । सत्ता तावत्द्रव्यगुणकर्मवृत्तिः । सत्तायां सकलज्ञानवृत्तित्वरूपहेतुर्वर्तते, निष्प्रकारवस्तुवृत्तित्वरूपसाध्यमप्यस्ति । अतः निष्प्रकारकवस्तुवृत्तित्वरूपसाध्यव्याप्यस्य सकलज्ञानवृत्तित्वरूप-साध्यमप्यस्ति । अतः निष्प्रकारकवस्तुवृत्तित्वरूपसाध्यव्याप्यस्य सकलज्ञानवृत्तित्वरूपहेतोः ज्ञानत्वरूपपक्षे सत्त्वात् निष्प्रकारकं ज्ञानं सिध्यति - इति ।

पूर्वपक्षी - पूर्वोक्तहेतोः सोपाधिकत्वात् व्याप्यत्वासिद्धत्वम् । उपाधिश्च ज्ञानातिरिक्तवृत्तित्वम् । सत्तायां निष्प्रकारकत्वसमानाधिकरणत्वरूपसाध्यमस्ति, ज्ञानातिरिक्तवृत्तित्वरूपोपाधिरप्यस्ति इति साध्यव्यापकः उपाधिः । सकलज्ञानवृत्तित्वरूपहेत्वधिकरणे पक्षे ज्ञानत्वे ज्ञानातिरिक्तवृत्तित्वस्योपाधेरसत्त्वात् उपाधिः साधनाव्यापकः । तस्मात् सोपाधिकत्वात्, 'सकलज्ञानवृत्तित्वमस्तु निष्प्रकारकत्वसमानाधिकरणत्वं मास्तु' इति व्यभिचारशङ्कायां तद्वारकतर्कविरहाच्च पूर्वोक्तानुमानं न निर्विकल्पकज्ञानसाधकम् - इति ।

सिद्धान्ती - 'चक्षुः चाक्षुषसविकल्पकातिरिक्तज्ञानजनकम्, ज्ञानजनकत्वात्, घ्राणवत्' इत्यनुमानेन सविकल्पकात् अतिरिक्तं चाक्षुषं निर्विकल्पकं सिध्यति - इति (गङ्गेशोऽपि शशधरमिश्रोक्तं इदमनुमानं निर्विकल्पकसाधनाय तत्त्वचिन्तामणावुल्लिखति)

पूर्वपक्षी - पूर्वोक्तानुमाने ज्ञानजनकत्वरूपो हेतुः सोपाधिकः । उपाधिश्च अतीन्द्रियतेजोभिन्नत्वम् । घ्राणे चाक्षुष सविकल्पकातिरिक्तज्ञानजनकत्वरूपसाध्यमस्ति, घ्राणेन्द्रियस्य पार्थिवत्त्वात् तस्मिन्नतीन्द्रियतेजो-भिन्नत्वमुपाधिरस्तीति साध्यव्यापकः उपाधिः । ज्ञानजनकत्वरूपहेत्वधिकरणे चक्षुषि पक्षेऽतीन्द्रियतेजो-

भिन्नत्वरूपः उपाधिर्नास्ति, चक्षुषोऽतीन्द्रियतेजस्त्वादिति साधनाव्यापकः उपाधिः । हेतोः सोपाधिकत्वात् पूर्वोक्तमनुमानं न निर्विकल्पकं ज्ञानं साधयितुं क्षमम् - इति।

सिद्धान्ती - जागराद्यसविकल्पकं ज्ञानं स्मरणरूपं वा भवतु, अनुभवरूपं वा भवतु । उभयथापि निर्विकल्पकज्ञानं सिध्यत्येव। यदि जागराद्यसविकल्पकं स्मरणरूपं तज्जनकसंस्कारः आवश्यकः। संस्कारश्चोद्बुद्धः सन्नेव स्मरणं जनयति। उद्बोधकं च ज्ञानमेवेति जागराद्यसविकल्पकस्मरणस्याव्यवहितप्राक्कालिकं निर्विकल्पकं सिद्धम् । यदि जागराद्यसविकल्पकमनुभवस्तदा पूर्वपक्ष्युक्तप्रकारेण सुषुप्तिप्राक्कालीनविशेषणज्ञानस्य संस्कारद्वारा जनकत्वेऽपि सहकारिभूतसंस्कारस्योद्बोधकत्वेन किंचन ज्ञानं वक्तव्यमेव । त च्ज्ञानमवश्यं निर्विकल्पकं वक्तव्यम्। तथा च लाघवादुद्बोधकं तदेव ज्ञानं विशेषणविषयकत्वेन विशिष्टज्ञानजनकमङ्गीक्रियताम्, अलं संस्कारद्वारा व्यवहितज्ञानस्य जनकत्वकल्पनया । किं च विशिष्टविषयकानुभवत्वमव्यहितपूर्ववृविशेषण-ज्ञानजन्यतानियतमिति व्याप्तिरपि संगृहीता भवति।

किं च प्रत्यग्रोत्पन्नविशेषणविशिष्टविषयकं सविकल्पकं पक्षीकृत्य निर्विकल्पकानुमानमपि साधीयः। न च शङ्क्यम् सामान्यलक्षणप्रत्यासाया रूपादिसविकल्पकेनैव सिद्धसाधनमिति । यदि प्रत्यग्रोत्पन्नरूपस्य रूपत्वेन सामान्यलक्षणप्रत्यासत्त्या पूर्वमेव सविकल्पकज्ञानं स्यात् तदा तदधीनतया जायमानं ज्ञानं 'रूपवान् घटः' इत्येव स्यात्, न तु 'एतद्रूपवान्' इति। जायते तु प्रत्यग्रोत्पन्नरूपविषयकं 'एतद्रूपवान् घटः' इति। विशेषणज्ञानं येन रूपेण विशेषणं विषयीकरोति तेनैव रूपेण विशिष्टज्ञाने विशेषणं भासत इति नियमः । एतन्नियमानङ्गीकारे प्रमेयत्वेन रूपज्ञानात् 'रूपवान् घटः' इति प्रतीतिः प्रसज्येत । तस्मात् प्रत्यग्रोत्पन्नविशेषणविशिष्टसविकल्पकात् पूर्वं प्रत्यग्रोत्पन्नैतद्रूपविशेषणविषयकं ज्ञानं निर्विकल्पकमेव वक्तव्यम्॥

न च शङ्कनीयम् विशेषणज्ञानं येन रूपेण विशेषणमुल्लिखति तेनैव रूपेण विशिष्टज्ञाने विशेषणस्य भानमिति नियमात् सविकल्पके प्रत्यग्रोत्पन्नं रूपं एतद्रूपत्वेनैव भासते इति कारणीभूतविशेषणज्ञाने निर्विकल्पकेऽपि एतद्रूपत्वेनैव प्रत्यग्रोत्पन्नरूपस्य भानप्रसङ्गः इति। यदि एतद्रूपविषयकनिर्विकल्पकेऽपि एतद्रूपत्ववैशिष्ट्यं भासेत तदा तद्विशेषणज्ञानं सविकल्पकमेव भवेदिति निर्विकल्पकज्ञानरूपधर्मिग्राहकेण पूर्वोक्तानुमानरूपप्रमाणेन विरोधः स्यादिति।

शशधरः प्राचीननैयायिकवत् निर्विकल्पके संबन्धो न भासते इति मन्यते। चिन्तामणिकारमारभ्य सर्वेऽपि नव्यनैयायिका निर्विकल्पके संबन्धभानमुपयन्ति । निर्विकल्पके संबन्धोऽपि भासते इति "अपरे 'अध्रौव्ये सिद्धसाधनात्' (न्या.कु. ३.२२) इत्यत्रैव भरं कुर्वाणाः समवायादेरपि निर्विकल्पकविषयत्वमाहुः" (पृष्ठ. ४८.१.२) इति केषांचन मतमुपन्यस्यति शशधरः। प्राचीनाः समवायाभावयोः सविकल्पकैकवेद्यत्वमङ्गीकुर्वन्ति, यतः अभावः प्रतियोगिनिरूपणधीननिरूपणः, संबन्धोऽपि संबन्धिनिरूपणाधीननिरूपणः । तस्मात् प्रतियोगिविशिष्टतयैवाभावो भासते, संबन्धोऽपि संबन्धियुक्त एव भासते इति । केचन नैयायिका अभावादेः प्रतियोग्यादिनिरूपणाधीन निरूपणत्वनियमस्यानङ्गीकारेण समावायाभावयोरपि निर्विकल्पकज्ञानविषयत्वं प्रौढयाभ्युपगच्छन्ति। शशधरकाले एव संबन्धोऽपि निर्विकल्पके भासते इति पक्षः उपक्रान्तः। नव्यनैयायिकाः - संबन्धप्रत्यक्षात्पूर्वं संबन्धिप्रत्यक्षं कारणत्वेन नापेक्ष्यते । जातिव्यक्तिसंबन्धेषु त्रिषु

इन्द्रियार्थसंनिकर्षस्याविशिष्टत्वात्, इन्द्रियार्थसंनिकर्षप्रयुक्तं भानं जातिव्यक्त्योरेव, न तु संबन्धस्य इत्यत्र नियामकाभावाच्च, संबन्धोऽपि निर्विकल्पके भासते; परं तु त्रितयं विशकलिततया भासते इति वदन्ति। निर्विकल्पके सविकल्पके च संबन्धभानाङ्गीकारे तयोः को भेद इत्याशङ्क्य परस्परनिरूप्यनिरूपक भावापन्नप्रकारता-संसर्गताविशेष्यताख्यविषयतात्रितयशालित्वं सविकल्पकस्य लक्षणम्, पूर्वोक्तविषयतात्रितयशून्यत्वं वा पूर्वोक्त त्रितयान्यतमविषयताशून्यत्वं वा निर्विकल्पकस्य लक्षणम्। न च साकारज्ञानत्वं सविकल्पकत्वं निराकारज्ञानत्वं निर्विकल्पकत्वं इति लक्षणं कुतो नाश्रीयते इति शङ्कनीयम्। बौद्धस्तावत् सर्वं ज्ञानं साकारं मन्यते। पातञ्जलाः सांख्याः अद्वैतवादिनश्च अन्तःकरणपरिणामात्मिकां वृत्तिं विषयाकारेण साकारामाशेरते। नैयायिकास्तु सर्वं ज्ञानं निराकारं ब्रुवते। ज्ञानानां निराकारत्वे घटज्ञानपटज्ञानादीनां कथं वैलक्षण्यं इत्युत्थितामाशङ्कां उदयनाचार्याः कुसुमाञ्जलौ "अर्थेनैव विशेषो हि निराकारतया धियाम्" (४.४) इति विषयवैलक्षण्येनैव ज्ञानानां वैलक्षण्यम्, न त्वाकारवैलक्षण्येन इति समादधति। घटत्वपटत्वनिर्विकल्पकयोरसंसृष्टविभिन्नतत्तद्वस्तुनिष्ठविषयतानिरूप-कत्वादेव वैलक्षण्यं वक्तव्यम्। न च विषयतानां प्रकारतासंसर्गताविशेष्यतान्यतमरूपत्वात् निर्विकल्पके विशेष्यतात्वादिना विषयतायाः अभाने विषयतानिरूपकत्वमेव निर्विकल्पकस्य न सिध्येत् इति शङ्कनीयम्। निर्विकल्पके पूर्वोक्तविषयतात्रितयविलक्षणा तुरीयविषयता अङ्गीक्रियते। निर्विकल्पकज्ञाने विशकलिततया भासमाने संबन्धिद्वये संबन्धे च परस्परनिरूप्यनिरूपकभावनापन्ना तुरीयविषयता भासते इति तादृशविषयतानिरूपकत्वात् निर्विकल्पकस्य ज्ञानत्वमव्याहतम्॥

# उपाधिविमर्शः

प्रो. यन्. यस्. रामानुजताताचार्यः

अस्मिन् प्रबन्धे उपाधेर्लक्षणम्, उपाधेर्विभागः, उपाधेर्दूषकताबीजं चेत्येतान् त्रीन् विषानधिकृत्य विविधतार्किकमतानुसारेण विमृश्यते।

## उपाधिलक्षणम्

उदयनाचार्यैः न्यायकुसुमाञ्चलौ साधनाव्यापकत्वे सति साध्यसमव्याप्तो धर्म उपाधिरिति लक्षणमुक्तम्। समशब्दं परित्यज्य साधनाव्यापकत्वे सति साध्यव्यापको धर्म उपाधिरिति महाविद्याविडम्बनकर्तृवादीन्द्रादिभिरुक्तम्। मणावुभयमनूदितमन्यच्च। तत्र समशब्दं घटयित्वा लक्षणं वदतामुदयनादीनामयमाशयः उप आधत्त इत्युपाधिः। स्वसमीपस्थे स्वधर्मं य आधत्ते स उपाधिः। यथा जपाकुसुमं स्वगतां रक्ततां स्वसमीपस्थे स्फटिके आधत्त इति तत् उपाधिः। एवमनुमाने उपाधित्वेन अभिमतः पदार्थः स्वगतां साध्यव्याप्तिं हेताववभासयति। उपाधिनिष्ठा व्याप्तिरेव हेतौ चकास्तीति स उपाधिः। तदुक्तं भट्टपादैः -

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा॥ (मी.श्लो.वा.)

सद्धेतवस्तावत् स्वभावत एव व्याप्तिमन्तः। अन्ये तु स्वतो व्याप्तिरहिताः उपाधिप्रयुक्ताम् उपाधिसंनिधानसिद्धां साध्यव्याप्तिमुपजीवन्ति। तादृशहेतुरूपधर्मदर्शनेन व्यापकस्य साध्यस्य धर्मस्यावधारणं नैवेष्टमिति। तदिदं परत्र स्वगतधर्माधायकत्वरूपमुपाधिशब्दप्रवृत्तिनिमित्तम् उपाधेर्व्याप्यत्व एव संगच्छत इति सूचनार्थमेव साध्यव्याप्यत्वस्याप्यवगमकः समशब्दः लक्षणे निवेशितः इति। यद्यपि कुसुमाञ्जलौ -

"तत्रोपाधिस्तु साधनाव्यापकत्वे सति साध्यव्यापकः"

इति समशब्दं विनैव पठितम्। तथापि तदनन्तरवाक्ये -

"तद्धर्मभूता हि व्याप्तिः जपाकुसुमरक्ततेव स्फटिके
साधनाभिमते चकास्तीत्युपाधिरसावुच्यते"

इति व्याप्यत्वस्योपपादनात् समव्याप्तत्वनिवेशः तदभिप्रेत इत्युन्नीयते अत एव समशब्दघटितं लक्षणमुदयनाभिमतमिति सर्वार्थसिद्धौ वेदान्तदेशिकैरनूदितम्।

ननु तर्हि साध्यव्याप्यत्वे सति साधनाव्यापक इत्येवास्तु साध्यव्यापकत्वनिवेशः किमर्थ इति चेत् - उच्यते। व्यापकाभावात् व्याप्याभाव इति रीत्या हि साध्यव्यापक उपाधिः पक्षे व्यावर्तमानः साध्यं व्यावर्तयन् दूषको भवति। तथा च दूषकोपयोगित्वात् लक्षणे साध्यव्यापकत्वस्य निवेश इति। अतश्च उपाधिशब्दप्रवृत्तिनिमित्तानुसारेण साध्यव्याप्यत्वस्य, दूषकत्वानुसारेण साध्यव्यापकत्वस्य च लक्षणे निवेशनमुचितमित्याशयेन साध्यसमव्याप्तत्वमुक्तमिति।

समशब्दं परित्यज्य साध्यव्यापकत्वं लक्षणे निवेशयतां तु अयमाशयः- उपाधिशब्दार्थो यः कोऽप्यस्तु। लक्षणे व्याप्यत्वनिवेशनमनावश्यकम्। साध्याभावसाधकत्वोपयुक्तव्यापकत्वमात्रोपादानस्यैव पर्याप्तत्वादिति।

अथ तत्त्वचिन्तामण्यनुसारेण उपाधिलक्षणानि परामृशामः। उपाधिज्ञानस्य व्यभिचारज्ञानद्वारा व्याप्तिनिश्चयविघटनेनानुमितिप्रतिबन्धकत्वात् अनौपाधिकत्वज्ञानस्य अव्यभिचारज्ञानद्वाराव्याप्तिधीहेतुत्वाच्च उपाधिज्ञानस्य प्रतियोगिज्ञानविधया व्यप्तिनिश्चयोपयोगितया उपाधिलक्षणमादौ निष्कृष्य ज्ञातव्यं भवति।

अत्र केचित् - उपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः। साध्यत्वसाधनत्वे व्यापकत्वव्याप्यत्वे। सोपाधिस्थले वस्तुतस्तयोरभावात् अभिमतपदम्। न च व्यापकत्वं व्याप्तिनिरूपकत्वम्। तथा च व्याप्तौ गृहीतायामुपाधिज्ञानम्, उपाधिज्ञाने च उपाध्यभावरूपानौपाधिकत्वज्ञानात् व्याप्तिग्रह इत्यन्योन्याश्रय इति वाच्यम्। व्यापकत्वं हि न व्याप्तिरूपकत्वम्, अपि तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम्। अव्यापकत्वं च तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वमित्यन्योन्याश्रयाभावात्। न च प्रतियोगित्वं विरोधित्वम्; तच्च सहानवस्थाननियमः स च व्याप्तिरिति पुनरप्यन्योन्याश्रय इति वाच्यम्। प्रकृते प्रतियोगित्वस्य तदधिकरणानधिकरणकत्वरूपत्वात् इति वदन्ति।

साधनावच्छिन्नसाध्यव्यापके पक्षधर्मावच्छिन्नसाध्यव्यापके चोपाधावव्याप्तेः। स श्यामः मित्रातनयत्वात् इत्यत्र शाकपाकजत्वमुपाधिः। अयं च मित्रातनतयत्वरूपसाधनावच्छिन्नश्यामत्वरूपसाध्यव्यापकोऽपि श्यामत्वव्यापको न भवति, श्यामत्ववति घटादावभावात्। एवं वायुः प्रत्यक्षविषयः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षविषयत्वव्यापकमपि उद्भूतरूपवत्त्वं न प्रत्यक्षविषयत्वव्यापकम्, प्रत्यक्षविषये आत्मन्यभावादिति।

अन्ये तु साध्यप्रयोजको धर्म उपाधिरिति वदन्ति। तदपि चिन्त्यम्। दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितम्। तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तत्पक्षोक्तदोषप्रसङ्गात्।

साधनाव्यापकत्वे सति साध्यसमव्याप्तो धर्म उपाधिःइति औदयनमपि लक्षणं विमृश्यम्। विषमव्याप्तोपाधावव्याप्तेः। तथाहि - पार्थिवपरमाणुरूपादयो नित्याः परमाणुविशेषगुणत्वात् आप्यपरमाणुरूपवत् इत्यादौ पृथिवीविशेषगुणत्वाभावस्य विषमव्याप्तस्याप्युपाधित्वस्वीकारात्। यत्र नित्यत्वं तत्र पृथिवीविशेषगुणत्वाभावः जलपरमाण्वादाविति साध्यव्यापकत्वमिव, यत्र पृथिवीविशेषगुणत्वाभावः तत्र नित्यत्वमिति उपाधिव्यापकत्वं साध्ये नास्ति, घटादौ व्यभिचारात्। एवं ध्वंसो विनाशी जन्यत्वात् इत्यत्र भावत्वमुपाधिः। तदपि विषमव्याप्तम्। भावत्वे विनाशित्वव्यापकत्वसत्वे ऽपि विनाशित्वे भावत्वव्यापकत्वविरहात्। आत्मनि व्यभिचारात्। उपाधिव्यापकत्वं साध्ये नास्ति, घटादौ व्यभिचारात्। ननु विषमव्याप्तस्य नोपाधित्वमिति चेत् - तत् किं विषमव्याप्तस्य दूषकताबीजाभावान्नोपाधिशब्दवाच्यत्वम्? अथवा उपाधिपदप्रवृत्तिनिमित्ताभावात्। नाद्यः तस्यापि व्यभिचाराद्युन्नायकत्वात्। न द्वितीयः न हि लोके समव्याप्त एव, अन्यत्र स्वधर्मप्रतिबिम्बजनके एव उपाधिपदप्रयोगः लाभाद्युपाधिना कृतम् इत्यादौ अतादृशे लाभादावुपाधिपदप्रयोगात्। लक्षणया रूढ्या वा तत्र प्रयोगवत्, विषमव्याप्तेऽपि व्यभिचाराद्युन्नायकतया दूषकत्वमात्रेण लक्षणया उपाधिपदप्रयोगसंभवात्। विषमव्याप्तिकस्य दूषकत्व एवास्माकमभिनिवेशः न तु तत्रोपाधिशब्दस्य मुख्यत्वेऽपि।

किं च शास्त्रे न लौकिकव्यवहारार्थमुपाधिव्युत्पादनम्, अपि तु अनुमानदूषणार्थम्। दूषणं च साध्याव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तत्रोपाधिशब्दप्रयोगः। विषमव्याप्तेऽपि साध्यव्यापकत्वमादाय दूषकत्वं समानमिति लक्षणे समपदघटने विषमव्याप्तोपाधावव्याप्तिर्दुरुद्धरा।

अन्ये तु समव्याप्तस्यैवोपाधित्वं मन्यमानाः एवं लक्षणं वदन्ति - यदभावो व्यभिचारविरोधी स उपाधिः। यदभाव इत्यस्य यस्य साध्यव्यापकस्य साधनाव्यापकतया अभावः साधनव्यापकत्वमिति यावत्। एतदपि प्रसञ्जितं बोध्यम्। अन्यथा असंभवात्, उपाधेः साधनाव्यापकत्वात्। एवं च येन प्रसञ्जितेन साधनव्यापकत्वेन हेतुसाध्ययोर्व्यभिचाराभावः आपादयितुं शक्यते स साधनाव्यापकः तत्र हेतावुपाधिरिति फलति। तादृशश्च साध्यसमव्याप्त एव। साध्यसमव्याप्तस्य साध्याभावव्याप्यतया तस्मिन् साधनव्यापकत्वे आपाद्यमाने साधने साध्यव्याप्योपाधिव्याप्यत्वमप्यापादितं भवतीति साध्यव्याप्यस्य सुतरां साध्यव्याप्यत्वमिति तेन व्यभिचाराभावस्य आपादयितुं शक्यत्वात्। विषमव्याप्तस्य तु साध्यव्यापकत्वमेवास्ति, न तु साध्यव्याप्यत्वम्। तथा च साध्यव्यापके तस्मिन् साधनव्यापकत्वे आपादिते साध्यव्यापकव्याप्यत्वमेव साधने आपादितं भवति। तेन च साध्यव्यभिचाराभावः साधने आपादयितुं न शक्यते। तद्व्यापकव्याप्ये तद्व्यभिचारसत्त्वात् व्यभिचाराभावानियमात्। यथा अनित्यत्वव्यापकप्रमेयत्वव्याप्ये गुणत्वे अनित्यत्वव्यभिचारात्। ननु सर्वत्र व्यभिचारिहेतौ समव्याप्तस्योपाधेरभावात् 'व्यभिचारे चावश्यमुपाधिः' इति नियमभङ्गः इति चेन्न। साध्यसाम्र्यादीनां बहूनां साध्यसमव्याप्तानां सुलभत्वात्। अन्ततः साध्यसमव्याप्तस्य साध्यस्यैवोपाधित्वसंभवात्। अभेदेऽपि व्याप्यव्यापकभावानपायात् - इति।

इदं मतमपि न क्षोदक्षमम्। एतन्मते हि हेतोः साध्यव्याप्यव्याप्यत्वमेव साध्याव्यभिचारे तन्त्रम्। न तु साध्यव्यापकव्याप्यत्वमपि, तस्य साध्याव्यभिचारानापादकत्वेन तस्यानुपयोगात्। भवतैव साध्यव्यापकव्याप्ये, साध्यव्यभिचारितायाः प्रदर्शितत्वात्। तथा च साध्यसमव्याप्तस्यैवोपाधित्वमित्येतद् भग्नमिति।

केचित्तु पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिरित्याहुः। तदपि न। साधनावच्छिन्नसाध्यव्यापके उपाधौ अव्याप्तेः। शब्दोऽभिधेयः प्रमेयत्वादित्यत्र सद्धेतौ अश्रावणत्वस्योपाधित्वापत्तेश्च। शब्दधर्मगुणत्वावच्छिन्नाभिधेयत्वं यत्र रूपादौ तत्राश्रावणत्वं व्यापकम् पक्षे प्रमेयत्वरूपसाधनाव्यापकं हि तत्।

अथ साधनावच्छिन्नसाध्यव्यापकत्वे साधनाव्यापक उपाधिः। तेन ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वविशिष्टविनाशित्वव्यापकं भावत्वमुपाधिः, स श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वविशिष्टश्यामत्वव्यापकं शाकपाकजत्वमुपाधिरिति चेन्न। पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तेः। जलं प्रमेयं रसवत्त्वादित्यत्र रसवत्त्वविशिष्टप्रमेयत्वव्यापकस्य पृथिवीत्वस्य उपाधित्वापत्तेश्च।

## सिद्धान्तः

मणिकारा अत्रैवं निष्कर्षं चक्रुः :- केचनोपाधयः शुद्धसाध्यव्यापकाः, केचन पक्षधर्मावच्छिन्नसाध्यव्यापकाः, केचन साधनावच्छिन्नसाध्यव्यापकाः। त्रयाणां साधारणं लक्षणं तावत् पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तत् पर्यवसितं साध्यम्। साध्यप्रसिद्ध्यवच्छेदकधर्मावच्छिन्नत्वं

पर्यवसितत्वमिति यावत्। स च साध्यप्रसिद्ध्यवच्छेदकीभूतो धर्मः क्वचित् साधनम्, क्वचित् द्रव्यत्वादि, क्वचिन्महानसत्वादि। आद्ये ध्वंसो विनाशी जन्यत्वात् इत्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं पक्षान्तर्भावेण जन्यत्वाव्यापकं च भावत्वमुपाधिः। द्वितीये वायुः बहिरिन्द्रियजन्यप्रत्यक्षविषयः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र पक्षधर्मः द्रव्यत्वं साध्यप्रसिद्ध्यवच्छेदकं तदवच्छिन्नबहिरिन्द्रियजन्यप्रत्यक्षविषयत्वव्यापकं प्रत्यक्षस्पर्शाश्रयत्वाव्यापकं च रूपवत्त्वमुपाधिः। तृतीये अयं धूमवान् वह्नेः इत्यादौ महानसत्वं व्यञ्जनवत्त्वं वा तादृशो धर्मः, तदवच्छेदेन धूमस्य प्रसिद्धत्वात्। तथा च महानसत्वावच्छिन्नधूमव्यापकः वह्न्यव्यापकश्च आर्द्रेन्धनसंयोग उपाधिः।

दीधितिकारमुक्तावलीकारादिभिः यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्व-मुपाधित्वमित्युक्तम्। तेषामयमाशयः - मणिकारैः साध्यव्यापकत्वशरीरे साध्य प्रसिद्ध्यवच्छेदकधर्मावच्छिन्न-साध्यव्यापकत्वं निवेशितम्। साधनाव्यापकत्वशरीरेऽपि तद्धर्मावच्छिन्नत्वं निवेशनीयम्। अन्यथा पर्वतो वह्निमान् धूमात् इत्यत्र सद्धेतौ पर्वतीयवह्निरुपाधिः स्यात्। पर्वतत्वात्मकः यः पक्ष धर्मः तद्विशिष्टवह्निव्यापकत्वात् धूमवति महानसे पर्वतीयवह्नेः अभावेन साधनाव्यापकत्वाच्च। धर्मैक्यविवक्षणे तु पर्वतत्वविशिष्टवह्निव्यापकस्य पर्वतीयवह्नेः पर्वतत्वविशिष्टधूमाव्यापकत्वं नास्ति। पर्वतत्वविशिष्टधूमवति पर्वते पर्वतीयवह्नेः सत्त्वात्। अतो नातिव्याप्तिः। परं त्वेवं सत्यपि पर्वतो धूमवान् वह्नेरित्यत्र शुद्धसाध्यव्यापके आर्द्रेन्धनसंयोगे कथं समन्वयः कार्यः इत्याशङ्क्योक्तं मुक्तावल्याम् - व्यभिचारिणि तु उपाध्यधिकरणं यत् साध्याधिकरणं यच्च उपाधिशून्यं साध्यव्यभिचाराधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः संभवतीति। तथा च तत्र महानसायोगोलकान्यतरत्वरूपं धर्ममादाय तदवच्छिन्नसाध्यव्यापकत्वं तदवच्छिन्नसाधनाव्यापकत्वं चोपाधेः संपादनीयम् - इति।

इदमत्रालोचनीयम् - पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिस्थलेऽपि पक्षवृत्तिः साध्यप्रसिद्ध्यवच्छेदकधर्मपद एव ग्राह्यः पक्षधर्मपदेनेति मणिकारहृदयम्। पर्वतत्वं त्वतादृशम्। तस्य साध्यप्रसिद्ध्यनवच्छेदकत्वात्। अतः धर्मैक्यविवक्षणस्य नेदं फलम्। किं तु पर्वतो वह्निमान् धूमादित्यादौ साध्यप्रसिद्ध्यनवच्छेदकमहानसत्वावच्छिन्नवह्निव्यापके धूमाव्यापके च व्यञ्जनत्त्वादावुपाधित्वप्रसङ्गवारणमेव तत्फलं वाच्यम्। तत्तु साधने साध्यव्यभिचारित्वविशेषणेनापि वारयितुं शक्यते। तथा च पर्यवसितसाध्यव्यापकत्वे सति साध्यव्यभिचारिसाधनाव्यापकत्वमुपाधेर्लक्षणमित्युक्तौ दोषाप्रसक्तेः धर्मैक्यविवक्षणमनावश्यकमिति रुचिदत्तमिश्रकृतप्रकाशव्याख्यानात् अवगम्यते।

तर्कचूडामणिकाराः एवं निर्णयन्ति। साधननिष्ठसाध्याव्याप्यत्वानुमापकाव्याप्यत्वप्रतियोगित्वे सति साध्यसमानाधिकरणत्वमुपाधेर्लक्षणम्। इदमपि 'यद्यव्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः' इति मणिग्रन्थलभ्यम्। साधननिष्ठस्य उपाधिव्याप्तिविरहस्य साधननिष्ठसाध्यव्याप्तिविरहे लिङ्गत्वात् नासंभवः। वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात्। आकाशसाध्यकहेतौ घटादेः उपाधित्ववारणाय साध्यसमानाधिकरणत्वविशेषणम्। साध्याव्याप्यत्वं च शुद्धसाध्याव्याप्यत्वम्। तेन विशिष्टसाध्याव्याप्यत्वानुमापका व्याप्यत्वप्रतियोगिनि व्यञ्जनवत्त्वादौ नातिव्याप्तिः। विशिष्टसाध्ये च तस्योपाधित्वमिष्टमेव। अवच्छिन्नसाध्यव्यापकस्थलेऽपि ध्वंसो विनाशी जन्यत्वात् इत्यादौ, वायुः बहिरिन्द्रियजन्यप्रत्यक्षविषयः

प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ च, जन्यत्वं जन्यत्वविशिष्टविनाशित्वाव्याप्यं जन्यत्वविशिष्टविनाशित्वव्यापकाभावत्व- व्यभिचारित्वात्, प्रत्यक्षस्पर्शाश्रयत्वं द्रव्यत्वविशिष्टबहिरिन्द्रियजन्यप्रत्यक्षविषयत्वव्यभिचारि तद्व्यापकरूपवत्त्वव्यभिचारित्वात् इत्यनुमानमिष्यते । अत्र यद्यपि विशिष्टव्यभिचारित्वमेव साध्यम् । तथापि विशेषणाव्यभिचारिणः विशिष्टव्यभिचारित्वस्य विशेष्यव्यभिचारित्वरूपतया विशेष्यव्यभिचार एवानुमानपर्यवसानम् । तदुक्तं मणौ-विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः सिध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति पक्षधर्मताबलात् - इति । इत्थं चावच्छिन्नसाध्यव्यापकोपाधेरपि शुद्धसाध्याव्याप्यत्वानुमापकतायाः सत्त्वान्नाव्याप्तिः - इति ।

मुक्तावल्यां तत्त्वचिन्तामणौ च शुद्धसाध्यव्यापकानां पक्षधर्मावच्छिन्नसाध्यव्यापकानां साधनावच्छिन्नसाध्यव्यापकानां चोपाधीनामुदाहृतत्वात् उपाधेस्त्रैविध्यं प्रतीयते । परं तु तर्कसंग्रहदीपिकायाम् -

''उपाधिश्चतुर्विधः केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्यो यथा आर्द्रेन्धनसंयोगः । द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम् । तृतीयो यथा प्रागभावो विनाशी जन्यत्वात् इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । चतुर्थो यथा प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्''

इत्युक्तम् । अत्र सूक्ष्मेक्षिकया दर्शने प्राचीनग्रन्थोक्तं साधनावच्छिन्नसाध्यव्यापकत्वस्य ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वस्योदाहरणत्वं न युक्तमिति सूच्यते । तत्र जन्यत्वस्य पक्षधर्मत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकप्रभेदेऽन्तर्भावात् । उदासीनपदेन पक्षधर्मसाधनाभ्यां व्यतिरिक्तो धर्मः गृह्यते ।

## उपाधिद्वैविध्यम्

पुनश्च उपाधिः द्विविधः निश्चितोपाधिः संदिग्धोपाधिश्चेति । साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितः व्यभिचारनिश्चयजनकः निश्चितोपाधिः । यथा पर्वतो धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगः । यत्र साध्यव्यापकत्वसंदेहो वा साधनाव्यापकत्वसंदेहो वा तदुभयसंदेहो वा स व्यभिचारसंशयजनकतया संदिग्धोपाधिरित्युच्यते । यथा स श्यामो मित्रातनयत्वादित्यत्र शाकाद्याहारपरिणतिजन्यत्वमिति मण्यादिग्रन्थेषु निरूपितम् ।

## पक्षेतरत्वस्योपाधित्वम्

मणिग्रन्थे पक्षेतरत्वमुपाधिर्भवति न वेति सुदूरं विवेचितम् । तत्रायं निष्कर्षः । बाधोन्नीतपक्षेतरत्वमुपाधिः बाधानुन्नीतपक्षेतरत्वं तु नोपाधिः । अयमाशयः - यत्र पक्षे साध्याभावरूपो बाधो निश्चितः तत्र वह्निरनुष्णः पदार्थत्वात् इत्यादौ पक्षेतरत्वं वह्नीतरत्वम् उपाधिः, साध्यव्यापकत्वनिश्चयात् । यत्र तु पक्षे साध्याभावो न निश्चितः तत्र पक्षेतरत्वं नोपाधिः तथा सति सर्वेष्वप्यनुमानेषु पक्षेतरत्वस्योपाधित्वसंभवेन अनुमितिमात्रोच्छेदापत्त्या उपाधेर्व्यभिचारानुमापकत्वरूपं दूषकत्वमेव भज्येत ।

उक्तं हि मणावेव -

"अत एव बाधानुन्नीतपक्षेतरत्वस्यानुपाधित्वम्,
स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्तकत्वात्"

इति। तत्र स्वव्याघातकत्वेनेत्यस्य उपाधिसामान्यस्य दूषकत्वव्याघातकत्वेनेत्यर्थः। बाधोन्नीतपक्षेतरत्वं नाम बाधेन पक्षे साध्याभावनिश्चयेन उन्नीतं साध्यव्यापकत्वेन निश्चितं पक्षेतरत्वमित्यर्थः। पक्षे साध्याभावसंदेहदशायां साध्यव्यापकत्वेन संदिग्धत्वात् पक्षेतरत्वस्य, संदिग्धोपाधित्वसंभवेऽपि तत् कथायां नोद्भावनीयम्, कथकसंप्रदायानुरोधात् इति मणिकारादयः।

अद्वैतसिद्धिव्याख्यायां लघुचन्द्रिकायां तु वस्तुतस्तु तादृशसंप्रदायः युक्त्यभावात् हेयः। अत एव दीधितावेवोक्तम् - तादृशसंप्रदायमननुरुन्धानस्य शपथनिराकरणीयतापत्तेः इति। ईश्वरवादे च मणावुक्तम्। पक्षेतरत्वादौ विपक्षबाधकतर्काभावान्न साध्यव्यापकतानिश्चय इत्येवानुपाधित्वे बीजम् इति, यत्रोपाधिसाध्ययोः साध्यहेत्वोश्च व्याप्तिग्राहकसाम्यात् नैकत्र व्याप्तिनिश्चयः तत्रैव संदिग्धोपाधित्वम् व्यभिचारसंशयाधायकत्वात्। यत्र तु एकत्र तर्कावतारः तत्र हेतुत्वमुपाधित्वं वा निश्चितम् इति च।

## उपाधेर्दूषकताबीजम्

उपाधिः कया विधया अनुमानं दूषयति इति बहुधा विचारितम्। तस्य तु साक्षादनुमितिं प्रति तत्करणपरामर्शं प्रति वा प्रतिबन्धकत्वविरहात् न हेत्वाभासत्वम्। अपि तु हेत्वाभासभूतसत्प्रतिपक्षोन्नायकतया तादृशव्यभिचारोन्नायकतया वा दूषकत्वं वक्तव्यम्। तत्रोपाधेः साधनाव्यापकतया साधनवत्पक्षावृत्तित्वेन उपाध्यभावः पक्षवृत्तिरित्यायाति। स च उपाध्यभावः साध्यव्यापकाभावरूपः व्याप्यस्य साध्यस्य अभावं साधयन् सत्प्रतिपक्षतया दूषणं भवति पर्वतो धूमाभाववान् आर्द्रेन्धनसंयोगाभावात् इति। परं तु इदं न युज्यते। सत्प्रतिपक्षानुमाने तथा सत्युपाध्युद्भावनं न स्यात्, सत्प्रतिपक्षे सत्प्रतिपक्षान्तरोद्भावनवत्। न हि प्रकृतहेतोः सत्प्रतिपक्षरूपे प्रत्यनुमाने उद्भाविते तस्यापि पुनः सत्प्रतिपक्षान्तरमुद्भाव्यते।

किं च पक्षवृत्तिरपि उपाधिरिष्यते। सत्प्रतिपक्षतया दूषकत्वे तत्र तदनुपपत्तिः। उपाधेः पक्षावृत्तित्व एव उपाध्यभावेन पक्षे साध्याभावः साधयितुं शक्यते। पक्षवृत्तिरुपाधिर्यथा घटोऽनित्यः द्रव्यत्वादित्यत्र कार्यत्वम्, अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वात् इत्यत्र अश्रावणत्वम्। स्वातन्त्र्येण प्रतीयमानत्वं च स्वाश्रयविषयकलौकिकसाक्षात्कारविषयान्यत्वे सति लौकिकसाक्षात्कारविषयत्वम्। त्रसरेणुरात्मा च दृष्टान्तः, व्यभिचारश्च गन्धादौ। शब्दे चास्य साधनाव्यापकत्वम्।

किं चोपाधिः प्रकृतसाध्यव्याप्यत्वेन निश्चितस्य साधनस्य अव्यापकः इति निश्चिते सति कथं साध्याभावग्रहः। न हि अव्यापकतया गृहीतस्य व्यतिरेकात् अव्याप्यतया गृहीतस्य व्यतिरेकग्रहः। किं तु व्यापकतया गृहीतस्य व्यतिरेकग्रहादेव व्याप्यतया गृहीतस्य व्यतिरेकग्रहः संभवति।

नापि व्यभिचारोन्नायकत्वेन दूषकत्वम्। यो यद्व्यापकव्यभिचारी स तद्व्यभिचारी इति व्याप्तिमवलम्ब्य यथा हि साध्यव्यापकोपाधिव्यभिचारितया साधनस्य साध्यव्यभिचारित्वमनुमीयते, तथा

साध्यव्याप्यसाधनव्यभिचारित्वेन उपाधेः अपि साध्यव्यभिचारित्वमप्यनुमीयताम् । यो यद्व्याप्यव्यभिचारी स तद्व्यभिचारीति व्याप्तेः सत्त्वात् । तस्मादुपाधेर्दोषविधया अनुमितिप्रतिबन्धकैत्वं स्वीकृत्य हेत्वाभासान्तरत्वस्वीकार उचित इति पूर्वपक्षः ।

सिद्धान्तस्तु - ग्राह्याभावाद्यवगाहितया प्रतिबन्धकत्वे सत्येव हेत्वाभासत्वम् । अत उपाधेर्हेत्वाभासत्वं दुरुपपादम् । आर्द्रेन्धनवत्त्वादेः तर्कादिना साध्यव्यापकत्वे साधनाव्यापकत्वे च निश्चिते सत्येव तयोः कया विधया दूषकत्वमिति चिन्तनस्य अवकाशः । तस्मात् सत्प्रतिपक्षोत्थापकतया व्यभिचारोन्नायकतया स्वातन्त्र्येण वा उपाधेर्दोषत्वमिति कल्पत्रयेऽपि सर्वथा उपाधेः साध्यव्यापकतानिश्चयः आवश्यकः । तदभावे सत्प्रतिपक्षाद्यनुत्थितेः । तस्मात् साध्यव्यापकत्वसाधनाव्यापकत्वयोर्निश्चयात् व्यभिचारनिश्चयः, तयोः संशयात् व्यभिचारसंशय इति मानसव्यभिचारज्ञानोत्पादनद्वारा अनुमितिप्रतिबन्धेन उपाधेर्दूषकत्वम् । यद्वा साध्यव्यापकोपाध्यभाववद्वृत्तित्वेन हेतुना साध्यव्यभिचारित्वमुपाधेरनुमेयम् । एवं चोपाधिस्थले हेतौ साध्यव्याप्यत्वनिश्चयविरहात् पूर्वोक्तप्रतिबन्ध्योर्नावकाशः । शिष्टं पश्चात् ।

# व्युत्पत्तिवादप्रथमवाक्यार्थविचारः

डा. के. ई. देवनाथन्

"शाब्दवोधे चैकपदार्थे ऽ परपदार्थस्य संसर्गः संसर्गमर्यादया भासत" इति व्युत्पत्तिवादस्य प्रथमवाक्यम्। अस्य वाक्यस्यार्थवर्णने क्लेश आपाततो न दृश्यते। परन्तु व्याख्यातृभिः ग्रन्थस्यास्य तात्पर्यवर्णने महान् प्रयासो विहितः। अस्मिन् निबन्धे प्राचीनव्याख्यातृभिः दर्शितया दिशा तद्वाक्यार्थवर्णनं क्रियते।

प्रथममत्र सामान्यतो वाक्यार्थो लिख्यते। शाब्दबोध इत्यत्र निरूपितत्वं सप्तम्यर्थः। एकपदार्थ इत्यत्र सप्तम्या अनुयोगित्वमर्थः, अपरपदार्थस्येति षष्ठ्या अनुयोगित्वमर्थः। संसर्गमर्यादापदस्य संसर्गस्य मर्यादा यया सेति व्युत्पत्या संसर्गभासकाकाङ्क्षाअर्थः। मर्यादा शब्दस्यावभासार्थकत्वात्। तृतीयायाः प्रयोज्यत्वमर्थः, तस्य भास्धात्वर्थविषयतायामन्वयः। तस्याश्चाख्यातार्थाश्रयत्वे। तस्य प्रथमान्तार्थे संसर्गेऽन्वयः। एवं सामान्यतः पदार्थेषु निर्दिष्टेषु वाक्यार्थ एवं संपद्यते "एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकः संसर्गः शाब्दबोधनिरूपिताकाङ्क्षाप्रयोज्यविषयताश्रय इति। अत्र तु उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्यौत्सर्गिकत्वात् एकपदार्थानुयोगिकापरदार्थप्रतियोगिकसंसर्गत्वावच्छेदेन शाब्दबोधीय-आकाङ्क्षाभास्यसंसर्गत्वाभिन्नविषयत्ववत्त्वं वक्तव्यम्। एवं चोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये लाभात् वृत्तिविषयसंसर्गसामान्य माकाङ्क्षाभास्यमित्यर्थो लभ्यते।

अथवा शाब्दबोधनिरूपितत्वं एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्ग इत्यत्र संसर्गपदार्थैकदेशे संसर्गत्वेऽन्वेति। तथाच शाब्दबोधनिरूपितैकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गताश्रयः आकाङ्क्षाप्रयोज्यविषयताश्रय इति बोधः। अत्र पक्षद्वयेऽपि अकाङ्क्षाप्रयोज्यविषयत्वस्य तादृशसंसर्गत्वाभिन्नत्वं लभ्यते। यथा शान्तो गुणीभवतीत्यत्रोद्देश्यतावच्छेदकस्य शान्तत्वस्य विधेयस्य चगुणि भवनस्य चैक्यं प्रतीयते। तेनोद्देश्यतावच्छेदकविधेययोरैक्यं व्युत्पद्यते। तद्वत् प्रकृतेऽपि एकपदार्थनिष्ठानुयोगिताकापरपदार्थनिष्ठप्रतियोगिताकसंसर्गताया उद्देश्यतावच्छेदिकायाः विधेयस्य चाकाङ्क्षाप्रयोज्यविषयत्वस्य चैक्यं लभ्यते। तथाच सामान्यतः प्राप्तविषयतायाः संसर्गतारूपत्वं व्युत्पत्तिबललभ्यम्। शान्तो गुणी भवतीत्यत्र तु घटो नीलो भवतीत्यत्रेव वाक्यार्थो वर्णनीयः।

अत्र शाब्दबोधनिरूपितत्वस्य विधेयकोटिप्रवेशे एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गः शाब्दबोधनिरूपिताकाङ्क्षाप्रयोज्यसंसर्गत्वाभिन्नविषयाताश्रय इति फलति। तथासति प्रत्यक्षविषयीभूतसंसर्गस्यापि तादृशोद्देश्यतावच्छेदकाक्रान्तत्वात् तत्र शाब्दबोधीयाकाङ्क्षाप्रयोज्यविषयत्वाभावात् अनुपपत्तिः। उद्देश्यतावच्छेदकावच्छेदेन विधेयभानस्य हि प्रायिकत्वं स्वीकृतम्। यदिच "पदार्थ" इत्यनेन पदविशिष्टोऽर्थः स्वीक्रियते, पदवैशिष्ट्यं च स्वनिष्ठवृत्यधीनोपस्थितिविषयत्वसंबन्धेन। विषयत्वं च विशेष्यत्वरूपं, तेन शक्ति भास्ययोः घटत्वघटयोः संबन्धस्य नाकाङ्क्षाभास्यत्वापत्तिः। एवं च प्रत्यक्षादि साधारणत्वाभावात् पदार्थत्वस्य नोद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्यानुपपत्तिरिति वाच्यम्। शाब्दबोध इत्यस्य ग्रन्थस्य व्यर्थत्वापातात्। अतः शाब्दवोधनिरूपितत्व मुद्देश्यकोटावेव निवेशनीयम्। नच तथापि 'एकपदार्थेऽपरपदार्थस्य' इत्युभयत्र पदार्थ

शब्दस्य वृत्या पदजन्योपस्थितिविषयार्थपरत्वस्याग्रेऽवश्यं वाच्यत्वात् शाब्दबोध इत्यस्य वैयर्थ्यं तदवस्थमेवेति वाच्यम्। सिद्धान्ते अस्य ग्रन्थस्य सामान्यकार्यकारणभावपरत्वस्य वक्ष्यमाणत्वात्। स च कार्यकारणभावश्चैवम्-

[1] एकपदार्थनिष्ठविशेष्यतानिरूपितापरपदार्थनिष्ठप्रकारतानिरुपितसंसर्गताशालिशाब्दबोधं प्रति पदसमभिव्याहृतपदज्ञानत्वेन कारणत्वमिति।

न च तावतापि शाब्दबोधपदस्य कथं सार्थक्यमिति शङ्क्यम्। शाब्दबोधीयकार्यकारणभावप्रदर्शनपरत्वात् तस्य। वस्तुतः तत्पदाभावेऽपि विवक्षितार्थः सिद्ध्यत्येव।

ननु शाब्दबोधनिरूपितैकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गताश्रय आकाङ्क्षाप्रयोज्य विषयताश्रय इति बोधस्य स्वीकारे नीलं जलमिति वाक्याधीन बोधस्यासंग्रहः। नच तदिष्टमिति वाच्यम्। योग्यताभ्रमाधीनस्य भ्रमात्मक शाब्दबोधस्य तत्रेष्टत्वात्। तत्रहि निरुक्तसंसर्गस्याप्रसिद्धत्वात् कथं संग्रहः, इति चेत्, सत्यम्, एकपदार्थ इत्यत्र सप्तम्याः विशेष्यत्वमर्थः,अपरपदार्थस्येत्यत्र षष्ठ्याः प्रकारत्वमर्थः, एकपदार्थ निष्ठविशेष्यताया निरूपितत्व सम्बन्धेन षष्ठ्यर्थप्रकारतायामन्वयः। तस्याः प्रकारतायाः संसर्गपदार्थैकदेशे संसर्गत्वेऽन्वयः। तथा च शब्दबोधनिरूपितैकपदार्थनिष्ठविशेष्यतानिरूपितापरपदार्थनिष्ठप्रकारतानिरूपितसंसर्गताविशिष्टः पदसमभिव्याहार प्रयोज्यविशेष्यताश्रय इति बोधः। नच षष्ठ्यर्थप्रकारतायां कथं निरूपितत्वसम्बन्धेन सप्तम्यर्थविशेष्यताया अन्वयो युज्यते, विभक्त्यर्थे विभक्त्यर्थान्तरस्यान्वयानुपपत्तेरिति वाच्यम्, विभक्त्यर्थे विभक्त्यर्थान्तरान्वयस्यादोषात्। नच तथात्वे घटवृत्तित्वं जातिवृत्तित्ववत् इति बोध तात्पर्येण घटे जातौ इति प्रयुज्यताम् इति वाच्यम्। यत्रोभयोः कारकविभक्तित्वं, तत्रैवैतन्नियमात्। प्रकृतेच षष्ठ्याः कारकविभक्तित्वाभावात् दोषाभावः। नच तथासति चैत्रनिष्ठकृतितात्पर्येण प्रयुक्तस्य "चैत्रस्य पचतीति" वाक्यस्य प्रामाण्यापत्तिरिति वाच्यम्, प्रकारतायाः, विशेष्यतायाश्च निरूपितत्वसंबन्धेन संसर्गपदार्थैकदेशे संसर्गतायामेवान्वयात्। तथाच विभक्त्यर्थे विभक्त्यर्थान्तरानन्वयनियमस्य न भङ्गः।

नच तथापि पदार्थः पदार्थेनान्वेति, नतुपदार्थैकदेशेनेति न्यायविरोधः जागर्ति इति वाच्यम्, संसर्गपदार्थैकदेशे संसर्गत्वे पदार्थान्तरस्य भेदसंबन्धेनान्वये दोषाभावात्। "प्रतियोगि पदादन्यत् यदन्यत्" [2] इति प्राचीनश्लोकस्याभेदसम्बन्धेनैकदेशान्वयनिषेधपरतया गदाधरभट्टाचार्यैः व्याख्यानात्।

**एकापरपदार्थान्वय विचारः**

एकपदार्थेऽपरपदार्थस्येत्यत्रैकत्वमपरत्वं च कुत्रान्वयं प्राप्नुत इति विचार्यते। एकपदसमभिव्याहृतापरपदस्यैकभिन्नार्थकत्वम्। नचैकत्वस्य केवलान्वयित्वात् एकभिन्नमेवाप्रसिद्धमिति वाच्यम्, सङ्ख्यारूपस्यैकत्वस्यात्राविवक्षणात्। स्वप्रतियोगिवृत्तित्व, स्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वरूपस्य तस्य निवेशात्। तद्व्यक्तित्वरूपस्यैकत्वस्य निवेशेऽपि एकभिन्नत्वाप्रसिद्धिः भवति - इति - एवमनुगमः कार्यः। तथाहि एकं यत् पदम् तदर्थे, अपरं यत्पदं तदर्थस्य संसर्ग इति यदि अर्थो वर्ण्यते, तदा

1. व्युत्पत्तिवादव्याख्या-सरस्वतीविग्रहं देशिकाचार्यनिर्मिता
2. व्युत्पत्तिवादः - द्वितीयाकारकम्

पदविशिष्टसंसर्ग इत्यायाति, वै. स्वप्रयोज्यविशेष्यताकत्व, स्वभिन्नपदप्रयोज्यप्रकारताकत्वोभयसंबन्धेन। तथाच वृत्तिभास्यसमवायस्य स्वभिन्नपदप्रयोज्यप्रकारताकत्वाभावात् नाकाङ्क्षाभास्यत्वम्।

एवं सति आख्यातार्थकालकृत्योः संसर्गस्याकाङ्क्षाभास्यत्वं न स्यात्। कालसंसर्गस्य आख्यातभिन्न पदप्रयोज्यप्रकारताकत्वाभावात्। नचाख्यातस्थले पदभेदाभावेऽपि वाचकतावच्छेदकभेदसत्त्वात् न दोषः।[1] तथाच किञ्चिद्विशिष्टसंसर्गताशालिशाब्दबोधं प्रति समभिव्याहारज्ञानस्य कारणत्वम्। वैशिष्ट्यं च स्वावच्छिन्नवाचकतानिरूपितवाच्यताश्रयनिष्ठविशेष्यतानिरूपित्व, स्वभिन्नधर्मावच्छिन्नवाचकतानिरूपित - वाच्यतावन्निष्ठप्रकारतानिरूपितत्वोभयसंबन्धेन। एवं चाख्यातस्थले कालकृतिवाचकस्य पदस्यैकत्वेऽपि वाचकतावच्छेदकयोः लट्त्वाख्यातत्वयोः भेदेन सामान्यकार्यकारणभावस्योपपत्तिरिति वाच्यम्, लक्षणास्थले ऽ संग्रहापत्तेः। यदि तत्साधारण्येन स्वावच्छिन्नवाचकता निरूपितवाच्यताश्रयनिष्ठविशेष्यतानिरूपितत्वेति स्थाने स्वावच्छिन्नवाचकत्व, लक्षकत्वान्यतरनिरूपितवाच्यत्वलक्ष्यत्वान्यतराश्रयविशेष्यतानिरूपितत्वेतिरीत्या निवेश्यते, तथापि प्रकृतस्थले आनुपूर्वीभिन्नधर्मस्य वाचकतावच्छेदकत्वानङ्गीकर्तृमते कथं कालकृति वाचकतावच्छेदक भेदइति प्रश्नः संभवत्येव। यदिच कृतिवाचकतायाः श्रूयमाणानुपूर्व्यवच्छिन्नत्वेऽपि कालवाचकत्वं लट्त्वावच्छिन्नमेवेति सिद्धान्त इति न दोष इति शङ्क्यते, तथापि एतादृशकार्यकारणभावस्यैवकारस्थलेऽ नुपपत्तिः। चैत्र एव पचतीत्यत्रैवकारस्यान्यात्यन्ताभावोभयार्थकत्वं स्वीक्रियते। तत्रान्यात्यन्ताभावयोः ससंर्गस्याकाङ्क्षाभास्यत्वं न स्यात्।

नच एकत्वापरत्वयोः पद एवान्वयोऽस्तु, आख्यातस्थलीयसंसर्गस्य संग्रहाभावेऽपि न क्षतिः, प्रकृते उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्याविवक्षणत्। एकपदोपस्थाप्यार्थनिष्ठविशेष्यता निरूपितापरपदार्थनिष्ठ-प्रकारतानिरूपितसंसर्गताश्रयः संसर्ग आकाङ्क्षाभास्य इत्येव विवक्षणात्। आख्यातस्थले एकपदस्यैवार्थयोः संसर्गः कामं भासतामाकाङ्क्षाया। एवमर्थवर्णनेऽपि प्रकृतग्रन्थोद्देश्यस्य प्राभाकरमतखण्डनस्य संभवादिति वाच्यम्, "स च क्वचिदभेदः, क्वचिच्च तदतिरिक्तएवेत्यादि उपरितनग्रन्थस्वारस्यात् अस्यग्रन्थस्याकाङ्क्षाज्ञानशाब्दबोधयोः सामान्यकार्यकारणभावपरत्वस्यैवोचितत्वात्। तथाच उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयो वक्तव्यः। एवं चाख्यातस्थलीयकालकृतिसंसर्गस्यापि संग्राह्यतया तदनुसारेणैकत्वापरत्वयोरन्वयो वक्तव्य इति।

यदिचैकत्वापरत्वयोः पदार्थेऽन्वयः तदाख्यातस्थलेऽनुपपत्यभावेऽपि नीलो घट इत्यत्र शाब्दबोधीय संसर्गस्याभेदस्या संग्रहापत्तिः। तत्र हि पदार्थभेदो नास्ति।

अतः एकत्वापरत्वयोः पदार्थतावच्छेदकान्वयो वक्तव्यः। एकपदार्थतावच्छेदकविशिष्टेऽपरपदार्थ तावच्छेदकविशिष्टस्य संसर्ग इति रीत्यार्थवर्णनं कर्तव्यम्। एवं सति संपन्नो व्रीहिरित्यत्रानुपपत्तिः। तत्र विभक्त्यर्थैकत्वस्य व्रीहिपदार्थैकदेशे व्रीहित्वेऽन्वयात्। व्रीहित्वस्य च स्वरूपतो भासमानत्वात् पदार्थतावच्छेदकस्यैवाभावः। यदि च स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेन व्रीहावेवैकत्वान्वय इत्युच्यते, तदा चैत्रस्य गुरुरित्यत्रानुपपत्तिः। यदि च तत्र षष्ठ्यर्थस्य गुरुत्वेऽन्वयः न स्वीक्रियते, किन्तु गुरावेवेति कथ्यते, तथाऽपि

---

1. अस्मिन् पक्षे एकपदार्थे इत्यस्य एकधर्मविशिष्टपदस्यार्थे इत्यर्थः।

[1]"विषयित्वं जानाति आधेयत्वे प्रमेयत्वं, घटो न भेद इत्यादौ गत्यभावः। विषयित्वं जानातीत्यत्र तु प्रातिपदिकार्थ विभक्त्यर्थयो रेकधर्मावच्छिन्नत्वात् पदार्थतावच्छेदकभेदाभावात् तत्रत्य संसर्गः निरूपितत्वाख्यः ग्रहीतुं नशक्येत। एव मुदाहरणान्तरेऽपि।

व्युत्पत्तिवादव्याख्यातारः केचित् पदार्थतावच्छेदक एव एकत्वापरत्वयोरन्वयं स्वीकुर्वन्ति। स्पष्टं चेदं व्युत्पत्तिवादरामरुद्रयाम्। एवमेकत्वापरत्वयोः पदार्थतावच्छेदकेऽन्वये घटो नास्तीत्पादौ घटत्वस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वय इति सिद्धान्तात् तत्राप्यनुपपत्तिः घटत्वस्य स्वरूपत एव प्रकारत्वात्। तथाच पदार्थतावच्छेदकविशिष्टस्यान्वय इति न संगच्छते।

न च विशेष्यतासम्बन्धेनैकशक्तिमति विशेष्यतासम्बन्धेनापरशक्तिविशिष्टस्यान्वय घटत्वस्य पदार्थत्वेऽपि पदार्थतावच्छेदकविशिष्टत्वाभावात् संसर्गमर्यादया भासत इति ग्रन्थकृद्विवक्षितम् इतिवाच्यम्, ईश्वरेच्छारूपशक्तेरेकत्वात्। तथाचैकापरपदयोर संगतत्वापत्तिः। न च यद्धर्म्यंशे यस्य प्रकारता तस्यैव धर्मिणः तद्धर्मप्रकारकत्वविशिष्टेच्छाविशेष्यत्वमिति प्रथमस्वलक्षणे गदाधरभट्टाचार्योक्तरीत्या निवेशात् नैकापरपदयोरसाङ्गत्यमिति वाच्यम्, तथासति एवकारस्थले ऽ न्यात्यन्ताभावौ एवपदजन्यबोधविषयौ भवतामिति सङ्केताकारस्य स्वीकारात् अन्यात्यन्ताभावयोरेकशक्तिविषयत्वात् परस्परं बोध्यमानस्य संसर्गस्य निरुक्तकार्यकारण भावानन्तर्गतत्वापत्तिरिति व्यतिरेक व्यभिचारापत्तेः। तथाचैकत्वापरत्वयोः कुत्रान्वय इति प्रश्नस्तिष्ठत्येव।

अत्रसिद्धान्तः - एकत्वापरत्वयोः पदार्थत्वेऽन्वयो वक्तव्यः। पदार्थत्वं च पदजन्यबोधविषयत्वनिष्ठ प्रकारता निरुपितेच्छीयविशेष्यता। आख्यातस्थले कृतौ काले च पृथक्शक्तिस्वीकारात्, निरुक्तकार्यकारणभावस्य तत्र गतिः। नीलो घट इत्यत्रापि नीलपदार्थघटपदार्थयोः स्वरूपत एकत्वेऽपि पदवृत्तिग्रहविशेष्यत्वं भिन्नमिति न दोषः। एव कारस्थलेऽपि अन्यात्यन्ताभावयोरर्थयोः परस्परं यः संसर्गः स कार्यतावच्छेदकाक्रान्त एवेति नदोषः[2]। पदजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यताया उभयत्र (अन्यस्मिन्, अत्यन्ताभावे च) सत्वेन तदुभयसंसर्गस्य कार्यतावच्छेदकाक्रान्तत्वात्। न च तत्र शक्तिभेदे हर्यादिपदवत् नानार्थत्वापत्तिः, तथासति एकैकार्थ परित्यागेनापि तदितरस्यार्थस्य शाब्दबोधे भानप्रसङ्ग इति वाच्यम्, "अन्यविषयकं, अत्यन्ताभावविषयकं बोधं जनयतु इत्याकारकस्य सङ्केतस्य स्वीकारे हि तथात्वापत्तिः। अस्माभिस्तु 'अन्यविषयकात्यन्ता- भावविषयकबोधं जनयतु एव पदम्" इत्येव संकेताकारः स्वीकृत इति न दोषः। तथाच "शाब्दबोधे चेतिग्रन्थादेवं कार्यकारणभावो निष्पन्नः।

पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यताविशिष्टसंसर्गताशालिशाब्दबोधं प्रति पदसमभिव्याहृतपदज्ञानं कारणम्। संसर्गतायां पदार्थत्वरूपविशेष्यतावैशिष्ट्यं च स्वाश्रयनिष्ठविशेष्यता निरूपितत्व - स्वभिन्नपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयनिष्ठप्रकारतानिरूपितत्वोभय संबन्धेन। एवं चैवकारस्थले नानुपपत्तिः। नच तथापि "घटाभावाभाव" इत्यत्र प्रथमाभावस्य द्वितीयभावे यः संसर्गः स ग्रहीतुं न शक्येत, पदवृत्तिग्रहविशेष्यत्वस्यैकत्वात् इति वाच्यम्, संसर्गतायां विशेष्यतावैशिष्ट्यं

---

1. सरस्वती विग्रहं देशिकाचार्य कृताव्युत्पत्तिवादव्यख्या
2. कार्यतावच्छेदकं संसर्गत्वं तदाश्रय इत्यर्थः

स्वप्रयोजकपदप्रयोज्योपस्थितीयविशेष्यताप्रयोज्यविशेष्यतानिरूपितत्व, स्वप्रयोजकपदभिन्न पदप्रयोज्योपस्थितीयविशेष्यताप्रयोज्यप्रकारतानिरूपितत्वोभयसंबन्धेन निवेश्यमित्यपि स्वीकारात् । तथाच कार्यतावच्छेदक संबन्धकोटौ पूर्वोक्तोभयसंबन्ध - प्रकृतोभयसम्बन्धान्यतरसंबन्धः निवेशनीयः।

गूढार्थतत्त्वालोककृतस्तु एतामनुपपत्तिं मनसि निधायैव ''संसर्गताविशिष्टसंसर्गत्वम् । वै. स्वतादात्म्य, स्वनिरूपितप्रकारताविशिष्टविशेष्यताकत्वोभयसंबन्धेन । विशेष्यतायां प्रकारतावैशिष्ट्यं स्वप्रयोजकपदभिन्नपदप्रयोज्यत्व, स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपिविषयत्वाप्रयोज्यत्वान्यतर संबन्धेने''ति परिष्कृतवन्तः । तस्मिन् पक्षेऽपि नीलं जलमितिस्थलीययोग्यताभ्रमाधीनशाब्दबोधीयसंसर्गस्य संग्रहः संभवत्येव ।

तथाच शाब्दबोधे चेतिवाक्यस्य सामान्य कार्यकारण भावपरत्वमेव युक्तमिति भाति । अस्य ग्रन्थस्य ग्रन्थारम्भे कथं संगतत्वमिति विचारस्तु विस्तरहेतुरिति विरम्यते ।

प्राचीनदर्शितो मार्गः संश्रितोऽपि मया क्वचित् ।
स्व युक्ति र्योजिता तत्र दोषश्चेत् क्षम्यतां बुधैः ॥

| परामृष्टाः ग्रन्थाः - | | ग्रन्थकर्ता |
|---|---|---|
| 1. व्युत्पत्तिवादः | - | गदाधरभट्टाचार्यः |
| 2. गूढार्थतत्वालोकः | - | धर्मदत्तझा |
| 3. व्युत्पत्तिवादव्याख्या | - | विग्रहं देशिकाचार्यः |

# जयरामभट्टाचार्योक्तगुणत्वजातिसाधकानुमाननिरीक्षणम्

डा.के.इ. गोविन्दन्

सप्तदशशतकस्य मध्यभागे लब्धजन्मा नव्यन्यायग्रन्थपरिष्कर्ता विरचितानेकन्याय - अलंकार - धर्मशास्त्रग्रन्थः श्रीमान् जयरामन्यायपञ्चाननः प्रसिद्धः कश्चित् आसीत्। तेन विरचिते पदार्थमालख्यग्रन्थे न्यायवैशेषिकप्रक्रियाप्रतिपादनपरे गुणनिरूपणे गुणत्वजातिः साध्यते।

तत्र योग्ये रूपादौ 'अयं गुणः' 'अयं गुणः' इत्याकारकानुगतप्रत्यक्षं प्रमाणम्। योग्ये रूपादौ गुणत्वजातौ प्रत्यक्षेण सिद्धायाम् अयोग्यगुणेऽपि गुणत्वं साङ्कर्यपरिहारायावश्यकमिति सिद्ध्यति। अन्यथा रूपत्वं विना गुणत्वं रसादौ, गुणत्वं विना रूपत्वम् अयोग्ये रूपे, योग्ये रूपे च रूपत्वगुणत्वयोरुभयोः समावेश इति सांकर्यं प्रसजेत्। धर्माधर्मादौ चानुमानेनैव गुणत्वजातिः सिध्यतीत्युक्त्वा 'नव्यास्तु' इत्यादिना गुणत्वं नाध्यक्षगम्यमित्यनूद्य तत्प्रसङ्गे 'एतेन' इत्यादिना गुणत्वजातिसाधकमनुमानमनूद्य खण्डितम्।

तच्चानुमानं मुक्तावल्याम् (बालमनोरमा प्रेस, मद्रास, पृष्ठम्, - ६५१) एवं प्रोक्तम् -

> 'द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा
> किंचिद्धर्मावच्छिन्ना निरवच्छिन्नकारणताया असंभवात्'

इति। इदमनुमानं पदार्थमालायामेवम् दूषितम्।

> 'यथाकथंचिद्रूपेण कार्याण्यनुगतीकृत्य तज्जनकत्वानां यथाकथंचिद्रूपेणानुगतानां जनकत्वानां वा अवच्छेदकत्वेन जातिकल्पने रूपान्यस्य विरोधिकार्यस्य जनकताऽवच्छेदकतया रूपान्यवृत्तितादृशजनकतायां वाऽवच्छेदकतया रूपावृत्तित्रयोविंशतिगुणवृत्तिजातेः सिद्ध्यापत्तेः'

इति।

अयं च दूषणप्रकारः तथैव मुक्तावलिव्याख्यात्रा दिनकरभट्टेन मुक्तावलिव्याख्यायामनूदितः (बालमनोरमा प्रेस्-मद्रास्, पृष्ठम् ६५२)।

> 'इदमत्र बोध्यम् - सकलगुणसाधारणी एका कारणता नास्त्येवेति कथं तदवच्छेदकतया गुणत्वजातिसिद्धिः। न च चतुर्विंशतिगुणेषु प्रत्येकं याः कारणताः तासामेव पक्षतायाः तादृशसकल-कारणतावच्छेदकतया गुणत्वजातिसिद्धिरिति वाच्यम्। तथा सति द्रव्यकर्मरूपभिन्नसामान्यवति या कारणता सा किंचिद्धर्मावच्छिन्ना इत्यनुमानेन रूपभिन्नत्रयोविंशतिगुणसाधारणवैजात्यस्यापि सिद्धिप्रसङ्गात्।'

इति ग्रन्थेन।

किं च योग्यरूपादौ प्रत्यक्षेण अयोग्यरूपादौ च सांकर्यभीत्या गुणत्वजातिः सिध्यतीति पदार्थमालाकारेण उक्तं पक्षं दिनकरो (ibid पृ. ६५२)ऽनूद्य खण्डयामास। तथा हि -

'यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणम्। तथाप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासंभवेन तत्साधारण्यं गुणत्वस्य न घटत इत्यनुमानं प्रदर्शितम्। न च रूपत्वादिना सांकर्यभिया अतीन्द्रियरूपादौ गुणत्वसिद्धिः, गुरुत्वादौ च धर्मिग्राहकमानेन तत्सिद्धिरित्यनुमानप्रदर्शनं व्यर्थमिति वाच्यम्। रूपादावप्यापामरसाधारणगुण इति प्रत्यक्षस्यासिद्धेः।'

इति दिनकरीयग्रन्थः।

एतैः सन्दर्भैः मुक्तावलीकारानन्तरकालिकः तत्समकालिको वा पदार्थमालाकारः, तदनन्तरकालिकश्च दिनकरभट्ट इत्यवगम्यते।

किं च गुणपदशक्यतावच्छेदकतया गुणत्वजातिसिद्धिं वदतां दीधितिकृतां मतमप्यनूद्य दूषितम्।

गुणत्वजातौ प्रत्यक्षमपि न प्रमाणम्; नाप्यनुमानं प्रमाणमिति गुणत्वं न जातिः। अपि तु सखण्डोपाधिरेव। द्रव्यकर्मान्यसामान्यवत्त्वमेव गुणत्वमिति अन्तेऽयं पक्षः जयरामेणोक्तः।

# पाश्चात्यदर्शने न्यायरहस्यम्

प्रोफसर - बिमल कृष्ण मतिलाल

यद्यपि खिस्तीयतःप्रथमशताब्दी आरभ्य एव भारतीयदार्शनिकसमाजे भगवदक्षपादप्रणीतन्यायसूत्रोक्ता या परार्थानुमानपद्धतिः पञ्चावयवाक्यत्वेन निबद्धा सैव सर्वत्र सुप्रचलिता आसीत् तथापि ग्रीसदेशीयैर्दार्शनिक-धुरन्धरैररिस्तमहोदयैः सिलोजिजमित्याख्ययाऽनुमानप्रणाल्या सह गौतमीयपद्धतेः कः सम्बन्ध इत्यधिकृत्याधुनिकपण्डितानां विचारः प्रवर्त्तते। अरिस्तमहोदयस्य कालः खिस्तपूर्वचतुर्थशताब्दीति विद्धत्समाजे सुप्रचलितः ; तस्य शिष्येण दिग्विजयिना सम्राजा अलक्जन्दरमहोदयेन भारतभूमिःप्राप्ताऽक्रान्ता च। अतएव ग्रीसदेशवासिभिस्सह भारतीयानां कश्चित् सम्बन्धः स्थापित आसीत्।

अत्रैवं शङ्क्यते। गौतमीयन्यायशास्त्रस्योपरि अरिस्तमहोदयप्रोक्तपाश्चात्यन्यायशास्त्रस्य प्रभावः सम्भवेन्नवा। एतद्विचारमधिकृत्य श्रीविद्याभूषणमहोदयेनैवं समाहितं - 'गौतमीयन्यायशास्त्रमरिस्तमहोदय-प्रोक्तन्यायशास्त्रेण सुतरां प्रभावितमासीदिति'। तत्तु न विचारसहमिति मया प्रबन्धान्तरे विचार्य सिद्धान्तितम्।

यद्यपि पाश्चात्यन्यायशास्त्रस्य प्रभावो गौतमीयन्यायशास्त्रे न प्रवर्त्तते तथापि पाश्चात्यन्यायपद्धतेः भाषान्तरीकरणेन गीर्वाणवाण्यां चेद् रूपान्तरं विरच्यते तदा भारतीयदार्शनिकानां संस्कृतसेविनां च महान् उपकारः स्यादिति विचिन्त्यात्र तत्र भवद्भिः कुलपतिभिः ताताचार्यमहोदयैरादिष्टोस्मि - 'संस्कृतभाषामधिकृत्य पाश्चात्यन्यायपद्धतिर्विचार्यतामिति'। दुष्करमिदम्, तथापि प्रयतिष्ये।

सिलोजिजमित्यस्येदमेकमुदाहरणम् -

'सर्वे मनुष्याः मरणशीलाः (भवन्ति)<br>
सर्वे नैयायिकाः मनुष्याः (भवन्ति)<br>
अतएव सर्वे नैयायिकाः मरणशीलाः (भवन्ति)'

अत्रवाक्यत्रयं दृश्यते तथा च 'सर्वे' पदं 'भवन्ति'पदञ्च वर्जयित्त्वा पदत्रयं वर्त्तते। अत्र प्रथमवाक्यद्वयं 'प्रेमिस्' इत्यनेन ख्यातं, वयं तु तस्य 'प्रदत्तविषय' इत्याख्यां दास्यामः। तृतीयं वाक्यं 'कन्क्लूसन्' इत्यनेन ख्यातं तस्य तु वयं 'साधितविषय' इत्याख्यां दास्यामः। अत्र प्रदत्तविषयवाक्याभ्यां साधितविषयवाक्यं साध्यते। वाक्यस्यापि भागद्वयं वर्त्तते। प्रथमो भागः 'सब्जेक्ट' अर्थात् 'उद्देश्यत्वेन' कथ्यते; द्वितीयो भागश्च 'प्रडिकेट' अर्थात् 'विधेयत्वेन' उच्यते। तत्रापि प्रथम वाक्यस्य यदुद्देश्यपदं तदेव द्वितीयवाक्यस्य विधेयपदं 'मनुष्याः' इति। एतत्पदं तु साधितविषये नावतरति। यदेव प्रथमवाक्यस्य विधेयपदं तदेव साधितविषयवाक्ये विधेयपदम्। एवञ्च यदेव द्वितीयवाक्ये उद्देश्यपदं तदेव साधितविषयवाक्यस्य उद्देश्यपदम्। 'मनुष्याः' इतिपदं साधितविषयवाक्यस्थयोरुद्देश्यपदयोर्मध्ये सम्बन्धं स्थापयतीति सदनुमानमिदम्। 'मनुष्याः' इति पदं 'मध्यमपदत्वेन' गीयते। साधितविषयवाक्ये यद्विधेयपदं तत्रैवानुमानस्य विधेयता। अयञ्चानुमानप्रकारो 'बार्बरा' इत्यनेन ख्यातः।

'सर्वे', 'कतिपयाः' इत्यादि पदान्येतन्मते ध्रुवाणि वर्त्तन्ते इतराण्यध्रुवाणि। अध्रुवाणां पदानां येन तेन प्रकारेण परिवर्त्तनं सम्भवेद् यथा 'मनुष्यपदं वर्जयित्त्वा 'जन्तु' पदनिवेशे, 'नैयायिक' पदं वर्जयित्वा 'मीमांसक' पदनिवेशे, 'मरणशील'पदं वर्जयित्वा तत्र 'प्राणि' पदनिवेशे वाऽनुमानस्य न काचित् क्षतिर्भवतीत्येवैतेषां पदानामध्रुवत्वम्।

अत्र वाक्यत्रये पदपरम्परायाः परिवर्त्तनं न सम्भवेत्। पदपरम्परायाः परिवर्त्तनं चेत् क्रियते तदाऽनुमानं न सम्भवेद् भ्रान्तानुमितिर्वा स्यात्, परं तु तादृशपरिवर्तने कृते ध्रुवपदानां व्यत्यासश्चेत्करणीयः तदानुमितिर्निर्दुष्टा भवितुमर्हति। यथा

'सर्वे मनुष्याः मरणशीलाः
कतिपयाः मनुष्याः कृष्णवर्णाः
कतिपयाः कृष्णवर्णाः मरणशीलाः'

अत्र ' मनुष्याः' इति मध्यमपदं प्राथमिकवाक्यद्वये उद्देश्यत्त्वेनैव गृहीतम्। अत्रेदमवधेयम् - अनुमानस्य साधुत्वे अध्रुवपदार्थानां प्रभावो नास्ति, तत्साधुत्वं ध्रुवपदानां वाक्यस्थपदपरम्पराणां च मात्वंत्म्यादायातम्। अत एवाध्रुवपदस्थले 'क', 'ख', 'ग' इत्यादिसांकेतिकाक्षराणां लेखनं शक्यक्रियं यथा -

''सर्वे काः खाः
सर्वे गाः काः
सर्वे गाः खाः''

न्यायमते तु एतदनुमानस्य वक्ष्यमाणप्रकारेण रूपान्तरकरणं सम्भवति। अयं तावद् गौतमीयः पन्थाः

(प्रतिज्ञा) 'सर्वेनैयायिकाः मरणशीलाः,
(हेतुः) मनुष्यत्वात्,
(उदाहरणम्) यो यो मनुष्यः स स मरणशीलः यथामीमांसकादयः,
(उपनयः) तथा च नैयायिकाः मनुष्याः,
(निगमनम्) तस्मान्नैयायिकाः मरणशीलाः।'

अथवा संक्षेपतः -

'सर्वे नैयायिकाः मरणशीलाः मनुष्यत्वात्' इति वा कथनीयम्।

अत्र मनुष्यत्वमरणशीलत्वयोर्मध्ये व्याप्यव्यापकभावो वर्त्तते। स च सम्बन्धः व्याप्तिशब्देनोच्यते। तत्र मनुष्यत्वं व्याप्यधर्मः मरणशीलत्वं च व्यापकधर्मः सैव व्याप्तिःपाश्चात्यन्याये - 'सर्वे मनुष्याः मरणशीलाः'

इत्यत्र सर्वपदार्थघटकत्वेन वर्तते। तमाश्रित्यानुमानं साध्विति सुधीभिर्विभावनीयम्। पाश्चात्यन्यायेऽधुनातने काले बहुविषयत्वाद् बहुफलत्वाच्च 'सर्वे काः खाः' इत्येतादृशवाक्यस्य 'सर्वेषामेव यदि कत्वं तर्हि खत्वम्' इत्येतादृशं रूपान्तरकरणं दृश्यते इत्यास्तां तावत्।

इदं तु विचारणीयम् । अनुमानस्य विविधाः प्रकाराः वर्त्तन्ते । तत्र केषाञ्चिद्विशेषप्रकाराणां व्याप्यव्यापकभावेनैव गतार्थता सम्भवेन्नवेति संशयो जायेत। यथा वक्ष्यमाणमनुमानं साधुः -

'सर्वे अश्वाः जन्तवः,
अतएव सर्वाणि अश्वशिरांसि जन्तु शिरांसि'।

अत्र प्रथमवाक्यं प्रदत्तविषयत्वेन वर्त्तते द्वितीयवाक्यं साधितविषयत्त्वेन च । गौतमीयमते अस्येदृशं रूपान्तरकरणं शक्यते -

सर्वाण्यश्वशिरांसि जन्तुशिरांसि
जन्तुत्वव्याप्यधर्माश्वत्वाधिकरणवृति शिरस्त्वात्
यत्र यत्र जन्तुत्वव्याप्य धर्माश्वत्वाधिकरण -
वृत्तित्वं तत्र तत्र जन्तु शिरस्त्वं, यथा गोशिरः।'

इदमुदाहरणं पाश्चात्यदेशे 'डिमोर्गन' महोदयेन प्रदत्तम्। अरिस्त महोदयप्रवर्त्तितायां सिलोजिजम्, इति ख्यातानुमानपद्धतावस्य रूपान्तरकरणमतीव दुःशकमित्येव तस्यडिमोर्गनमहाभागस्याशयः । भारतीयन्याय-सम्मतव्याप्यव्यापकभावसम्बन्धेनास्य रूपान्तरकरणं सुशकमिति दिक्।

# द्वितीयाश्रुतिविचारः

*साङ्गस्वाध्यायभास्कर :- सन्निधानं लक्ष्मीनारायमूर्तिः*

वेदवाक्यार्थनिर्णयार्थं प्रवृत्तायां धर्ममीमांसायां तृतीयस्याध्यायस्य शेषलक्षणमिति शास्त्रकृतां व्यवहारः शेषत्वमङ्गत्वमित्यनर्थान्तरम् । तत्र अङ्गत्वलक्षणम्, अङ्गत्वावबोधने सहकारिभूतानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि षट् प्रमाणानि । तेषां विरोधे बलाबलमित्येतत् सपरिकरं शास्त्रकृद्भिः निरूपितमुपलभामहे ।

तत्र ''शेषः परार्थत्वात्'' इति जैमिनिना सूत्रितम् अङ्गत्वलक्षणं-परोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्व मित्येवं परिष्कुर्वन्ति पण्डितप्रकाण्डाः खण्डदेवादयः । इत्थं लक्षितस्य अङ्गत्वस्यावबोधने सहकारिणां षण्णां प्रमाणानां प्रथमा श्रुतिः । निरपेक्षो रवः श्रुतिरिति तल्लक्षणम् । प्रमाणान्तरमनपेक्ष्य विवक्षितार्थस्य साक्षादुपस्थापकः शब्द इत्यर्थः । तमेव च विवृण्वन्ति शास्त्रकृतः अङ्गत्वघटकभूतोद्देश्यता कृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकश्शब्द इति ।

सेयं श्रुतिः विधात्री-अभिधात्री-विनियोक्त्री चेति त्रिविधा । विनियोक्त्री च, समानाभिधानरूपा - एकपदरूपा - विभक्तिरूपा चेति विभाजकधर्मत्रयवती विज्ञायते । तत्र विभक्तिरूपां श्रुतिमधिकृत्य किंचिद्विचार्यते। ''व्रीहिभिर्यजेत'' इत्यत्र प्रत्ययवाच्यायां भावनायां पदश्रुत्या धात्वर्थस्य यागस्य साध्यत्वेनान्वये, तृतीयाविभक्तिश्रुत्यनुरोधेन व्रीहीणां करणत्वेनान्वयात् व्रीहिभिर्यागं भावयेदित्ययमर्थः अस्माद्वाक्यात्प्रसिद्ध्यति । अत्र व्रीहिप्रातिपदिकोत्तरं श्रूयमाणा तृतीया ''कर्तृकरणयोस्तृतीया'' इत्यनुशासनेन करणत्वे शक्तत्वात्, 'साधकतमं करणम्'' इत्यनेन साधकतमार्थकत्वाच्च स्वप्रातिपदिकार्थभूतानां व्रीहीणां यागनिरूपितं साधनत्वापरपर्यायमङ्गत्वं बोधयतीति स्पष्टम् ।

इत्थं द्वितीया श्रुतिरपि अङ्गत्वमवबोधयतीति वदन्तः शास्त्रकाराः तत्र कंचिद्विशेषं दर्शयन्ति । यथा -

1. ''व्रीहीन् प्रोक्षति'' इत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीया श्रुत्या । (न्यायप्रकाशे)
2. अत्र द्वितीया व्रीहीणामुद्देश्यत्वं बोधयन्ती, प्रोक्षणादेरङ्गत्वे हेतुरिति ध्येयम् (सारविवेचिन्याम् ।)
3. ''व्रीहीन् प्रोक्षतीत्यत्र'' द्वितीया श्रुत्या प्रोक्षणस्य व्रीह्यङ्गत्वम् । द्वितीया हि साध्यत्वमवबोधयन्ती परिशेषात् तत्सहकृतप्रोक्षणस्य व्रीह्यङ्गत्वं बोधयति-प्रोक्षणेन व्रीहीन् संपादयेदिति । (तन्त्रसिद्धान्तरत्नावल्याम् )
4. तत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतुः । (भाट्टदीपिकायाम् १-३-४)

5. तत्रेति-तृतीयादिविभक्तिः यत्परास्ति, तदर्थस्य कारकताप्रतिपादनेन अन्याङ्गत्वं बोधयति। द्वितीया तु न स्वप्रकृत्यर्थस्य अन्याङ्गत्वबोधिका। किन्तु स्वप्रकृत्यर्थस्य उद्देश्यताबोधनद्वारा अन्यार्थस्य विधेयतापादनेन करणतातात्पर्येणान्यार्थस्य स्वप्रकृत्यर्थाङ्गत्वबोधिकेति वैषम्येण तस्याः प्रमाणत्वमुपपादयति - उद्देश्यत्वपरा सतीति (प्रभावल्याम्)

## अत्रेदं चिन्तनीयम्

यथा - प्रवर्तनापरो विधिः इष्टसाधनत्वाभावे पुरुषप्रवृत्तेरसंभवात् स्वप्रवर्तकत्वनिर्वाहार्थं स्वविधेये यागादौ इष्टसाधनत्वमाक्षिपति, तद्वत् द्वितीयाश्रुतिरपि स्वप्रातिपदिकार्थस्य उद्देश्यत्वापरपर्यायं प्राधान्यं बोधयन्ती अन्यस्य कस्यचिदुपसर्जनस्याभावे तदसंभवात् स्वप्राधान्यपरिरक्षणाय प्रोक्षणादेः धात्वर्थस्य अङ्गत्वमाक्षिपतीत्युक्तं भवति।

एवं च द्वितीयाश्रुतेः लिङ्गादविशेषप्रसङ्गः। यतो हि - ''बर्हिर्देवसदनं दामि'' इत्यादौ लवनप्रकाशन-सामर्थ्यरूपं लिङ्गं अन्यथा अनुपपन्नं सत्, 'अनेन मन्त्रेण बर्हिर्लवनं कुर्यात्'' इति श्रुतिं कल्पयत् मन्त्रस्य बर्हिर्लवयनाङ्गत्वमवगमयति, तद्वत् द्वितीया श्रुतिरपीति, उभयोरपि अनुपपत्तिप्रतिसन्धानपूर्वकतया अर्थविप्रकर्षे समाने किमपराद्धं लिङ्गेन? येन लिङ्गं दुर्बलं सत् श्रुत्या बाध्येत। अबाध्यत्वे च - बलाबलाधिकरणोक्तस्य श्रुत्या लिङ्गबाधस्य बाधः प्रसज्येत।

अत्र खण्डदेवशंभुभट्टादयो मन्यन्ते - न तावत् द्वितीया मुख्या श्रुतिः या शक्त्यैव विवक्षितमर्थं प्रत्याययति सा मुख्या श्रुतिः। यथा - तृतीया तया च स्वप्रातिपदिकार्थस्यैव करणत्वरूपमङ्गत्वं बोध्यते। द्वितीया तु साध्यत्वमात्रे शक्ता, सा लक्षणां विना ईप्सितत्वाख्यमुद्देश्यत्वं बोधयितुं न शक्नोतीति तस्यां भाक्त एव श्रुतित्वव्यवहारः। एवं विभक्त्यन्तरेष्वपि - यत्र लक्षणया विवक्षितकारकान्तरप्रतिपादनं - तत्र सर्वत्रापि भाक्त एव श्रुतित्वव्यवहारोऽभ्युपगन्तव्यः।

अतश्च ''व्रीहीन् प्रोक्षति'' इत्यादौ न द्वितीया प्रोक्षणस्याङ्गत्वं बोधयति, किन्तु ''यस्य पर्णमयी जुहूः'' इत्यादाविव वाक्यप्रमाणगम्यमेव तस्याङ्गत्वं, वाक्यं च अङ्गाङ्गित्वयोग्यतावतोः पदयोः सहोच्चारणम्। उक्तोदाहरणे च स्पष्ट एव तादृशयोः व्रीहिप्रोक्षणयोः समभिव्याहारः। अनेन वाक्येन व्रीहिप्रोक्षणयोः सामर्थ्यरूपलिङ्गावधारणप्रणाल्या प्रोक्षणेन व्रीहीन् भावयेत् (संस्कुर्यात्) इति श्रुतिकल्पनया प्रोक्षणस्य व्रीह्यङ्गत्वं सिद्ध्यति।

एवमेव ''ऐन्द्र्या गार्हपत्यमुपतिष्ठते'' ''इमामगृभ्णन्.... इत्यश्वाभिधानीमादत्ते'' इत्यादावपि वाक्यकृतो विनियोगोद्रष्टव्यः।

यत्त्वत्र न्यायप्रकाशे - ''एवं - इमामगृभ्णन्नरशनामृतस्येत्यश्वाभिधानीमादत्ते'' इत्यत्राऽपि द्वितीया श्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम्'' इत्युक्त्वा - ''यत्तुवाक्यीयोऽयं विनियोग इति, तन्न। तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यात् अश्वाभिधान्यङ्गत्वं भवति, तावल्लिङ्गात् रशनामात्राङ्गत्वमेव स्यात्, 'स्योनं ते सदनं कृणोमि' इत्यस्येव सदनाङ्गत्वम्'' इत्युक्तम्। तन्न क्षोदक्षमम्। तथाहि - ''अश्वाभिधानीमिति केवलमश्वरशनायाः प्राधान्यमवगमयन्त्यां क्लृप्तायां द्वितीयाश्रुत्यां जाग्रत्यां, मन्त्रलिङ्गेन तद्विरुद्धरशनासामान्य-प्राधान्यबोधकश्रुत्यन्तरकल्पनाया असंभवात्।

अपि च - मनोताधिकरणन्यायेन, ''यद्यप्यन्यदेवत्यः पशुराग्नेय्येवमनोताकार्या'' इत्यस्येव, ''इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते'' इत्यस्यापि ब्राह्मणवाक्यस्य श्रुतितुल्यत्वेन लिङ्गबाधकत्वसंभवात्।

किञ्च - मन्त्रब्राह्मणयोरेकवाक्यताया आवश्यकत्वात्, मन्त्रस्य रशनासामान्यप्रकाशकत्वे, ब्राह्मणस्य च तद्विशेषवाचकत्वे तदसंभवात्, एकवाक्यतासिद्धयर्थं अन्यतरत्र लक्षणायां कर्तव्यायां, मन्त्रगतस्य रशनापदस्य अश्वरशनारूपविशेषलक्षकत्वं, आहोस्वित् ब्राह्मणगतस्य अश्वाभिधानीपदस्य रशनासामान्योपलक्षकत्वमिति सन्देहे ''न विधौ परश्शब्दार्थ'' इति न्यायेन मन्त्रपद एव लक्षणामङ्गीकृत्य, मन्त्रस्य ब्राह्मणानुरोधेन अश्वाभिधानीमात्राङ्गत्वनिर्णयसंभवाच्च।

अनयैव दिशा - ''ऐन्द्र्या गार्हपत्यमुपतिष्ठते'' इत्यत्रापि क्लृप्तायां द्वितीयाश्रुत्यां जाग्रत्यां तद्विरुद्धश्रुतिकल्पना संभवात्, मनोताधिकरणन्यायेन श्रुतिसमेन ब्राह्मणवाक्येन लिङ्गबाधसंभवात्, 'न विधौ परश्शब्दार्थ इति न्यायेन ''गार्हपत्य'' पदे लक्षणायोगाद्वा ऐन्द्रमन्त्रस्य गार्हपत्योपस्थानाङ्गत्वं द्रष्टव्यम्।

अतश्च ''व्रीहीन् प्रोक्षति'' इत्यादिषु प्रोक्षणादेरङ्गत्वेन विनियोगस्य वाक्यीयत्वेऽपि श्रौतत्वव्यवहारः - न तृतीयाद्यङ्गत्वबोधकश्रुतिनिबन्धनः, किन्तु अङ्गित्वबोधकद्वितीयाश्रुतिसद्भावनिबन्धनो भवितुमर्हति।

यद्यपि द्वितीयायाः श्रुतित्वमव्याहतम्। तच्च भाक्तं, मुख्यं वेत्यन्यदेतत्। परन्तु सा स्वप्रातिपदिकार्थस्य उद्देश्यत्वापरपर्यायं अङ्गित्वमेव साक्षात् प्रत्याययति, न तु तस्य तदन्यस्य वा अङ्गत्वम्। तथा च श्रुतिरपि सती द्वितीया, तृतीयादिवत् अङ्गत्वबोधकप्रमाणश्रुतितया परिगणनं नार्हति। न हि श्रुत्या कृत्स्नया अङ्गत्वबोधकप्रामाणभूतया भवितव्यमिति नियमोऽस्ति। विधात्री-अभिधात्र्यादीनां सत्यपि श्रुतित्वे तदभावात्।

अत एव श्रुतिलक्षणात् द्वितीयायाः व्यावृत्तिमभिप्रयन्ति - मीमांसाशास्त्रसारकृदादयः। तद्यथा।

''इयमेव विभक्तिः श्रुतिपदेन व्यपदिश्यते। अङ्गत्वघटकोद्देश्यताकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः - श्रुतिरिति तस्याः लक्षणमामनन्ति। तत्र यद्यपि द्वितीयादिविभक्तिरङ्गित्वमेव गमयति, नाङ्गत्वम्। तथाऽपि द्वितीयादिविभक्तिरपि श्रुतिरिति प्राचीनाः आशेरते। नवीनास्तु - उद्देश्यतातिरिक्तकारकताबोधकं तृतीयादिविभक्तिरेवात्र श्रुतिपदार्थ इति मन्यन्ते इति।

*(मीमांसा शास्त्रसारे, ४४ पृ.)*

उपरितनग्रन्थसंदर्भः सुग्रह एवेति न व्याख्यायते। किं तु अस्मिन्नवसरे श्रीमत्पार्थसारथिमिश्राणां मतमपि नूनं परिशीलनमर्हति। तैस्तावत् - न्यायरत्नमालायां इत्थमभ्यधायि - ''स्यादेतत्। द्वितीयया व्रीहीणां साध्यत्वमात्रमभिधीयते। अवघातसाध्यत्वं तु तत्पदसमभिव्याहारात्मकाद्वाक्यादेव। तत्कथं श्रुत्या अवघातस्य व्रीह्यङ्गत्वमिति? सत्यं यथाऽऽह भवान्। किं तु विनियोगः श्रुत्यैव। संबंधो हि विनियोगः। स च समीहितासमीहितयोः साध्यसाधनभावः। तत्र द्वितीया व्रीहीणां समीहितानां साध्यत्वं प्रतिपादयन्ती प्रतियोगिनः शेषत्वमाक्षिप्य, तद्विशेषमात्रं पदान्तरसमभिव्याहारात्मकाद्वाक्याल्लभते। तृतीयादिरपि साधनत्वं प्रतिपाद्य प्रतियोगिनः शेषित्वमाक्षिप्य तद्विशेषमात्रार्थं वाक्यमपेक्षते। तेनोभयत्राऽपि श्रुतिरेव विनियोगकारणमुच्यते। यत्र पुनः शेषिशेषयोः साध्यसाधनभावो न श्रुतः पदद्वयसमभिव्याहारादेव शेषशेषित्वयोग्यत्वमालोच्य कल्प्यः, यथा -

''स्वर्गकामो यजेते''ति। तत्र वाक्येनैव विनियोग इति। न हि तत्र स्वर्गकामस्य यागस्य वा साध्यत्वं साधनत्वं वा केनचिदुपात्तम्। पदद्वयसयभिव्याहारादेव तु संबंधे कल्पयितव्ये 'असाधकं तु तादर्थ्यात् (६-१-२) इत्यनेव न्यायेन कामिनः प्राधान्यं, यागस्य गुणत्वं कल्प्यते'' इति।

अनेन इदमवगम्यते, यत् - द्वितीयातृतीययोर्द्वयोरपि श्रुतित्वं समानम्। परं तु ''व्रीहीन् प्रोक्षतीत्यत्र द्वितीया व्रीहीणामङ्गत्वं बोधयति। ''व्रीहिभिर्यजेते'' त्यत्र तृतीया व्रीहीणामङ्गत्वमवगमयतीत्येतावान् विशेषः। तथा उभयोरपि प्रतियोगिसापेक्षतया अङ्गिना अङ्ग्याक्षिप्यते, अङ्गेन चाङ्गि। सामान्यरूपेणाक्षिप्तयोः तयोः विशेषसमर्पणं समभिव्याहारात्मकेन वाक्येन क्रियते। यथा-प्रथमवाक्ये प्रोक्षणस्याङ्गत्वं, द्वितीये यागस्याङ्गित्वमिति। एवं च द्वितीया तृतीया च श्रुतिः वाक्यं सहायीकुरुते। न ह्येतावता द्वितीयाश्रुतिस्थले वाक्यीय एव विनियोगो, न श्रौत-इत्युक्तिरयुक्तैव। तुल्यन्यायेन तृतीयास्थलेऽपि तथा वक्तुं शक्यत्वात्। न हि याज्ञे कर्मणि ऋत्विजं सहायीकुर्वतो यजमानस्य यजमानत्वमपयाति, ऋत्विजं वा यजमानत्वमुपयाति।

एवं च - द्वितीयाश्रुतिः प्रोक्षणस्याङ्गत्वं बोधयतीति, द्वितीयाश्रुतिस्थले वाक्यीय एव विनियोग इति च व्यवहारो न साधीयान्। तृतीयाश्रुतिवत् द्वितीयाऽपि श्रुतिः, सा च प्रक्रियाभेदेन विनियोगे प्रमाणं भवतीत्यास्तां तावत्।

ओम् तत् सत्

# प्रामाण्यविमर्श :

प्रो. एन. आर. श्रीनिवासन्

सर्वेषामनुभवसिद्धं यत् कस्मिंश्चित् विषयेऽवगते सति उत्पन्नज्ञाने प्रामाण्यनिश्चयमन्तरा विषये प्रवृत्तिर्न संभवतीति प्रामाण्यनिश्चय : प्रवृत्तिहेतुस्सर्वत्रेति ।

प्रामाण्यं नाम तद्वति तत्प्रकारकत्वं, तच्च किं स्वतो गृह्यते परतो वेति विचारश्चिरादेव तान्त्रिकाणां विवादरङ्गीभूतः । श्रूयते हि श्रीमच्छङ्कराचार्याणां दिग्विजययात्रायां मीमांसकमूर्धन्यमण्डनमिश्रजिगीषया माहिष्मतीं प्राप्तवद्भ्य आचार्येभ्यो जलानयनार्थमागताभिः मण्डनमिश्रदासीभिः निवेदितं तदीयचिह्नम् - यथा

स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धं जानीहि तन्मण्डनपण्डितौकः ॥

इति । अस्मिन् विषये शास्त्रकारा बहुधा विप्रतिपद्यन्ते, तथाहि अप्रामाण्यं स्वतः प्रामाण्यं परत इति बौद्धाः । प्रामाण्यमप्रामाण्यं चोभयं स्वत इति सांख्याः । उभयं परत इति नैयायिकाः । प्रामाण्यं स्वतः, अप्रामाण्यं परत इति मीमांसका वेदान्तिनश्च ।

तत्र बौद्धास्तु - सर्वापलापप्रवृत्ता ज्ञानस्य स्वतः प्रामाण्याङ्गीकारे वस्तुसिद्धिरापद्येतेति भिया ऽ प्रामाण्यं स्वतः, अनभ्यासदशायां प्रमा न वेति पूर्वोत्पन्नज्ञाने संशयोदयात् प्रामाण्यं परत इत्याचक्षते ।

सांख्यास्तु - ज्ञाने पूर्वमविद्यमानं प्रामाण्यं अप्रामाण्यं वा पश्चात् कारणबलादुत्पद्यत इत्यङ्गीकारे असत्कार्यवादस्स्यादिति भिया उभयं स्वाभाविकं, उत्पद्यमानं हि वस्तु स्वसामग्र्या ऽ साधारणधर्म-विशिष्टमेवोत्पद्यते, अतः प्रमाणभूतं ज्ञानं प्रामाण्यविशिष्टमेवोत्पद्यते, अप्रमाणभूतं ज्ञानमपि अप्रामाण्य-विशिष्टमेवेति न तत्र प्रामाण्याप्रामाण्यरूपतत्तद्धर्मोत्पत्त्यर्थं कारणान्तरमन्वेष्टव्यं, एवं ज्ञप्तावपि स्वतस्त्वं, ज्ञानस्य ह्ययं स्वभावः यद्वस्तु यथाऽस्ति तथा तद्गृह्णातीति । अतः प्रमाणभूते ज्ञाने गृह्यमाणे प्रामाण्यविशिष्टमेव गृह्यते, अप्रमाणभूतं चाप्रामाण्यविशिष्टमेव गृह्यत इत्याशेरते ।

नैयायिकास्तु - प्रमा भ्रमश्चेति ज्ञानं द्विविधं, तत्र ज्ञानस्य या सामान्यसामग्री तद्व्यतिरिक्तो गुणो दोषश्च यथाक्रमं प्रमात्वे भ्रमत्वे च हेतुरिति उभयोरुत्पत्तिः परत एव, तथा ज्ञप्तिरपि, सफलप्रवृत्तिहेतुत्वादिनैव तद्ग्रहात्। विस्तरेणायमर्थः 'प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावत्'' इत्यादिग्रन्थेन न्यायकुसुमाञ्जलिग्रन्थे श्रीमदुदयनाचार्यैः प्रतिपादितः । अपि च प्रामाण्यं यदि स्वतो गृह्यते तदाऽनभ्यासदशायामिदं ज्ञानं प्रमा न वेति संशयो न स्यात् अतः प्रामाण्यं परत एव गृह्यत इति प्रतिपादयन्ति ।

मीमांसकास्तु - ज्ञानं यया सामग्र्या जायते तयैव ज्ञानगतप्रामाण्यं च जायत इति ज्ञानजनक-सामग्रीजन्यत्वरूपं उत्पत्तौ स्वतस्त्वं, तथा ज्ञानं यया सामग्र्या गृह्यते तयैव सामग्र्या ज्ञानगतप्रामाण्यं च गृह्यत

इति ज्ञानग्राहकसामग्रीग्राह्यत्वरूपं ज्ञप्तौ स्वतस्त्वं च वर्णयन्ति। तत्र ज्ञानसामग्रीविषये मीमांसकेषु मतभेदः। स च सङ्ग्रहेण प्रतिपाद्यते। भाट्टाः ज्ञानस्यातीन्द्रियतया ऐन्द्रियकघटादिज्ञानं ज्ञानविषयकं न भवतीति आदौ अयं घट इति ज्ञानं जायते। तेन ज्ञानेन घटे ज्ञातताख्यः कश्चित् सविषयको धर्मो जायते। तया ज्ञाततया ज्ञानमनुमीयते। अनुमानप्रयोगश्च घटः घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञातताववत्वात् यन्नैवं तन्नैवमिति वदन्ति।

मुरारिमिश्रास्तु - अयं घट इति व्यवसायात्मकं ज्ञानं जायते। ततो घटत्वेन घटमहं जानामीत्यनुव्यवसायः। तेनानुव्यवसायेन ज्ञाने विषयीक्रियमाणे तद्विशेषणत्वेन प्रामाण्यमपि विषयीक्रियत इत्युपपादयन्ति।

प्राभाकरास्तु - प्रथमत एव घटमहं जानामीत्याकारकं ज्ञानमुत्पद्यते, तदेव व्यवसायात्मकं, तत्र ज्ञाता ज्ञेयं ज्ञानं च त्रितयमवभासते। स एव ज्ञानविषयकग्रहः। तेन च ज्ञाने गृह्यमाणे यथा ज्ञानगतज्ञानत्वरूपधर्मो गृह्यते तथा ज्ञानगतं प्रामाण्यमपि तत्रैव गृह्यत इति प्राहुः।

इत्थं च प्राभाकरपक्षे ज्ञानग्रहः व्यवसायः मिश्रमतेऽनुव्यवसायः भट्टमतेऽनुमितिरिति तेषां (ज्ञानग्रहविषये) मतभेदे सत्यपि ज्ञानं यत्र विषयीक्रियते तत्रैव तद्गतप्रामाण्यमपि गृह्यत इति ज्ञानविषयकग्रहविषयत्वरूपं स्वतस्त्वं निरुक्तमीमांसकमतत्रयसाधारणमित्यवगन्तव्यम्।

एषु चतुर्षु पक्षेषु बौद्धेन यत् अप्रामाण्यं स्वतः प्रामाण्यं परत इत्युच्यते तत् स्ववचनविरुद्धम् - तथा हि निर्विकल्पस्य वासनोपप्लवशून्यस्य स्वत एव प्रामाण्यमभ्युपगच्छन्ति। सविकल्पस्यापि स्वांशे प्रामाण्यं, विषयांशेऽप्रामाण्यं च वदन्ति। तथा च कुत्रचित् प्रामाण्यस्य स्वतस्त्वं तेषामप्यवर्जनीयम्। अपि चाप्रामाण्यस्य स्वाभाविकत्वे भ्रमज्ञानेऽधिष्ठानांशस्यापि भ्रमत्वापत्त्या निरधिष्ठानभ्रमप्रसङ्गः। किं च लौकिकं सर्वमपि ज्ञानं स्वत एवाप्रमाणमित्यवबुद्ध्यमानो भोजनादौ कथं प्रवर्तेत ? कथं प्राणान् धारयिष्यति ? अतोऽप्रामाण्यस्य स्वतस्त्वं सर्वथा न घटते।

सांख्यमते तावत् - प्रामाण्याप्रामाण्ययोरुभयोरपि स्वतस्त्वाङ्गीकारे 'इदं ज्ञानं प्रमाणं' इदं ज्ञानमप्रमाणमिति व्यवस्था न स्यात् इत्यस्वारस्यम्। यत उभयमपि हेतुविशेषं विना साहजिकमिति किं नाभ्युपगच्छन्ति ?

### नैयायिकवादतत्वम्

परिशेषात् नैयायिकोक्तं किंचिदप्रतिषेध्यमिव लक्ष्यते। तथा हि - प्रामाण्यं नाम किमिति निरूप्यैव, तत् ज्ञाने गृह्यमाणे सहैव गृह्यते न वेति वक्तव्यम्। न तावत् यो धर्मी, यश्च धर्मः तदुभयग्राहित्वं प्रामाण्यं, तथा सति इदं रजतमिति भ्रमस्यापि शुक्तिरूपधर्मिरजतत्वरूपधर्मोभयग्राहित्वात् इदं रजतमिति भ्रमात्मकज्ञानमपि प्रमाणं स्यात्। अतस्तद्वति तत्प्रकारकत्वं प्रामाण्यं, तच्च रजतत्वविशिष्टवस्तुविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वमिति निष्कर्षः।

ईदृशं प्रामाण्यं यस्मिन् ज्ञाने ज्ञानं प्रथमतो विषयीक्रियते तत्र न गृह्यते। न्यायमते ज्ञानग्रहः- इदं रजतमहं जानामीत्यनुव्यवसायः। तत्र पुरोवर्तित्वेन रजतविशेष्यकत्वमेव गृह्यते न तु रजतत्वेन रजतत्ववद्विशेष्यकत्वं यतो हि अनुव्यवसाये ज्ञानभानं प्रति इदं रजतमिति व्यवसायस्यैव प्रत्यासत्तित्वम्। व्यवसाये चेदन्त्वेनैव रजतस्य

विशेष्यत्वात् रजतत्वविशिष्टतया रजतस्य विशेष्यत्वाभावात् अनुव्यवसायेन रजतत्वविशिष्टरजतविशेष्यकत्वांशस्य ग्रहणं न संभवति। अतो रजतत्वविशिष्टविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वरूपं प्रामाण्यं न (ज्ञानज्ञाने भास्यम्) स्वतोग्राह्यम्।

अपि च ज्ञाने गृहीते ऽपि इदं प्रमा न वेति प्रामाण्यसंशयो जायते, यदि प्रामाण्यं ज्ञानग्रहकाल एव गृहीतं तथा प्रमा न वेति संशयो न स्यात् प्रामाण्यनिश्चयस्य तत्संशयं प्रति प्रतिबन्धकत्वात्। अतस्तादृशप्रामाण्य-संशयानुरोधेन प्रामाण्यघटकः कश्चिदंशो ऽनुव्यवसाये ज्ञानग्रहे न भासत इति वक्तव्यम्। स चांशः पुरोवर्तिनि रजते रजतत्ववत्वरूप इति केचित्। अपरे तु रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोरवच्छेद्यावच्छेदकभावरूप इति। इत्थं चोपपादितरीत्या अनुव्यवसाये निरुक्तप्रामाण्यस्य ग्रहणासंभवात् संशयान्यथाऽनुपपत्त्या च परत एवानुमानादिना प्रामाण्यं गृह्यत इत्यास्थेयम्।

**अत्रेदं विमृश्यते**

इदं रजतमहं जानामीत्यनुव्यवसाये रजतत्ववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वरूपप्रामाण्ये धर्मिविशेष्यकत्वरजतत्वप्रकारकत्वयोर्भानं तावदविवादम्। अत एव तादृशविशेष्यकत्वावच्छिन्नत्वमपि तत्प्रकारकत्वे गृहीतमेव। किं तु ईदृशविशेष्यता रजतत्व समानाधिकरणा न वेति प्रामाण्यसंशयपर्यवसानं वाच्यं; तथा च प्रामाण्यग्रहणं नाम विशेष्यतायां तत्र रजतत्व सामानाधिकरण्यग्रह एव खलु ! स चास्ति। कथं ? रजतमहं जानामि ज्ञातं मया रजतमित्युभयमेकार्थकम्। तत्र मदीयरजतत्वप्रकारकज्ञानविशेष्यं रजतमित्यर्थके विशेष्यतायां रजतत्वसामानाधिकरण्यं भासत एव, यथा पर्वतो वह्निमानिति सामानाधिकरण्येनानुमितौ वह्निपर्वतत्वयो-स्सामानाधिकरण्यम्। एवंच सर्वत्र तुल्यवित्तिवेद्यता निबन्धनं तद्भानमवर्जनीयम्। अत इदमपि प्रामाण्यं गृहीतमेव। एतत्सूचनार्थमेव प्राचीनाः प्रामाण्यं नाम (अर्थ) विषयतथात्वमिति व्यपदिदिशुः। अतो विषयनिष्ठस्य तस्य कथं ज्ञानगतप्रामाण्यरूपतेति न शङ्क्यम्। प्रामाण्य मगृहीतमिति वदन्तो ऽपि यदन्ततो गत्वा तत्रागृहीतमिति कथयन्ति तत् ज्ञानविशेष्यतासामानाधिकरण्यं ज्ञानप्रकारी भूतरजतत्वादिगतं यत् तदेवेति, तच्च गृहीतमेवेति निरूपयितुमेव विषयतथात्वमित्युच्यते।

इदं तु बोध्यम्। सर्वत्र ज्ञानान्यथाऽनुपपत्त्या वस्तुसिद्धिः। अतो वस्तुग्रहणार्थतया क्लृप्तस्य तस्य वस्तु यथा अस्ति तथात्वेन तद्ग्राहकत्वमौत्सर्गिकम्। अत एवाननुभूतान्यथाभावानां बालानामुपदिश्यमाने सर्वत्र साहजिको विस्रम्भः। अत एव च यावत् परक्षोभो वा चित्तचाञ्चल्यरूपप्रकृत्या स्कन्दनं वा न भवति, तावत् विषयतथात्वावसायेन निष्कम्पा प्रवृत्तिर्निर्विलम्बमेव जायमाना जगत्यनुभूयते। अत उपपादितरीत्या निरुक्तप्रामाण्येऽनुव्यवसायेऽगृहीतांशः कश्चन नास्तीति ज्ञानविषयकज्ञानविषयत्वरूपं स्वतस्त्वं प्रामाण्यस्य निराबाधमेवेति।

एवमपि क्वचित् पीतश्शङ्खः शुक्तिं दृष्ट्वा इदं रजतमित्यादौ पित्तादिदोषेण बाधकेन प्रबलप्रमाणेन प्रामाण्येऽपोदिते दृष्टे तद्वदेव ज्ञानत्वाविशेषात् गृहीतप्रामाण्यकेऽपि अप्रामाण्याशङ्का। प्राप्तगुरूपदिष्टार्थ-विश्वासस्यैव साधोः पश्चात् कुतर्कक्षोभकारिताप्रामाण्यशङ्केव संभाव्यत एवेति नानभ्यासदशायां गृहीतज्ञाने प्रमा न वेति संशयानुपपत्तिः।

किं च परतः प्रामाण्यं गृह्यत इति पक्षे ऽपि परशब्देन ज्ञानविषयकज्ञानान्तरस्य, अर्थक्रियाविषयकज्ञानस्य अनुमानादेरन्यस्य वा विवक्षायां तेषामपि स्वस्मिन् प्रामाण्यानवधारणे पूर्वज्ञाने प्रामाण्यं कथं ज्ञातुं शक्येत ? अतस्तेषां प्रामाण्यं ज्ञानान्तरेणेति चेत् तेषामपि तथेत्यनवस्था। यदि अनवस्थापरिहाराय रजतमहं जानामीत्यनुव्यवसायानन्तरमुत्पन्नायाः तद्विषयिण्या अनुमितेः केवलं प्रामाण्यं स्वतो गृह्यत इति चेत् तर्हि किमिति प्रथमत एव रतजमहं जानामीत्यनुव्यवसाये प्रामाण्यं न गृह्यत इत्याग्रहः। तत्रापि तेनैवानुव्यवसायेन तद्गतप्रामाण्यमपि गृह्यताम्।

यदुक्तम् प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वे सति तद्विशेषत्वात् इति । तत्र किमीश्वरप्रमितिः पक्षकोटावन्तर्भूता न वा ? यदि पक्षकोटौ निविष्टा तदा कार्यत्वे सतीति हेतुविशेषणमसिद्धम्, ईश्वरप्रमितेर्नित्यत्वात्। यदि पक्षकोटौ न निवेशस्तदा कार्यत्वे सतीति विशेषणं व्यर्थं, व्यवच्छेद्याभावात्। अतश्चेदमनुमानं न साधीयः।

अत्रायमस्माकं प्रतिभाति - गृहीतेऽपि प्रामाण्येऽनभ्यासदशायां प्रमा न वेति संशयस्य सोपपत्ति समर्थितत्वात्, रजतमहं जानामीत्यनुव्यवसाये रजतत्ववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वरूप-प्रामाण्यभानस्य निरूपितत्वात् परतः प्रामाण्यवादिनां पक्षेऽपि किञ्चिद्दूरं गत्वाऽपि अनवस्था परिहाराय अनुमित्यादौ प्रामाण्यस्य स्वतो ग्राह्यत्वावश्यंभावितया, तत्पक्षे ईश्वरज्ञानस्य नित्यत्वेन तद्गतप्रामाण्यस्य स्वतो ग्राह्यत्वस्वीकारात्, सर्वेष्वपि ज्ञानेषु किञ्चिदंशे प्रामाण्यस्य सत्वात् अप्रामाण्यस्यैव क्वाचित्कत्वात् तदेव किंशुकाद्यौपाधिकारुण्यवत् सहेतुकं, प्रामाण्यमेव निर्हेतुकमिति स्थितेश्च प्रामाण्यस्य स्वतोग्राह्यत्वमेव युक्तमिति।

# वाक्यस्य प्रकरणाद्बलीयस्त्वविचारः

डा. यन्. वीळिनाथन्

षट्सु विनियोजकश्रुत्यादि प्रमाणेषु मध्ये वाक्यं तृतीयं विनियोजकं, प्रमाणं लक्षणोदाहरणाभ्यां सप्रपञ्चं निरूप्य तस्य उत्तरप्रमाणेभ्यः प्राबल्यं बलाबलाधिकरणसिद्धं निरुपयितुं आरभते ग्रन्थकारः श्रीमदापदेवः तदिदं वाक्यं प्रकरणाद्बलीयः इत्यादिना। उभयाकाङ्क्षा प्रकरणं इति वक्ष्यमाणत्वात् आकांङ्क्षारूपं प्रकरणम् नहि आकङ्क्षा स्वयं प्रमाणं भवितुमर्हति। किन्तु साकङ्क्षं वाक्यं प्रकरणात्मकं पश्यतां भवत्येतादृशी मतिः। नूनमिदं वाक्यं केनचिद्वाक्येन एकवाक्यभूतमिति।अत एव प्रधानवाक्यं कथम्भावाकाङ्क्षं सत् तत्प्रकरणगतेन प्रयाजादिवाक्येन वाक्यैकवाक्यतामापन्नं निराकाङ्क्षं भवति।

किंच अङ्गत्वस्य प्रवर्तनात्मकविध्येकबोध्यत्वात् आकाङ्क्षायाः अशब्दरूपायां, शब्दरूपेण प्रधानविधिना अन्वयो न स्यात्। अतः अकाङ्क्षाया एकवाक्यातायामेव, प्रमाणत्वात् सा एकवाक्यता प्रथमं कल्पयितव्या। प्रयाजादिभिः उपकृत्य दर्शपूर्णमासाभ्यां, स्वर्गं भावयेदिति तदनन्तरं सामर्थ्यकल्पनम्। ततः पश्चात् अङ्गताबोधकतृतीयाद्वितीयारूपसुब्विभक्तिकल्पनम्। एवं प्रकरणात् यावद्विनियोगो ज्ञायते तावत् वाक्येन लिङ्गश्रुती कल्पयित्वा विनियोगो ज्ञायते। एवं एकक्षणधिकव्यवधानात् प्रकरणात् तद्रहितं वाक्यं विनियोजकं भवतीति निश्रेणिकारोहणन्यायेन आकाङ्क्षाशान्ते : आकाङ्क्षारूपस्य श्रुतिकल्पकस्याभावात् प्रकरणं वाक्यविरोधे पराजितं स्वयमेव निवर्तते। इदमेव प्रकरणाद्वाक्यस्य बलीयस्त्वे हेतुः। अथेदानीं वाक्यप्रकरणयोः विरोधे वाक्यस्य प्राबल्ये प्रकरणस्य दौर्बल्ये च श्रोतमुदाहरणं किमिति चेत् उच्यते। दर्शपूर्णमासाख्या प्रकृतीष्टिप्रकरणे सूक्तवाकपदाभिधेयः कश्चिदनुवाकः श्रूयते।

'इदं द्यावा पृथिवी भद्रमभूत्। इति तस्यानुवाकस्यारम्भः। 'नमोदेवभ्य' इत्यन्तः। अनेन च सूक्तवाक्यानुवाकेन पूर्वं इष्टाः देवताः स्मार्यन्ते। सुष्ठु उक्तं वक्तीति सूक्तवाक इति चान्वर्थनाम। 'अग्निरिदगूँ हविरजुषत, अवीवृधत महोज्यायोऽकृत' इत्यनेन भागेन अग्निदेवता प्रधानदेवता यागीया स्मार्यते। एवं तस्मिन्नेव सूक्तानुवाके 'इन्द्राग्नी इदगूँ हविरजुषेतां अवीवृधेतां महोज्यायोऽक्रातम्। इति भागेन इन्द्राग्नी देवता स्मार्यते। तत्र असोमयाजिनः सान्नाय्याभावात् तत्स्थाने ऐन्द्राग्नोयागः विहितः। एवं च दर्शेष्टौ आग्नेयः पुरोडाशः ऐन्द्राग्नः पुरोडाशः इति द्वे एव प्रधानभूते। अयंच इन्द्राग्नीस्मारको भागः लिङ्गात्दर्शेष्टावेव विनियोक्तव्यः न तु पौर्णमासीष्टौ। तत्राग्नेयोपांशुयाजाग्नीषोमीयानामेव त्रयाणां प्रधानानां सत्त्वात् सान्नाय्यस्याभावेन स्वस्थाने विहितस्य ऐन्द्राग्नयागस्याभावात्। इन्द्राग्नी पदसमभिव्याहृतानां इदगूँ हविरित्यादीनां दर्शपूर्णमासेष्टि प्रकरणे पाठात् प्रकरणात् दर्शपूर्णमासोभयाङ्गत्वे प्राप्ते इन्द्राग्नीपदसमभिव्याहाररूपेण वाक्येन प्रबलेन विनियोजकेन प्रमाणेन दर्शेष्टिमात्राङ्गत्वं न तु प्रकरणात् दुर्बलात् वाक्येन बाधितात् पूर्णमासेष्ट्यङ्गत्वमपि। यद्यपि प्रकरणं साध्यायाः क्रियाया एव विनियोजकं न तु सिद्धस्य द्रव्यरूपस्य मन्त्रस्य। यतः कर्तव्यताम्नाः प्रकारविशेषः कर्तव्य एव स्यात् इत्यस्ति जैमिनीयसिद्धान्तः। अथापि उभयाकाङ्क्षालक्षणस्य मुख्यस्य प्रकरणस्य वाक्यविरोधे नेदमुदाहरणं ग्रन्थकारस्याभिमतम्। अपितु अधिकाराख्यं प्रकरणमभिप्रेत्य वाक्यविरोधे प्रकरणं दुर्बलमिति उदाहृतम्।

स्थितोदाहरणं त्वेवं वक्तव्यम्। 'संस्थाप्य पौर्णमासीं वैमृधं अनुनिर्वपति' इत्यत्र वैमृधस्य यागस्य उभयाकाङ्क्षालक्षणत्वकरणात् दर्शपूर्णमासोभयाङ्गत्वे प्राप्ते तद्बाधित्वा पौर्णमासीमिति द्वितीयान्तपदसमभि-व्याहररूपवाक्यात् प्रकरणात् बलवतः पौर्णमासीमात्राङ्गत्वं वैमृधस्य न तु दर्शेष्ट्यङ्गत्वमपि इति वेदितव्यम्। अथ अवसरप्राप्तं प्रकरणस्य विनियोजकत्वमारभ्यते । मीमांसकमते प्रकरणं नाम उभयाकाङ्क्षारूपम् । अङ्गप्रधानोभयगतपरस्पराकाङ्क्षारूपमिति यावत्। न त्वन्यत्रेव सन्दर्भापरपर्यायम्। प्रकृतीष्टौ समिधो यजतीत्यादयः पञ्च प्रयाजा विधीयन्ते। अत्र यद्यपि यजतीतिपदं वर्तमानार्थकलट्स्थानिकतिङन्तमिति प्रतीयते। अथापि छन्दसि विधीयमान लेट्स्थानिकतिङन्तम्। लेटः लिङ्वत् विध्यर्थकत्वात् अत्र समिन्नामकः कश्चन यागः अप्राप्तः विधीयते। अप्राप्तार्थकत्वे वाक्यस्य लट्श्रुतौ लेट्परः इतिन्यायात्। एवं च विधीयमानः समिद्यागः फलमपेक्षते किं भावयेदिति। विधिर्हि प्रवर्तनात्मकः।

प्रवर्तना च प्रवृत्त्यनुकूलव्यापाररूपः। स च पुरुषस्य प्रवृत्तौ सत्यां सम्भवति। प्रवृत्तिश्च चेतनपुरुषनिष्ठा। चेतनाश्च तदिच्छाविषयीभूतं फलं विना न प्रवर्तते। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति हि प्रसिद्धम्। अतः विधिविषयीभूतो यागादिः क्लेशरूपः विधेयत्वान्यथानुपपत्त्या इष्टविशेषमपेक्षते। एवं च विधेयस्य समिद्यागस्य समिद्यागेन किं भावयेत् इति अस्ति उपकार्यविषयिणी आकङ्क्षा। दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः इति प्रधानवाक्यविधेयस्य इष्टियागस्यापि अनया इष्ट्या स्वर्गात्मकं फलं कथं भावयेयमित्यस्ति उपकारकाकाङ्क्षा। एवंच प्रयाजादीनां उपकार्याकाङ्क्षासत्त्वात् प्रधानस्य च कथमिति उपकारकाकाङ्क्षासत्त्वात् तयोरुभयोः दर्शेष्टि प्रयाजयोः परस्परं सम्बन्धो भवति। एवं मिथः सम्बन्धाश्रयणेऽपि प्रधानस्य प्रयाजा उपकारका इति उपकारकाकङ्क्षा निवर्तते। प्रयाजस्य च इष्टेरुपकारं भावयेत् इत्यर्थलाभात् प्रधोनोपकाररूपफलसम्बन्धेन उपकार्याकाङ्क्षा निवर्तते। तथा च मिथस्सम्बन्धरूपेण परस्पराकाङ्क्षाधीनेंन विनियोजकप्रमाणेन दर्शेष्टिरङ्गिभूता। प्रयाजादयोऽङ्गभूता इत्यङ्गाङ्गिभावो निर्णीयते। एतादृशाकाङ्क्षाधीनपरस्परसम्बन्ध एव लोके नष्टाश्वदग्धरथन्यायः इति व्यवह्रियते। उभौ रथिकौ अश्वरथमारुह्य रणभूमिं गतवन्तौ। समराङ्गणे कस्यचन अश्वः बाणाहतः कुत्र चित्पलायितोनष्टः। रथमात्रमवशिष्यते। अन्यस्य रथिकस्य तु अग्निज्वालया रथो दग्धः। वाहकः अश्वः परमवशिष्यते। नष्टाश्व एकः दग्धरथः अन्यः। एवमुभावपि स्वकीयस्थलजिगमिषया एकस्याश्वं विद्यमानमन्यस्यादग्धे रथे संयोज्योभावपि स्वग्रामं सुखेनागतौ। अत्र नष्टाश्वस्य रथापेक्षा दग्धरथस्याश्वापेक्षा। उभयोस्सम्बन्धेन परस्पराकाङ्क्षा यथानिवर्तते तथा प्रयाजेष्ट्यो र्मिथःस्सम्बन्धेनोभयोराकाङ्क्षा निवर्तते। अयमेव प्रकरण प्रमाणको विनियोगः इत्युच्यते। शास्त्रकारा अप्यन्ये एवं मिथस्सम्बन्धमभ्युपगच्छन्ति।

सांख्यदर्शनप्रवर्तककपिलमुन्यनुयायिनः एतमेव मिथस्सम्बन्धं अन्धपङ्गुन्यायपदेन व्यवहरन्ति। संख्यमते प्रकृतिः कर्त्री जडा प्रपञ्चं सर्वं जनयति। पुरुषस्तु भोक्ता केवलं चेतनः न तु कर्ता इत्यभ्युपगमः। कथं चैतन्यं विना कर्तृत्वं स्यात्प्रकृतेः। ततः प्रकृतेः कर्तृत्वसिद्ध्यर्थं जडाया अस्ति चैतन्यापेक्षा। कथं वा अकर्तुः पुरुषस्य चेतनस्यापि भोक्तृत्वं स्यात्। कर्ता हि भोक्ता भवितुमर्हति। तेनास्ति पुरुषस्य भोक्तुः कर्तृत्वापेक्षा। अनयोःसाकाङ्क्ष्योः प्रकृति पुरुषयोर्मिथस्सम्बन्धेन परस्पराकङ्क्षा निवर्तते। यथा अन्धस्य पादाभ्यां पङ्गोश्चक्षुर्भ्यं च उभयोरपेक्षिता दर्शनशक्तिर्गमनशक्तिश्च मिथस्यम्बन्धेन निवर्तते तद्वत्। एवं नष्टाश्वदग्धरथन्यायेन वा अन्धपङ्गुन्यायेन वा इष्टिप्रयाजयोर्मिथस्सम्बन्धेन परस्पराकाङ्क्षानिवृत्त्या विनियोगश्चतुर्थप्रकरणप्रमाणाधीन इत्येतत् भगवता जैमिनिना

तृतीयाध्यायस्य तृतीये पादे प्रकरणाधिकरणे निर्णीतम्।एतात्सिद्धान्तस्योपरि भवति काचन आशङ्का। एवं मिथः सम्बन्धे प्रकरण प्रमाणेन स्वीक्रियमाणे प्रयाजादेरन्यं प्रति अङ्गभावः किल प्रान्नोति। इष्टिवत् स्वतन्त्रकर्मत्वे सम्भवति किमिति अन्याङ्गत्वकल्पना क्रियते। अस्य च जैमिनीयैस्सिद्धान्तिः स्वतन्त्रपदार्थत्वेन प्राधान्यकल्पको न्यायः विश्वजिन्न्यायः तदपवादभूतः आनेयसंगतः रात्रिसत्रन्यायो वा। अन्यतरेणानेन न्यायेन स्वतन्त्रपदार्थत्वेन प्राधान्यं भजतां प्रयाजादिः किमिति प्रकरणात् अङ्गभावमश्नुते इति चेत् उच्यते। अत्र कोऽयं विश्वजिन्न्यायः रात्रिसत्रन्यायोवा।

अतः तयोः स्वरूपं प्रथमतः स्पष्टीक्रियते। अस्तीदं श्रौतं वाक्यं विश्वजिता यजेतेति। अत्र विधिश्रुत्या प्रवर्तनात्व सिध्यर्थं पूर्वोक्तरीत्या विधेयस्य यागस्य फलं किञ्चिदवश्यमन्वेषणीयम्। तच्च फलं स्वर्गरुपं सर्वैरभिलषितं शास्त्रस्य महाविषयत्वसिध्यर्थं कल्प्यते। स्वर्गो नाम दुःखासंमिश्रं निरन्तरं सुखम्। तथा च श्रुतिवाक्यं स्वर्गलक्षणपरं 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं यत् तत्सुखं स्वः पदास्पदम्' इति। पुत्रपश्वादीनां फलानां तु सर्वाभिलषितत्वं नास्ति। पुत्रवता पुत्रो नापेक्ष्यते। बहुपशुमता पशुर्नापेक्ष्यते। पूर्वोक्तलक्षणलक्षितः स्वर्गस्तु सर्वैरपेक्ष्यते मुमुक्षुणाप्यपेक्ष्यते। अतः विश्वजिद्यागस्य अपेक्षितं फलं सर्वाभिलषितं स्वर्गरूपं कल्प्यते। तथा च जैमिनीयं सूत्रम् 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इति। रात्रिसत्रन्यायस्वरूपस्तु एवम् - 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति श्रुते रात्रिसत्राख्ये यागे ज्योतिः गौः आयुरिति त्र्यहाणां विधायके फलाकाङ्क्षायां लाघवात् अध्याहारापेक्षया अनुपस्थितस्वर्गफलोपस्थितिकल्पनागौरवाच्च अर्थवादोपस्थितं प्रतिष्ठाख्यं फलमेव वर्तमाननिर्दिष्टमपि प्रतितिष्ठा सन्ति प्रतिस्थास्यन्ति इति वा सन्नन्ततया भविष्यदर्थकतया विपरिणामं अभ्युपगम्य ज्योतिरादित्र्यहाणां रात्रिसत्राख्यानां प्रतिष्ठाख्यं फलमेव परिकल्प्यते। अयं च रात्रिसत्रन्यायः लाधवमूलकः गौरवग्रस्तविश्वजिन्न्यायस्य अपवादभूतः जैमिनिना सूत्रकारेण प्रकटीकृतः 'फलमात्रेयो निर्देशात् अश्रुतौ ह्यनुमानं स्यात् इति आत्रेय आचार्यः अर्थवादोपस्थितं प्रतिष्ठाख्यं फलं त्र्यहाणां अभिप्रैति न त्वनुपस्थितं स्वर्गम्। निर्दिश्यते हि अर्थवादे प्रतिष्ठा यदि प्रत्यक्षतः श्रुतौ निर्देशो न स्यात् तर्ह्येव खलु स्वर्गस्य फलस्यानुमानं स्यात्। नहि श्रुतौ अर्थवादोपस्थिते फले प्रत्यक्षे सति अनुमानस्यावकाशः।

न खलु विचक्षणः पुरुषः वह्निं साक्षात् चक्षुर्भ्यां पश्यन् व्याप्त्यनुसन्धान पूर्वकं परामर्शजन्येऽनुमाने प्रवर्तेत इति सूत्रार्थः। प्रयाजादेरपि रात्रिसत्राणामिव आर्थवादिकं फलं श्रूयते। यथा - 'वर्म वा एतत् यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इति शत्रोर्नाशरूपफलं अर्थवादेनोपस्थितं दृश्यते। एवं च विश्वजिन्नयायेन तदपवादभूतेन रात्रिसत्रन्यायेन वा स्वर्गरूपं फलं प्रतिष्ठाख्यं फलं वा प्रयाजादीनां परिकल्प्यताम्। ते स्वतन्त्रकर्माणो भवन्तु किमिति यागोपकारकल्पनेन प्रकरणादङ्गभावः परिकल्प्यते इत्याशङ्कायाः परिहार एवं वक्तव्यः। यदि स्वतन्त्रफलार्थत्वं परिकल्प्यते तर्हि अन्यतराकाङ्क्षस्थानप्रमाणेन फलेन सम्बन्धः स्यात्। न ह्यत्र फलस्य साधनाकाङ्क्षा विद्यते। फलं श्रूयमाणं हि साधनमपेक्षते। स्वर्गः प्रतिष्ठा च कल्प्यमानं परं न श्रूयमाणम्। एवं फलस्य साधनाकाङ्क्षाभावात् प्रयाजानां किं भावयेदिति केवलभाव्याकाङ्क्षया स्वतन्त्रफलार्थत्वं स्यात्। अतः स्थानेन पञ्चमप्रमाणेन विनियोगो वक्तव्यः इत्यर्थत्वे तु उभयाकाङ्क्षासत्त्वात् प्रकरणेन विनियोगः स्यात् प्रयाजानाम्।चतुर्थं च प्रकरणं पञ्चमात् स्थानात् विनियोगकरणे प्रबलम्। अतः प्रबलप्रकरणेनैव दर्शपूर्णमासाङ्गता प्रयाजादेरिति युक्तं नतु स्वतन्त्रफलार्थत्वम्। इदं च जैमिनिना चातुर्थिकेन सूत्रेण सिद्धान्तिम्।

'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् इति । अस्य सूत्रस्यायमर्थः । द्रव्ये फलश्रुतिर्न भाव्यताप्रतिपादिका अपितु अर्थवादरूपेण विधेयस्य द्रव्यस्य प्रशंसाजनिका । यतः स्ववाक्य एवोद्देश निर्देशेन परार्थत्वज्ञानात् फलाकाङ्क्षायाश्शान्तत्वात् यथा अनारभ्याधीयते 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति । अयं चानारभ्यवादः क्रत्वङ्गभूतां जुहूं पात्र विशेषं होमसाधनमुद्दिश्य पर्णता पलाशवृक्षप्रकृतिकता विधीयते । एवं पर्णताविधिकाल एव जुहूद्वारा क्रत्वपूर्वार्थत्व प्रतीतेः विधेयायाः पर्णतायाः फलाकाङ्क्षा नास्ति । अतः ज्ञातपाराभ्र्थ्यात् पर्णताद्रव्यस्य फलश्रुतिरर्थवादरूपेण विधेयपर्णताप्रशंसाजनिका स यजमानः पलाशमयजुहूविशिष्टः पापं श्लोकं अपकीर्तिं कदापि न शृणुयात् । अतः पलाशमयजुहूविशिष्टः पापं श्लोकं अपकीर्तिं कदापि न शृणुयात् । अतः पलाशमय जुहूपात्रमितरस्मात् प्रास्तमित्येव फलश्रुतेरर्थः न तु पर्णतया अपकीर्तिश्रवणा भावरूपं फलं जायत इति । एवमेव 'यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याहुतयस्तिष्ठन्ति अथो प्रैव जायते । इत्यत्रापि क्रत्वर्थध्रुवापात्रोद्देशेन विकङ्कतवृक्षप्रकृतिकत्वविधौ परार्थताज्ञानात् फलापेक्षाराहित्यात् प्रैव जायत इत्यादि प्रति आहुतयस्तिष्ठन्ति इत्यादिश्च फलश्रुतिर्विधेयवैकङ्कतप्रशंसाजनिकैव न तु तेन तादृशं फलं जायतें इति विधेयस्य भाव्यप्रतिपादिका तथा संस्कारकर्मणि फलश्रुतिरर्थवादरूपा । 'यदान्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत श्रूयते । अत्र यजमानस्य चक्षुषोः संस्कारकतया अञ्जनक्रिया विधीयते । अत्रापि क्रत्वङ्गभूतयजमानचक्षुषोरञ्जनविधिवाक्ये उद्देश्यत्वेन निर्देशात् क्रत्वपूर्वं फलमिति अञ्जनसंस्कारस्य विधेयस्य अवहनन प्रोक्षणादिवत् व्रीहिद्रव्यसंस्कारद्वारा क्रत्वपूर्वोपयोगवत् फलस्य ज्ञातत्वेन अञ्जनसंस्कारः ज्ञातफलको जातः । ततस्तद्विधिशेषभूता फलश्रुतिरर्थवादरूपेण विधेयस्य संस्कारस्य प्रशंसाजनिकैव न तु वस्तुतस्तादृशफलजनकमञ्जनाख्यं संस्कारकर्मेत्यर्थः अत्रापि यो यजमानः स्वे चक्षुषी अञ्जनेन संस्करोति तेन संस्कारकर्मणा स यजमानः स्वस्य शत्रोर्नेत्रमावृणोति । शत्रुरन्धो भवेदिति यावत् । एवं फलश्रुतिरञ्जनसंस्कारस्य प्रशंसारूपोऽर्थवादः ।

एवमेव अभ्यञ्जनसंस्कारेऽपि फलश्रुतिरर्थवादः । 'यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति इत्यत्र यजमानसंस्कारकर्माभ्यञ्जनं प्रति नवनीतस्य विधानात् नवनीताभ्यञ्जनं यजमानदेहसंस्कारद्वारा क्रत्वपूर्वजनकमिति फलाकाङ्क्षाया विधिस्थल एव निवृत्तत्वेन ज्ञातपाराथ्र्यकं नवनीताभ्यञ्जनमिति 'सर्वा एव देवताः प्रीणाति' इति वाक्यशेषे श्रूयमाणं सर्वदेवता प्रीतिरूपं फलं यथावत् नवनीताभ्यञ्जनजन्यं न भवति अपि तु तत् इतरस्मात् प्रशस्तमित्येव तात्पर्यं ज्ञेयम् । एवमेव कर्मणि अर्थकर्मणि गुणकर्मणः संस्कारपदेन सूत्रे ऽभि धानात् कर्मपदमुभयसाधारणमपि पारिशेष्यन्यायेनार्थकर्मपरमत्र सूत्रे द्रष्टव्यम् । 'अर्थकर्मणि फलश्रुतिरेवं अनायते वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानु याजा विद्यन्ते 'इति' दर्शपूर्णमासयोः प्रदानात्पूर्वं प्रयाजा अनुष्ठीयन्ते । प्रधानात्परं अनूयाजाश्चानुष्ठीयन्ते इति यत् तेन तादृशानुष्ठानेन यज्ञस्य यजमानस्य च वर्म कवचं कृतं भवति तेन यज्ञयजमानयोः कवचरूपेणावरणं कृतं भवति । अत्रापि उभयाकाङ्क्षालक्षणप्रकरणात् अर्थकर्मणोः प्रयाजानूयाजयोः दर्शपूर्णमासाङ्गत्वेन ज्ञातपाराभ्र्थ्यायोः भाव्याकाङ्क्षाविरहात् कवचेनावरणं यज्ञयजमानयोः न वस्तुतः फलं प्रयाजानूयाजजन्यं अपि तु तयोरवश्यकर्तव्यताबोधनाय स्तावकमेव । तथा आज्य भागरूपार्थकर्मणि प्रकरणात् ज्ञातेष्ट्यङ्गताके वाक्यशेषे श्रूयमाणा फलश्रुतिर्नाज्यभागस्य भाव्यताप्रतिपादिका अपितु अवश्यकर्तव्यताप्रतीतये प्रशंसाजनिका अर्थवादरूपा 'यत् आज्य भागौ यजति चक्षुषी एवतत् यज्ञस्य प्रतिदधाति' इत्येवमाज्य भागयोर्यज्ञस्य

चक्षुःप्रतिसन्धानरूपं फलं न वस्तुतं आज्यभागजन्यमपि तु अवश्यकर्तव्यतासिध्यर्थमर्थवादरूपमाज्यभागयोः प्रशंसकमित्येवं द्रष्टव्यम् । एवं साङ्गोपाङ्गं सम्भवदाक्षेपनिरसनमुखेनोभयाकाङ्क्षालक्षणं प्रकरणं चतुर्थं विनियोगविधेस्सहकारिभूतं प्रमाणं लक्षणोदाहरणाभ्यां निरूपितम् ।

अथेदानीं प्रकरणस्य क्रियैकविषयत्वरूपः स्वभावः प्रदर्श्यते । तदिदं प्रकरणं क्रियाया एव विनियोजकं न तु द्रव्यगुणयोः । तयोश्च द्रव्यगुणयोः क्रियाद्वारा विनियोजकं न तु साक्षात् क्रियाया इव द्रव्यगुणयोः प्रकरणं विनियोजकं भवितुं शक्नोति । अयं च स्वभावः इतर प्रमाणेभ्यो व्यावृत्तः प्रकरणस्य विनियोगे असाधारणो विशेषः । कुत इति चेदुच्यते । 'यजेत स्वर्गकामः' इति यागविधौ आख्यातांशेन कृतिरूपा आर्थी भावनाभिधीयते । भावयेदिति । भावना च भावनास्वाभाव्येनांशत्रयमपेक्षते । किं भावयेदिति फलाकाङ्क्षायां षष्ठाद्यन्यायेनैकपदोपात्तं सन्निहितं धात्वर्थं यागं क्लेशात्मकमिति भाव्यत्वेनान्वयायोग्यत्वात् विहाय तदन्वययोग्यमिच्छाविषयीभूतं भिन्नपदोपात्तमपि सुखरूपं पूर्वोक्तलक्षणलक्षितं स्वर्गकामपदलक्ष्यं स्वर्गमेव भाव्यत्वेन स्वीकरोति स्वर्गं भावयेदिति । एवं स्वर्गभाव्यकभावनायां ज्ञातायां भावनानिष्ठं स्वर्गभाव्यकत्वं केन सम्पादनीयमिति करणाकाङ्क्षायां सत्यां भिन्नपदोपात्तसोमदिद्रव्यापेक्षया शीघ्रोपस्थितिकं समानपदोपात्तं यागरूपं धात्वर्थमेव भावार्थाधिकरणन्यायेन करणतयान्वययोग्यं करणत्वेन गृह्णाति यागेन स्वर्गं भावयेदिति वाक्यार्थो भवति । एवं भव्यकरणयोर्भावनायामन्वयानन्तरं तस्या एव भावनाया भवति तृतीयाकाङ्क्षा कथं केन प्रकारेण यागेन स्वर्गं भावयेयमिति ।

इयं चाकाङ्क्षा प्रकाररूपा इति विशेषक्रियाविषयिणी भवति । कथमित्यत्र थमुनः प्रत्ययस्य प्रकारवाचित्वात् 'प्रकारवचने थाल्' इति सूत्रात् प्रकारवचने इत्यनुवृत्य किमश्चेति सूत्रेण भगवता पाणिनिना किंशब्दात् थमो विधानमनुशिष्टम् । अतः थमुनः प्रकारवाचित्वात् सामन्यस्य भेदको विशेषः प्रकार इति प्रकारलक्षणात् आख्यातेनाभिहितं सामान्यं क्रियारूपमेवेति तस्य समान्यस्य भेदको विशेषः प्रकारः क्रियारुप एव स्यात् । ब्राह्मणविशेषः परिव्राजकादिः सामान्य ब्राह्मण्यवानेवहि भवति । न हि परिव्राजकः वसिष्ठो वा अब्राह्मणो भवति । एवं च करणगतक्रियाविशेषाकाङ्क्षापरनामधेया कथम्भावाकाङ्क्षा जाता ।

तादृश्यामाकांक्षायां सजातीया विशेषक्रियैव अन्वाधानादिः ब्राह्मणतर्पणान्तः कथम्भावाकाङ्क्षानिवर्तकत्वेन अन्वेतीति युक्तम् । अन्वाधानं नाम दर्शपूर्णमासयोरादौ ममाग्ने वर्चोविह्वेष्वस्तु इत्यादिभिर्मन्त्रैः प्रणीतेषु आह्वनीयादिष्वग्निषु गार्हपत्ये च समित्काष्ठस्याधानम् । अयमादिमः क्रियाविशेषः । ब्राह्मणतर्पणं नाम मृष्टान्नभोजनादिना ऋत्विजाँ प्रीतिसम्पादनम् । अयं चान्तिमः क्रियाविशेषः । एतेषामेव प्रकरणविनियुक्तानां कथम्भावाकाङ्क्षाशामकत्वेन भावनायामन्वयः । तथा चान्वाधानादि ब्राह्मणतर्पणान्तक्रियाभिर्यगाख्यकरणोपकारं सम्पाद्य तदुपकृतेन यागेन परमापूर्वद्वारा स्वर्गं भावयेत् इति विशिष्टवाक्यार्थः सम्पन्नः । अन्वाधानादीनां यागोपकारकत्वमेतत् यत् तेन विना यागेनापूर्वजननात् । लोकेऽपि उद्यमननिपातनव्यतिरेकेण कुठारेण द्वैधीभावो न जन्यते खलु ।

इतिकर्तव्यता पदमपि कर्तव्यतायाः सामान्यरूपाया इत्येतादृशः प्रकारविशेषः इति व्युत्पत्त्या कथम्भावसमानार्थकम् । अतस्सिद्धमिदं कथम्भावाकाङ्क्षांयां क्रियैवान्वेतीति प्रकरणस्य क्रियैकविषयत्वसिद्धान्त उपपन्नः । लोकोऽपि कुठारेणच्छिन्द्यादित्युक्ते छेदनक्रियया द्वैधीभावं भावयेदित्यर्थेऽ वगते कथं द्वैधीभावं छेदनेन

भावयेदित्याकाङ्क्षायां कुठारमुद्यम्य निपात्य इत्येवोद्यमननिपतनक्रिययोरेव कथम्भावाकाङ्क्षायामन्वीयमाने दृश्येते। हस्तकुठारयोस्तु सिद्धद्रव्ययोः हस्तेनोद्यम्य निपात्येति कियाद्वारैव द्वैधीभावफलक क्रियायामिति-कर्तव्यतात्वेनान्वयोऽनुभवसिद्धः तथैव वेदेऽपि क्रियैकविषयत्वं कथम्भावाकाङ्क्षानिवर्तनेऽभ्युपगन्तव्यम्। अतः प्रकरणक्रियैकविषयमेव नियोजकं भवितुमर्हति। अन्वाधानादीनां भावनाकरण यागाख्यधात्वर्थगतत्वं नाम तदुपकारकत्वरूपम्। करणापेक्षितोपकारजनकत्वमेव करणगतत्वमितिकर्तव्यतायाः न तु करणगतत्वं करणनिष्ठत्वं क्रियया: क्रियानिष्ठत्वासम्भवात्। करणोपकारजनकत्वं च नहि करणस्वरूपनिर्वर्तकत्वमपि तु करणजन्यापूर्वोपकारकत्वम्। नहि अन्वाधानादिकं विना यागः केवलमपूर्वं जनयितुं समर्थः। यथा उद्यमननिपातनव्यतिरेकेण कुठारेण द्वैधीभावाख्यं फलं न जन्यते तद्वत्' एवं कथम्भावाकङ्क्षायां क्रियैव भावनायामन्वेतीत्यभिप्रायेणैव साम्प्रदायिकै र्द्रव्यदेवतयोः यागसम्पादनद्वारा अन्वयोन्वयुक्तः। यागस्वरूपनिष्पादनस्य क्रियात्वेन तद्वारान्वयः सिद्धयोरपि दव्यदेवतयोस्सम्भवतीति तदाशयः। यागस्य हि द्वे रूपे द्रव्यं देवता च देवातोद्देशेन द्रव्यत्यागस्यैव याग पदार्थत्वात्। नहि वेदान्तिनामिव यागक्रियापेक्षया देवतायाः फलदातृत्वेन प्राधान्यं जैमिनीयानां मते। यागं प्रति हवीरूपं द्रव्यमिव देवतापि गुणभूतैव देवताया विग्रहादिपञ्चकाभावेन हविषांभोक्तृत्वस्य तृप्तेः फलदातृत्वस्य चासम्भवात्। तत्प्रतिपादकानां मन्त्रार्थवादानां केवलं स्तावकत्वात्। इतिहासपुराणलोकेषु देवतायाः विग्रहस्य प्रसिद्धिर्मन्दाधिकर्तारिणां चित्तैकाग्रयसम्पादना यैव विधिगतशब्देनैव देवताकर्मणि निर्देष्टव्या इति नियमोऽक्षरानुपूर्वीरुपस्य शब्दस्य देवतात्वाङ्गीकारे एव घटते। अन्यथा विग्रहादिमद्देवताप्रकाशकत्वमिन्द्रादिपदानामित्यभ्युपगमे इन्द्रमहेन्द्रनियमन्यायः दत्तजलाञ्जलिः स्यात्। इन्द्रयाजी इन्द्रशब्दमेव देवताप्रतिपादकमुचारयेत् न तु महेन्द्रशब्दम्। एवं महेन्द्रयाजी महेन्द्र शब्दमेवोचारयेत्। न त्विन्द्रशब्दम्। इति याज्ञिकैरङ्गीक्रियमाणो नियमः निष्फलः स्यात्। अतः विधिगतशब्दनियमानुसारेण देवतायाश्शब्दरूपत्वं यागनिष्पादकत्वेन द्रव्यवद्यागं प्रति देवताया गुणत्वं यागजन्यस्यापूर्वस्यैव कालान्तरभाविफलजनकत्वं च इत्यादिः सिद्धान्तः जैमिनीयो निर्बाध एव।

किं चाग्न्यादि देवतानां हविर्भोगेन तृप्तानां फलप्रदातृत्वे सर्वेश्वरस्य फलप्रदातृत्वसिद्धान्तः व्याहन्येत। सर्वदेव नमस्कारः केशवं प्रतिगच्छति इति हि प्रसिद्धो न्यायः। किं च देवतानां अमृतान्धसां पुरोडाशक्षीरादिना तृप्तिस्सम्भवतीति सम्भावयितुमपि न शक्यते। अमृतघटं दृष्ट्वा तृप्यन्ति अमर्त्या इति च दर्शनमात्रेण तृप्तिः श्रूयमाणा हविर्भोगेन तृप्तौ कथं वा उपपद्येत। आस्तां तावदिन्द्रमहेन्द्रन्यायः ऐन्द्रे पयसि इन्द्रायेदं न ममेतिवत् मघवत इदं न मम आखण्डलायेदं न मम इत्येवमिन्द्रपर्यायपदैस्त्यागः कुतो वा निवार्यते। पराक्रान्तं च देवतायाः विग्रहादि पञ्चकाभावः शब्दस्यैव देवतात्वं अपूर्वस्य फलदातृत्वं च शबरस्वामिना शाबरे भाष्ये। अतः द्रव्यवत् गुणभूतैव देवता। अत एव च विकृतौ द्रव्यसादृश्य देवतासादृश्ययोर्विरोधे किं प्रकृतियागनिर्णायकमित्याशङ्कायां साक्षात्यागं प्रति गुणभूतद्रव्यसादृश्यमेव नियामकं न तु द्रव्यद्वारा परम्परया यागं प्रति गुणभूतदेवतासादृश्यमि त्युक्तं जैमिनीयैः। तस्मादेवच आग्नेये पयसि सान्नाय्यविकृतित्वं न त्वाग्नेयविकृतित्वं तथा ऐन्द्रे पुराडाशे आग्नेयविकृतित्वं न तु इन्द्रदेवतासाहश्यात् सांनाय्यविकृतित्वम्। विवृतौ च कथम्भावात्काङ्क्षायामुपकारसम्पादनमतिदिश्यते इत्यपि साम्प्रदायिकैरुक्तम्। यदि सिद्धं वस्तु कथम्भावाकायामन्वययोग्यं स्यात्तर्हि उपकारसम्पादनस्य कथमन्वयः। तत्पृष्ठभावेन च विकृतौ पदार्थानामतिदेश इत्युपकारसम्पादनपर्यन्तानुधावनं ग्रन्थकाराणामनर्थकं स्यात्। अत एव

भट्टसोमेश्वरेण राणके एवमभिहितम् 'व्यापारग्राहिणा प्रकरणेन साक्षात् ग्रहणायोगादुच्चारणद्वारा तद्ग्रहणम्। तद्ग्रहणाच्च उच्चारणार्थता इति अन्योन्याश्रयापत्तेः न प्रकरणपाठमात्रेण विनियोगो युक्तः। सामर्थ्यात्तु अभिधान क्रियावगमे तद्द्वारा प्रकरणग्रहणोपपत्तेः अनुच्चरितस्याभिधानाशक्तेः कर्मकालोच्चारणसिद्धिरिति भावः इति उक्तम्। सिद्धस्य च द्रव्यादेरितिकर्तव्यतात्वं नास्ति अङ्गत्वमेव केवलम्। तदपि न प्रकरणगम्यम्। अपि तु श्रुत्यादिना। व्रीहिभिर्यजेत इत्यादौ व्रीहिद्रव्यस्य अरुणया क्रीणाति इत्यादौ आरुण्यगुणस्य च तृतीयाश्रुत्या क्रियाङ्गत्वम्। बर्हिर्देव सदनं दामि इत्यादिमन्त्राणां द्रव्यरूपाणां लिङ्गात् इष्ट्यङ्गत्वम्। द्रव्यादि तु इतिकर्तव्यतया स्वीक्रियते इति न्यायरत्नमालायां पार्थसारथि वचनं तु अङ्गत्वाभिप्रायं वर्णनीयं पूर्वोक्तेष्टिविरोधात् बहुग्रन्थविरोधाच्च। 'होमश्च इतिकर्तव्यता न द्रव्यम्' द्रव्यस्याक्रियात्मकत्वा प्रकरणाग्रहणाभिधानार्थमित्यादि भाष्यवार्तिकन्याय सुधादिस्वरसाच्च' 'द्रव्याणां क्रियानिर्वर्तनाद्विना कथम्भावासङ्गतेः' इति च वार्तिकम्। 'प्रकृताः क्रिया अवान्तरक्रियायोगाद्विना गुणद्रव्ये कथम्भावैर्न गृह्णन्ति' इत्यादि बहुग्रन्थानुसारेण भूयोऽनुग्रहस्यैव न्याय्यत्वात् 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सकर्मत्वम्' इत्यधिकरणसिद्धन्यायेन पार्थसारथि ग्रन्थः अङ्गत्वाभिप्राय इत्येव वर्णनीयः। इत्यास्तां तावत्, अथ प्रकरणं विभज्य प्रदर्शयितुमारभते ग्रन्थकारः। तच्च प्रकरणं द्विविधमित्यादिना। उभयाकाङ्क्षालक्षणं प्रकरणं विनियोजकप्रमाणरूपं चतुर्थं द्विविधं सम्भवति। महाप्रकरणमवान्तर प्रकरणं चेति द्विविधं सम्भवति। तयोर्मध्ये फल भावनायाः प्रकरणं महाप्रकरणमित्युच्यते। स्वर्गाख्य फलभाव्यक दर्शपूर्णमासकरणक भावनायाः कथम्भावाकाङ्क्षायां प्रयाजादीनां उपकार्याकाङ्क्षायां च सत्यां मिथस्सम्बन्धेन प्रधानकथम्भावाकाङ्क्षा प्रयाजाद्यन्वयेन शाम्यति। प्रयाजादि गतोपकार्याकाङ्क्षा च प्रधानसम्बन्धेन शाम्यति। अतः एतत्प्रकरणं प्रयाजादीनां विनियोगे प्रमाणं भवति। एतच्चं प्रकरणं प्रकृतावेव सम्भवति। विकृतौ सौर्यादौ तु प्रकरणं नैव सम्भवति। अत्र विकृतौ यानि अपूर्वाण्यङ्गानि पठ्यन्ते उपहोमादीनि तेषां न प्रकरणं विनियोजकम्।

यद्यपि उपहोमानां किं भावयेदित्यस्ति आकाङ्क्षा तथापि प्रधानस्य विकृतियागस्य न कथम्भावाकाङ्क्षास्ति। विकृतेरुपकारकाकाङ्क्षायां क्लृप्तोपकारैः प्राकृतैरेवाङ्गैः कथम्भावाकाङ्क्षाशान्तेः। न हि विकृतेर्यत्किञ्चि दङ्गविषयिण्याकाङ्क्षा अपि तु उपकारजनकत्वसामर्थ्यविशिष्टाङ्गान्येव विकृतिप्रधानमपेक्षते। अतः सन्निधिपठितमपि अप्राकृतं उपहोमादिकमङ्गजातं अक्लृप्तोपकारकं परित्यज्य प्रकृतौ उपकारकाकाङ्क्षाशमनेन क्लृप्तोपकारकसामर्थ्यानि प्राकृतान्येवाङ्गानि प्रथमं गृह्णन्ति। तस्यां वेलायां प्राकृतान्यङ्गानि प्रकृत्यन्वयेन निराकाङ्क्षाणि। विकृति प्रधानगतकथम्भावाकाङ्क्षाशान्त्यर्थं निराकाङ्क्षाणां प्राकृताङ्गानां आकाङ्क्षामुत्थाप्यान्वयो वक्तव्यः। एवं च प्राकृताङ्गसम्बन्धः विकृतौ अन्यतराकाङ्क्षयैव नतु उभयाकाङ्क्षालक्षणप्रकरणात्। प्राकृताङ्गानां प्रकृतिसम्बन्धेन उपकार्याकाङ्क्षारहितानां विकृतिकथम्भावाकाङ्क्षानुरोधेन उपकार्याकाङ्क्षाया उत्थपनीयत्वात् स्वतः उत्थिताकाङ्क्षाविरहात्। एवं प्रथमं क्लृप्तोपकारैः प्राकृताङ्गैस्सह विकृति प्रधानास्य सम्बन्धे अन्यतराकाङ्क्षया ज्ञाते सति तदनन्तरं स्वसन्निधिपठितानामप्राकृतानामक्लृप्तोपकारकाणामुपहोमादीनां किं भावयेदिति उपकार्याकाङ्क्षा नुरोधेन निराकाङ्क्षाया अपि विकृतेः प्रधानस्य कथम्भावाकाङ्क्षामुत्थाप्य विकृतिप्रधानेन साकमप्राकृताङ्गानामुपहोमानां विकृत्युपकारकत्वेन यः विकृतिप्रधानसम्बन्धः सोऽपि अन्यतराकाङ्क्षयैव।

यतोऽप्राकृतोपहोमादिरन्वय काले विकृति प्रधानस्य कथम्भावाकाङ्क्षा नास्ति। अपि तु ल्कप्तोपकारकैः प्राकृताङ्गैः शान्ता कथम्भावाकाङ्क्षा उपहोमाद्यङ्गगतोपकार्याकाङ्क्षानुरोधेनोत्थापनीया भवति।अतः स्वरसत उत्थिताकाङ्क्षाविरहेण विकृतिप्रधानेन सह सन्निधिपठिताना मप्राकृतानामुपहोमानामन्वयोऽपि अन्यतराकाङ्क्षालक्षणस्थानादेव।

एवं चोभयाकाङ्क्षालक्षणं प्रकरणं विकृतेः प्राकृताङ्गान्वयकालेऽपि नास्ति। अप्राकृतोपहोमाद्यङ्गान्वयकालेऽपि नास्तीति विकृतौ प्रकरणं न विनियोजकम्। अपि तु प्रकृतावेव प्रकरणं विनियोजकमिति सिद्धान्तः समायातः कथमनुपस्थितैः प्राकृताङ्गैः विकृतिप्रधानस्य कथम्भावाकाङ्क्षाशान्तिरिरिति नाशङ्कितव्यम्। उपमितिलक्षण प्रमाणेन तेषामुपस्थितत्वात्। सौर्यकवाक्ये दृष्टेन औषधद्रव्यकत्वेन एकदैवत्यकत्चन वा सादृश्येन आग्नेयवाक्यमुपमीयते। इदं हि मीमांसकानामुपमिति स्वरुपं नागरिकः पुरुषः नगरे गां दृष्टवान् कदाचिद्वनंगतः तत्रवने गवयाख्यं मृगं पश्यति। ततः गवयगतं गोसाहश्यं प्रत्यक्षेणावगच्छति गोसाहश्यविशिष्टोऽयं गवय इति। अनन्तरंच समानसंवित्संवेद्यतया गोसाहश्यविशिष्टोयं गवय इति प्रत्यक्षज्ञानानन्तरमे तद्गवयनिष्ठसादृश्यवती मदीया गृहस्था गौः इति गृहस्थगोनिष्ठं गवय प्रतियोगिकं सादृश्यं स्मरति अनेन गवयेन सदृशी मदीया गौर्गृहस्था इति। इयमेव मीमांसकानां मते उपमितिरित्युच्यते। एतादृशोपमितिप्रमाणेन सौर्ययाग प्रतियोगिकसादृश्यवदाग्नेयवाक्यमित्युपमीयते। एवं सौर्ययागनिष्ठौधद्रव्यकत्वैकदैवत्यकत्व सादृश्येनाग्नेयवाक्यस्य स्मर्यमाणत्वात् तेन तदर्थो ज्ञायते। आग्नेयवाक्यार्थस्य अंशत्रयविशिष्टा भावना। तत्र सौर्यवाक्ये भावनाया ब्रह्मवर्चसाख्यस्य भाव्यस्य विद्यमानत्वात्सौर्ययागाख्यस्य करणस्य विद्यमानत्वाच्च विकृति भावनाया भाव्य करणयो राकाङ्क्षाविरहात् इतिकर्तव्यताकाङ्क्षाया एव विद्यमानत्वात् प्रथमतः दशमाद्यन्यायेन विकृतिभावनया प्राकृतोपकारस्यैवापेक्षणात् तस्यैव प्रथममतिदेशः। तस्य प्राकृतोपकारस्य सम्पादकाकाङ्क्षायां प्राकृतोपकार-पश्चाद्भावितया उपकारपृष्ठभावेन आग्नेययागीयप्रयाजादीतिकर्तव्यता अतिदिश्यते सौर्ययागेन ब्रह्मवर्चसाख्यं फलं भावयेत् आग्नेयवत् उपकृत्येति।

यथाग्नेयेन प्रयाजाद्यङ्गोपकृतेन स्वर्गो भावितस्तथा सौर्ययागेनापि प्रयाजाद्युपकृतेन ब्रह्मवर्चसाख्यं फलं भावयेदिति। एवं क्लृप्तोपकारैः तादृशैरेवाङ्गैर्विकृत्यकाङ्क्षायाश्शान्तत्वान्न उभयाकाङ्क्षालक्षणं प्रकरणं विकृतौ सम्भवति। अपितु, प्राकृताङ्गविषये अपूर्वाङ्गविषये च उभयत्रापि स्थानमेव विनियोजकम्। न तु प्रकरणम्। यद्यपि अपूर्वाणामङ्गानामुपकार्याकाङ्क्षासत्त्वाद्विकृतेः कथम्भवाकाङ्क्षा कालेऽन्वयाङ्गीकारे प्रकरणं विनियोजकं भवतीति प्रथममुपहोमैस्साकं विकृतिप्रधानस्यान्वयो भवतु। प्रकरणं हि स्थानात् झटिति विनियोजकम् इत्याशङ्का स्यात्तथापि प्रमाण बलाबलात् प्रेमयबलाबलं ज्याय इति शिष्टाकोपाधिकरणसिद्धेन न्यायेन क्लृप्तोपकारकाणां प्राकृतानामेवाङ्गानां प्रथमं विकृतिप्रधानसम्बन्धो युक्तः न तु कल्प्योपकारैर्विकृतिसन्निधिपठितैः वैकृतैः प्रथमं विकृतिप्रधानस्य सम्बन्धो युक्तः। तथा च विकृतौ न प्रकरणं विनियोजकं अपि तु प्रकृतावेवेति सिद्धान्तो निर्बाधः। कानाम विकृतिरिति चेत् यत्र संमग्राङ्गोपदेशो नास्ति साविकृतिः। यत्र च अपेक्षितयावदङ्गवाक्याम्नानं समग्राङ्गोपदेशरुपं सा प्रकृतिः। यतो विकृतिरङ्गानि गृह्णाति सा प्रकृतिरिरिति लक्षणं न युक्तम्। गृहमेधीयेष्टेः समग्राङ्गोपदेश सहिताया अपूर्वत्वेन स्थापितायाः प्रकृतित्वानापत्तेः। इत्यास्तां तावत्। सर्वथा विकृतौ प्रकरणं न विनियोजकमिति न भ्रमितव्यम्। किन्तु विकृतावपि प्राकृताङ्गानुवादेन विधीयमानमङ्गं प्रकरणविनियोज्यमेवेति

अपवाद प्रदर्शनायारभते ग्रन्थकारः यत्तु विकृतावित्यादिना। यद्यपि विकृतौ करणं न सम्भवतीत्युक्तमथापि किञ्चिदङ्गं प्राकृताङ्गानुवादेन विधीयमानमुपहोमवदपूर्वमपि विकृत्यङ्गत्वे प्रकरणेनैव ज्ञायमानं भवति यतः प्रकृतितः यावत् यूपकार्यनियोजनपृष्ठभावेन खादिरत्वं प्रकृतित आयाति तावत्खादिरत्वस्य प्रत्याम्नतामौदुम्बरत्वं विकृतेराकाङ्क्षायां सत्यामेव उपकार्याकाङ्क्षाया नियोजनाङ्गत्वेन विहितस्यौदुम्बरत्वस्य प्रवेशात् शरकुशन्यायेनोपदिष्टेनौदुम्बरत्वेन अतिदिष्टस्य खादिरत्वस्य बाधादतिदेशः खादिरत्वं न विषयीकरोतीति विकृतिप्रधानस्यापूर्वाङ्गस्यौदम्बरत्वस्य च मिथोऽन्वयकाले उभयाकाङ्क्षासत्वात् प्रकरणमौदुम्बरत्वस्य विकृत्यङ्त्वे विनियोजकं भवितुमर्हति।

उपहोमादयस्तु प्राककृताङ्गानुवादेनाविधींयमानत्वाद्यावत् प्राकृतमायति तावद्विकृत्याकाङ्क्षायां शरकुशन्यायेन निविशन्ति इति वक्तुमशक्यत्वात्तेषां विकृत्यङ्गत्वे प्रकरणं प्रमाणं न सम्भवति अपित्वन्यतराकाङ्क्षालक्षणं स्थानमेवेति वैषम्यम्।

# चित्सुख्यां प्राभाकरमतविमर्शः

प्रो. वे. आञ्जनेयशर्मा

**(१९८१ तमे वर्षे प्राभाकरमीमांसामधिकृत्य प्रचलिते उन्नतपाठनसमावेशे श्रीवेंकटेश्वरविश्वविद्यालयेनायोजिते कृतस्योपन्यासस्याधारेण रचितोऽयं लघुर्निबन्धः।)**

स्वप्रकाशता-ख्याति-तमो-मिथ्यात्व-सिद्धार्थशक्तिग्रह-शक्तिभेदवादादि-प्रकरणेषु श्रीचित्सुखाचार्यकृतायां तत्त्वप्रदीपिकायां प्राभाकरमीमांसाविषयास्तावद्विचारिताः, तत्र तत्र अद्वैतमतरीत्या खण्डिताश्च। तत्तदंशानां संकलनमत्र निरूप्यते। पुटादिसूचनं नयनप्रसादिनीसहितस्य वाराणसीस्थषड्दर्शन-प्रकाशनप्रतिष्ठानकृतस्य मुद्रणस्य, १९७४ वर्षे।

## (१) प्रथमतः तावत् स्वप्रकाशत्ववादे

ज्ञानविषयत्वे सति अपरोक्षत्वं (स्वप्रकाशत्वं) वा इति सप्तमो विकल्पो नापि सप्तमः। अविषत्वस्यैव असंभवेन निरस्तत्वात्। विषयत्वशब्देन कर्मत्वविवक्षायां गुरुमतानुसारिणामात्मन्यतिव्याप्तेश्च। तस्य ग्राहकतया सिद्धस्य अविषयत्वेऽपि अपरोक्षतायास्तैरंगीकारात् इति पूर्वपक्षोपक्षेपावसरे निरस्तः। प्राभाकराणां ज्ञानं स्वप्रकाशं नत्वात्मा।

ज्ञानाविषयत्वे सति अपरोक्षत्वमिति। ननु वक्ष्यमाणकथाप्रवृत्यसंभवलक्षणदूषणेन ज्ञानाविषयत्वस्य असंभवित्वे सति ज्ञानाविषयत्वविशेषितयोः अपरोक्षत्वव्यवहारविषयत्वविकल्पयोः कथमुत्थानमितिचेन्मैवम्। ज्ञानाविषयत्वेऽपि भाट्टाभिमतप्राकट्यवद् अपरोक्षत्वेन प्राभाकराभिमतसंसर्गवद् व्यवहारविषयत्वेन कथाप्रवृत्युपपत्तौ विकल्पद्वयोत्थानाविरोधादित्यपि द्रष्टव्यम्।

विषयत्वशब्देनेति - गुरुमत इत्युपलक्षणम् इति भावद्योतनिका अमुद्रिता सुखप्रकाशकृता चित्सुखीव्याख्या (३-४-पु),

> संसर्गव्यवहारस्य असंसर्गाग्रहनिबन्धनत्वात् - चित्सुखी, १०५ पुटे
> विभ्रमशब्दः अयथार्थव्यवहारपरो गुरुनये - नयनप्रसादिनी, २२७ पुटे
> एतेन भ्रमव्यवहारविषयः संसर्गः। सोऽपि भेदाग्रहनिबन्धन इति गुरुमतमुल्लिखितं प्रसंगतः।

तथापि नात्मनः स्वप्रकाशत्वम्। तत्तदर्थसंवेदनाश्रयतयाऽपि स्फुरणोपपत्तेः। न चास्य क्रियाफलभाजोऽपि कर्मत्वम्। परसमवेतक्रियाफलशालित्वाभावात्। न चैतन्मानसप्रत्यक्षेऽपि समानम्। जानातेः सदा सकर्मकतया कर्मणाव्याप्तस्य तन्निवृत्तौ निवृत्तेरिति चेन्मैवम्। (चि.पु ४४) इत्यादिना आत्मनः घटादिज्ञानेषु संविदाश्रयत्वमेव न तत्कर्मत्वम् नापि अनुव्यवसाय (मानसप्रत्यक्ष) विषयत्वं नैयायिकमत इव। ज्ञा-धातोः सर्वदा सकर्मकत्वात् कर्माभावं ज्ञानत्वाभावप्रसक्तिः संवेदनस्य स्यात् - इति प्राभाकरमतमुपक्षिप्य संविद्व्यतिरिक्तस्य संवित्कर्मत्वेनैव अपरोक्षत्वनियमात् आत्मनः कर्मत्वाभावे तदनुपपत्तेः इति अपरोक्षत्वानुपपत्तिप्रदर्शनेन खण्डितम्।

भावद्योतनिकायामेतत् स्फुटतरम् (१८ पु) प्राभाकरमतमाशंकते - तथापीति । ज्ञानातिरिक्तस्य ज्ञानप्रयुक्तापरोक्षस्य व्यवहारविषयत्वं घटादिवत् कर्मता स्यादित्याशंक्य कर्मलक्षणरहितत्वान्नैवमित्याह - न चास्येति । तर्हि कर्मलक्षणाभावेन कर्मकर्तृविरोधाभावान्मानसप्रत्यक्षवेद्यत्वमेन किमिति न स्यात् इत्यत-आह न चैतदिति । घट-कर्मज्ञाने किमात्मनः स्फुरणम् ? अहमिति ज्ञाने वा? आद्ये ग्राहकतया सिद्धिप्रसङ्गः । द्वितीयं अहमिति ज्ञानस्य घटादि कर्मकत्वाभावात् आत्मापि यदि कर्म न भवेत् तदा निष्कर्मकतया ज्ञानत्वमेव न स्यादित्यर्थ इति ।

## (२) तमोवादः

अत्र अस्ति हि तमः तमालमालाश्यामलमिति प्रतितिः इति नीलरूपवत्वेन भावरूपत्वं तमसः प्रसाध्य न च अप्रतीतावेवायं प्रतीतिभ्रमः तद्व्यवहारस्य तत्प्रतीतिमन्तरेणानुपपत्तेः । न चायमौपचारिकः आलोकाभावे, शौक्ल्या भावे पटादौ नीलव्यवहार इवेति युक्तम् । मुख्ये बाधकाभावात् । रूपे रूपवत्वं वा आलोकानपेक्षचक्षुर्जन्य-ज्ञानविषयत्वासंभवो बाधक इति चेत्, मैवम् । आलोकविरोधिनः तमसश्च आलोकाभावव्यंजनीयतया तन्निरपेक्षचक्षुर्विषयत्वोपपत्तेः । सामर्थ्यस्य कार्यगम्यत्वात् रथादिना शालिकानाथाद्युपपादितं तमसोऽप्रतीतौ प्रतीतिभ्रमत्वं निराकृतम् । चि ५०-पुटे नयनप्र., १०८-पुटे ।

प्राभाकरमतमाशंक्य परिहृति न चेति । न चालोकादर्शनविषयज्ञानमेव तमः पश्यामीति व्यवहारहेतुरिति वाच्यम् । तद्दर्शनाभावस्य अचाक्षुषतया चक्षुर्व्यापारसमनन्तरं बहिर्मुखत्वेन इदं तम इति व्यवहारो न स्यादिति भावः इति भावद्योतनिकायां विशदतरम् । भा.द्यो. २३ पुटे

एवं तमोव्यवहारस्य तत्प्रतीतिमन्तरेण अनुपपन्नत्वम् । व्यवहारस्य सर्वत्र ज्ञानपूर्वकत्वनियमात् । आलोकविरोधिनस्तमसः आलोकाभावव्यंजनीयत्वं सामर्थ्यस्य कार्यगम्यत्वात् । गुरुमते प्रध्वंसाभावस्य अनित्यत्वात् तमो न अभावरूपं, न वा तद्व्यवहारः आलोकाभावे औपचारिकः इति तन्मतनिराकरणसंक्षेपः । सिद्धान्ते भावरूपं तमः, साक्षिवेद्यत्वात् । अभावो न साक्षिवेद्यः ।

## (३) मिथ्यात्वानुमानस्य मिथ्यात्वम् -

शब्दशब्दवत् प्रपंचसत्यत्वानुमानवद् अध्ययनविधिवच्च अविरोधः
इति उदाहरणम् प्रदर्शितम् (चि.पु. ८१)

स्वाध्यायोऽध्येतव्यः इति अध्ययनविधिः वेदाध्ययनं विदधानः तदंतर्वर्तिनः स्वात्मनोऽपि विधत्तेऽध्ययनं, तद्वत् मिथ्यात्वानुमानमपि स्वात्मनो मिथ्यात्वं साधयतीति तस्य भावः ।

प्राभाकरमते नियोज्याभावाद् अध्ययनविधिः न स्वविधायकः । किं तु तमध्यापयीत इति अध्ययनविधिप्रयुक्तमेव स्वविषयाध्ययनमिति हेतोः, अध्ययनविधिरखिलवेदवाक्याध्यापनं विदधानः स्ववाक्याध्ययनमपि विधत्त इति स एव दृष्टान्तः (चि पु ८९) इति वाक्येन मिथ्यात्वे अनुमाननिरूपणमुपसंहृतम् । अत्र प्राभाकरमतमधिकृत्य काश्चन युक्तिप्रत्युक्तयः प्रदर्शिताः

स्वसंबन्धित्वेन कार्यबोद्धा नियोज्यः (नयन पु ८२), नह्यत्र कामी जीवनादिनिमित्तवान् यः कश्चित्प्रतीयते (अध्ययनविधौ) । नापि विश्वजिदादिवत् (स्वर्गकामी अधिकारी) कल्पयितुं शक्यः । अध्यापनविधित एव तद्विषयस्य अध्ययनस्य सिद्धौ नियोगसिद्धेः कल्पकाभावात् । न च अध्यापनविधेरपि निर्नियोजतया अननुष्ठापकत्वम् । आचार्यकरणकामस्य नियोज्यस्य प्रतीतेः । तथाहि अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत इति श्रूयते (चि पु ८१-२)

तेन विध्याक्षेपलक्षणोपादानप्रमाणेन अन्यत एवाध्ययनसिद्धः नाध्ययनविधिप्रयुक्तमध्ययनमिति (चि.पु.८३)

एष हि प्राभाकरसिद्धान्तः- अन्यतोऽप्रवृत्तः खलु पुरुषः शास्त्रेण प्रवर्तनीयः । तथा च काम्यनियोगेषु फलवदेव करणांशेऽपि रागतः प्रवृत्तिः । इतिकर्तव्यतासु तु शास्त्रेण प्रवृत्तिः (नयनप्र ८४ पु) अतः ''अध्ययनविधिवच्च इति न दृष्टान्तः मिथ्यात्वानुमानस्य मिथ्यात्वविषये ।

खण्डनम् - नाध्यापनविधिप्रयुक्तता अध्ययनस्य, कामाधिकारे करणांशे रागस्यैव प्रवर्तकत्वात्, अध्यापनस्यापि काम्यत्वात्, तद्विषयरागेणैव तन्निष्पादकेऽप्यध्ययने अनुष्ठानलाभात् अध्यापनविधेरनुष्ठापकत्वकल्पनानुपपत्तेः । न चाध्यापनांगत्वादध्ययनं विधितः प्रवृत्तिः । श्रुत्यादीनामन्यतमस्य प्रमाणस्य अदर्शनात् । न चाध्यापनविधिप्रयुक्तत्वादध्ययनस्य तदंगत्वम् । प्रयुक्तेर्व्यभिचारात् । न हि भिन्ने जुहोति, स्कन्ने जुहोति इत्यादौ भेदनादिना प्रयुज्यमानो होमः तदंगमंगीक्रियते । तत्प्रयुक्तेरध्ययनस्य अद्याप्यसिद्धेः । अंगत्वेन प्रयुक्तिः प्रयुक्तौ च तदंगत्वमिति परस्पराश्रयता च इति निष्प्रमाणकत्व-व्यभिचार-परस्पराश्रयताख्या दोषाः तन्मते दर्शिताः (चि ८४ पु) ।

अपि च अध्ययनं अधिकार्यङ्गीकारे नियोज्योप्यंगीकार्यः । विधिपर्यवसानाय नियोगपर्यवसानाय वा उभयोरावश्यकत्वात् । तमध्यापयीत इति अध्यापनं न विधिः वृत्त्यर्थत्वेन याजनवत् तस्य प्राप्तत्वात् । याजनं न विधीयतं । किं तु एतया अन्नाद्यकामो यजेत इति वाक्यार्थ एव । योऽनधीत्य द्विजो वेदमित्यादिना अध्ययनस्य नित्यत्वमपि । अकरणे शूद्रत्वमाशुगच्छति इति प्रत्यवायश्च । अध्यापनं तु अनित्यं काम्यवत् । नित्यस्य अनित्येन प्रयुक्तौ विरोधः - इत्यादि कथनेन तन्मतप्रतिक्षेपः कृतः ।

**(४) अख्यातिखण्डनावसरे प्राभाकरमतानुवाद एवं दृश्यते । (चि.पु. 103-115)**

विगीताः प्रत्यया यथार्थाः प्रत्ययत्वात् इत्यादिप्रमाणेन सर्वप्रत्ययानां यथार्थत्वेन विभ्रमाणामेवाभावः । अन्यथा अन्यप्रत्ययस्य अन्यालंबनत्वेन अनुभवविरोधः । संविदां स्वविषयव्यभिचारे अनाश्वासप्रसंगः । असतोऽपि संसर्गादेः भानाङ्गीकारे असत्ख्यातिप्रसङ्गः । दोषाणां स्वारसिककार्यप्रसवशक्तिप्रतिरोधमात्रहेतुत्वम् । सर्वत्र च प्रतीयमानयोः संसर्गिणोः संसर्गव्यवहारस्य असंसर्गग्रहनिबंधनत्वम्, संसर्गज्ञानस्यापि हेतुत्वकल्पने गौरवम् । बाधकस्य बाधकत्वं संसर्गव्यवहारमात्रादसंसर्गाग्रहप्रसञ्जितात् । विभ्रमस्य संस्कारमात्रकारणत्वात् स्मृतित्वमेव परिशिष्यते, इदंप्रत्ययस्य सामान्यमात्रग्रहणरूपत्वात्, रजतेन संप्रयोगलिंगाद्यभावात् च । इदमाकार-रजताकारज्ञानयोः (विनश्यदविनश्यतोः सहावस्थानरूप) नैरंतर्यमेव असंसर्गाग्रहनिबन्धनायथार्थ-व्यवहारप्रवर्तकम् । इति ।

खण्डनप्रकारस्तु - विभ्रमांगीकारे स्वसिद्धान्तविशेषविरोधः गुरूणाम् । अनंगीकारे प्रत्ययत्वादितिहेतोराश्रयासिद्धिः । सर्वत्र संसर्गव्यवहारस्य संसर्गज्ञानपूर्वकत्वनियमः । अन्यथा व्युत्पित्सोः संसर्गज्ञानानुमानाभावात् शब्दप्रामाण्यभंगप्रसंगः । एवमनुमानप्रत्यभिज्ञयोरुच्छेदः । सर्वत्र असंसर्गाग्रहस्वीकारे घटतद्व्यक्त्योः समवायस्य अप्रत्यक्षतया संसर्गाग्रहेऽपि संवादव्यवहारदर्शनेन अनैकान्त्यम् । रजताकारायाः प्रतीतेः शुक्तिकालंबनतानभ्युपगमात्र अनुभवविरोधः । ज्ञानानां क्वचिद्विसंवादिव्यवहारजनकत्वेऽपि यथा न सर्वत्रानाश्वासप्रसंगः, तथा क्वचिद् व्यभिचारेऽपि संवित्सुविश्वासु विश्वासविरहो नास्तीति अतः अनाश्वासप्रसंगावकाशो नास्ति । भासमानसंसर्गादेः सदसद्विलक्षणत्वादसत्ख्यातिप्रसंगोऽपि नास्ति । दोषदूषितचक्षुरादिकरणसद्भावात् अकारणककार्योत्पत्तिरपि निराकृता । दोषाणां न केवलं यथार्थज्ञानप्रतिबन्धकत्वमयथार्थज्ञानजनकत्वं च विद्यते । सर्वत्र चासंसर्गग्रहाभ्युपगमे शब्दलिंगादिप्रामाण्यभंगात् समीचीनज्ञानस्थले संसर्गज्ञानं च (विपर्ययस्थले असंसर्गाग्रहं) स्वीकुर्वतो गौरवस्य अदोषत्वम् । असंसर्गाग्रहमात्रस्य व्यवहारप्रसञ्जकत्वादेव बाधकज्ञानस्य अयथार्थव्यवहारबाधकत्वं नास्ति । दुष्टकरणजन्यतया परिशेषासिद्धिः स्मृतित्वाभावश्च इति ।

### (५) कार्यवादः (चि.पु १४६)

सिद्धार्थशक्तिग्रहनिरूपणे पूर्वपक्षकथनावसरे कार्य एव पदानां लोकवद्वेदेऽपि संगतिग्रहणमिति मीमांसकाभिमतकार्यवादो वर्णितः । परिशेषावधारणानुपपत्तेः ।

पुत्रस्ते जात इत्यत्र पुत्रादिपदानां तनयाद्यर्थेषु न संगतिग्रहः । प्रियासुखप्रसवादेरपि हर्षहेतोः संभवात् । एवं विधस्थलेषु सिद्धार्थप्रयोगस्य लाक्षणिकत्वम् । परस्परान्वयस्य कार्यान्वयाव्यभिचारात् । अर्थात् कार्यान्वयस्य परस्परान्वय विशेषरूपत्वात् । दारमित्यादिषु विक्रियतामित्यध्याहारः । नापि कार्यस्य कार्यान्तराभावेन कार्यपदस्य कार्यान्वियिनि अथवा कार्यरूपान्वयधारे, कार्यपर-पदार्थान्विते वा पदशक्तिग्रहणाभ्युपगमे तादृशानुपपत्तिर्वा प्रयोजकद्वैविध्यं वा न भवेत् । कश्चिच्छब्दः साक्षादेव कार्यप्रतिपादकतया व्युत्पद्यते कश्चिच्च कार्यान्वितस्वार्थपरतया इति शालिकनाथः । कार्यान्वितस्वार्थाभिधानं अन्येषां व्युत्पत्तिः, लिङादिस्तु कार्याभिधाने व्युत्पद्यते इति भवनाथश्च । कार्यान्वयान्वयिने अन्यत्र कार्यस्य विशेषलक्षणपक्षे संबन्धद्वयप्रसंगः, युगपच्च विशेषणता विशेष्यता च कार्यान्वययोः, उपलक्षणता पक्षे शब्दशक्त्यगोचरत्वप्रसंगः इति न्यायरत्नदीपावलीकृतदूषणमसाधु । कार्यस्य संबन्धव्यावर्तकत्वम् । न तु संबन्धरूपत्वम् । योग्येतरान्वयपक्षेपि अन्वयान्वययोग्ययोरपि उक्तदूषणानुवृत्तिः । अतो न विशेषणत्वपक्षे दोषः । उपलक्षणत्वपक्षेअपि परंपरया कार्यस्य शब्दशक्तिविधेयत्वमस्ति । मोक्षदशायां अनुभूतेः व्यवहारहेतुत्वाभावात् (अनुभूतिरनुभूतिव्यवहारहेतुप्रकाश इति) लक्षणस्य अव्याप्तिनिवारणाय व्यवहारहेतुत्वस्य उपलक्षणत्वांगीकारात् । विवादपदानि पदानि कार्यपराणि पदत्वात् कार्यपदवदिति प्रयोगः । विज्ञानमानन्दं ब्रह्म इत्यादिष्वपि द्रष्टव्य इत्यादि विधिशेषतया कार्यपरत्वम् इति ।

खण्डनम् (पु. १५३) न सिद्धे प्राथमिकव्युत्पत्त्यसंभवः । पुत्रस्ते जात इत्यादिषु पुत्रपदालिप्त-कुंकुमांकितपय प्रदर्शकेनवार्ताहरेण कथिते पुत्रजन्मनि चैते सुतसंभवस्यैव प्रमोदहेतुत्वावधारणात् न परिशेषानुपपत्तिः । मुख्यार्थविषयतया सिद्धेऽपि प्रयोगसंभवे लाक्षणिकत्वायोगः । पुत्रादिपदानां स्वस्वार्थे व्युत्पत्तिः । लोके प्रसिद्धधात्वर्थात्मककार्ये व्युत्पत्त्यंगीकारे वेदे तदभावात् यजेतेत्यादीनां लिङादिनियोगानामबोधकत्वप्रसंगः ।

तथा काम्यनियोगे व्युत्पन्नस्य लिङादेः नित्येषु लाक्षणिकत्वापत्तिः। यद्यप्यनुवादाशंकया न झटिति नियोगान्तरबोधकत्वमंगवाक्यगतलिङादेरिति प्राभाकरराद्धान्तः, तथापि अंगनियोगाभिधायित्वमिष्यत एव आरादुपकारकाङ्ग (प्रयाजादि) वाक्येषु। इतरथा तदुपकारासंभवात्, अनन्यविषयत्वात्। सन्निपत्योपकारकेषु तदुभयाभावादनुवादकत्वमेवेति नयनप्रसादिनी। एवं नित्यनैमित्तिकयोः स्वतंत्रकार्ये पदशक्त्यधिगतेः अंगवाक्ये परार्थकार्ये लिङादिः मुख्यो न स्यात्। योग्येतरान्विते पदशक्तेरव्यभिचारो लाघवञ्च। कार्यान्वयान्वयिनि पदशक्तिरिति कल्पनागौरवम् अन्वितमात्रस्य प्रयोजकत्वात्। न च कार्यपरपदार्थान्वितस्वार्थे शक्तिः कार्यपरत्वस्य पदधर्मत्वे सर्वपदार्थानां पर्यायत्वप्रसङ्गः, पदार्थधर्मत्वे पदार्थानां भाट्टमते इव गुरुमते कार्यबोधकत्वेन कार्यपरत्वा भावः कार्यसाधकत्वविवक्षायां अनुमेयत्वप्रसंगः। कार्यपराणि पदानि पदत्वादित्यनुमानं न पिबेदित्यादि निषेधवाक्यस्थपदैरौदासीन्यबोधकैरनुष्ठेयानवबोधकैरनेकान्तम्। नापि 'विज्ञानमानन्दं ब्रह्म' इत्यादीनां प्रतिपत्तिविधिशेषत्वम्। शाब्दीप्रतिपत्तिः पदपदार्थसंगत्यधीना न विधितन्त्रा। भावनात्मिका अथवा ध्यानरूपा। ज्ञानप्रकर्षस्य हेतुतया अन्वयव्यतिरेकसिद्धा इति तत्रापि न विधिः। साक्षात्कारस्तु ब्रह्मरूपत्वेन नित्यः। अतो न सोपि विधेयः इति। कार्ये प्रामाण्यमेव शब्दस्यानुपपन्नं तत्र संगतिग्रहणयोगात् इति च। (चि.पु. २६०)

### (६-क) कार्यस्य प्रवर्तकत्वम् -- (पु. १६०)

इष्टसाधनज्ञानं न प्रवर्तकम् अतीतानागतविषयके तस्मिन् व्यभिचारात्। कार्यमेव प्रवर्तकम्। प्रवर्तकत्वादेव तत्र संगतिग्रहः। कृतिसाध्येष्टसाधनताज्ञानस्य प्रवर्तकत्वे कार्यमेव नामान्तरेण अंगीकृतम् ''कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते'' इति शालिकानाथोक्तेः। इष्टसाधनताज्ञानस्य कार्यज्ञानं प्रति हेतुत्वम् -- ''खलसाधनता तत्र कारणम्'' इति कथनात्। न च चिकीर्षैव कार्यताज्ञानम्। ममेदं कार्यमिति कार्यज्ञानमंतरेण चिकीर्षाया अनुपपत्तेः। इष्टसाधनेऽपि चन्द्रोदयादौ असाध्यस्वभावे चिकीर्षाया असंभवाच्च। कार्यधियः आलंबनम् न कृतियोग्यता - समीहितसाधन-फल-तदनुस्यूताभिलाषमात्रगोचरता। क्रमेण दुःखतत्साधनयोरपि कृतियोग्यत्वात् अतीत - वर्तमानयोः समीहितसाधनत्वेऽपि कार्यज्ञानालंबनत्वाभावात्, फलसाधनेऽपि (कार्यता) सत्त्वात्, अभिलाषविषयचंद्रादौ तदभावात्। अतिरिक्त एव आकारः कार्यधीगम्यः कृतिसाध्यः कृत्युद्देश्यः कार्यम्। तस्यैव प्रवर्तकत्वम्, शब्दशक्तिगोचरत्वं च। तच्च कार्यं लौकिकक्रियातिरिक्तं कालान्तरभाविफलसाधनं नियोगो लिङाद्यवगम्यः। तच्च कार्यं पुरुषं नियुंजानं नियोगः मानान्तरापूर्वतया अपूर्वः प्राधान्येन कृतिसाध्यत्वात् प्रधानमिति चोच्यते। अलौकिकत्वेऽपि संबन्धग्रहणोपपत्तिः यूपाहवनीयवत् पदान्तरसमभिव्याहारात्। अतस्तस्य कार्यस्य वेदप्रामाण्यम्। प्रयोगश्च -- विवादाध्यासिता लिङादयः एतत्क्रियातिरिक्तकार्याभिधायिनः कार्याभिधायित्वादिति। विपक्षे स्वर्गकामो यजेतेत्यादिवाक्यानामप्रामाण्यप्रसंगो बाधकः। इति।

समाधानम् (पु. २६६) -- हितसाधनस्यैव प्रवर्तकत्वम्। यादृशं कृतियोग्येष्टसाधनज्ञानं कार्यज्ञानहेतुरिष्टः तादृशस्यैव प्रवृत्तिहेतुत्वान्न भूतादौ व्यभिचारः। कृतिसाध्येष्टसाधनताज्ञानादेव चिकीर्षाया अप्युपपत्तेः 'ममेदं कार्य मिति चिकीर्षां विहाय अतिरिक्तं कार्यं नास्ति। फलेऽतिव्याप्तेः कृतिसाध्यं प्रधानमिति कार्यलक्षणं न भवति। अव्यवधानेन कृतिसाध्यत्वे विवक्षिते नियोगे तदभावादव्याप्तिः धात्वर्थस्यैव साक्षात्कृतिलक्षणप्रयत्नसाध्यत्वात्। कार्यस्य अलौकिकत्वात् लिङादिभ्योऽप्रतीतिः, मानान्तरानधिगतत्वे संगतिग्रहायोगः, तदधिगतत्वे अपूर्वत्वभंगश्च। क्षिप्रनाशिन्याः क्रियायाः कालान्तरभाविस्वर्गसाधनानुपपत्तेः कार्यावगमः इति चेन्न। तथापि



13

मानान्तरवेद्यत्वे अपूर्वत्वं न स्यात्। अथ नेयमर्थापत्तिरूपं प्रमाणं किं तु तर्क एव, प्रमाणानुग्राहकस्य तर्कस्य अप्रमाणत्वमेवेति चेत् मैवम्। ''यद्ययं वह्निमान्न स्याद् धूमवानपि न स्यादितिवत् यदि लिङादिः कार्याभिधायी न भवेत् न स्वर्गकामपदेन समभिव्याह्रियेत'' इति च तर्के आपाद्यापादकयोः धूमवत्ववह्निमत्वयोः तदभावयोरिव प्रमाणान्तरगोचरत्वमेव स्यात्। अतः कार्यस्य प्रमाणान्तरगम्यत्वम्। तर्कस्य अनुभूतिभिन्नतया स्मृतित्वांगीकारे अननुभूते नियोगे स्मृत्यसंभवः, संस्कारासंभवात्। सापेक्षं ज्ञानं स्मृतिः, प्रमाणानुग्राहकतया तर्कस्य प्रमाणापेक्षत्वात् तर्कस्य स्मृतित्वमिति चेत् उत्पत्तौ सापेक्षत्वांगीकारे प्रमाणज्ञानानामपि इंद्रियादिसापेक्षतया स्मृतित्वं, विषयावबोधे तथात्वाभ्युपगमे प्रदीपवद् ज्ञानत्वाभावश्चापद्यते। ''स्मृतिः पुनः पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमिति सिद्धान्तविरोधश्च। अर्थापत्तिगम्यत्वमपि नास्ति कार्यस्य अनुपपत्त्यभावात्। अर्थात् क्रियाया एव अपूर्वावान्तरव्यापारायाः स्वर्गसाधनत्वोपपत्तेः। कृतिसाध्ये नियोगे कृतेः (प्रयत्नस्य) भावार्थैकाविषयत्वात्। नियोगस्य भावार्थभिन्नत्वम्। असंघटितघटकतया भावार्थोपि (यागोपि) विषयः करणं च नियोगं प्रति। साक्षात्कृतिसाध्यत्वं नियोगस्य नास्ति। नियोगमन्तरेणापि स्वजन्यापूर्वावान्तरव्यापारजननद्वारा क्रियाया एव फलसाधनत्वम्। एवं अवगुरणेपि दुरितापूर्वकल्पना संभाविनी। अन्यथा लिङादेः क्लृप्तक्रियावाचकत्वभङ्गः अक्लृप्तनियोगस्य अपूर्वस्य फलसाधनत्वस्य, यागस्य च फलनियोगयोः करणत्वस्य च कल्पनागौरवम्।

यथा आग्नेयादीनामुत्पत्यपूर्वावान्तरव्यापाराणां परमापूर्वसाधनत्वं तथा अपूर्वावांतरव्यापाराया एव क्रियायाः ईश्वरप्रसादावान्तरव्यापाराद्या वा फलसाधनतोपपत्तेः न नियोगकल्प नावकाशः। उत्पत्त्यपूर्वाणां च परमापूर्वसाधनत्वे प्रमाणाभावः। दर्शपूर्ण मासाभ्यां स्वर्गकामो यजेत इत्यादिफलसम्बन्धनियोज्यबोधकेषु अधिकारवाक्येषु वा 'आग्नेयोष्टाकपाल इत्यादिषु कर्मस्वरूपबोधकेषु उत्पत्तिवाक्येषु वा तथा प्रतीत्यभावात्। सर्वेषामपि वाक्यानां स्वतन्त्रक्रियाभिधायकत्वे प्रयोजनप्रयोजनिभावकृतान्विताभिधानरूपग्राहकग्रहणस्य भंगप्रसंगः, इति।

## (६ ग) नियोज्यखण्डनम् -- (पु २७५)

''नियोज्यः स च यः कार्यं स्वकीयत्वेन बुध्यते'' इति वचनात् कार्यस्य आत्मीयत्वेन बोद्धा नियोज्यः। तदन्वयात् नियोगसिद्धिः इति। कार्यं प्रति गुणभूतत्वे कर्तैव नियोज्यो भवेत्। प्रधानभूतत्वे अधिकारी। ज्ञानस्य वा ज्ञातुर्वा गुणप्रधानभावातिरिक्ततासंभवात्। लौकिकक्रियातिरिक्तकार्यं प्रति गुणभूतत्वे कार्यसिद्धौ नियोज्यसिद्धिः, नियोज्यसिद्धौ कार्यसिद्धिरिति परस्पराश्रयः इति।

## (६-च) नियोगस्य कृत्युद्देश्यत्वनिरासः -- (पु २७६)

सुखदुःखप्राप्तिपरिहारौ तदुभयसाधनं वा पुरुषार्थः। नियोगस्य चैतदन्यतमत्वाभावाद् अपुरुषार्थत्वम्। अतः कृत्युद्देश्यत्वाभावः प्राधन्याभावश्च। स्वर्गादिसाधनत्वेन पुरुषार्थत्वाभ्युपगमे नित्यनैमित्तिकनियोगयोः स्वर्गादिसाधनत्वाभावेन कृत्युद्देश्यत्वं न स्यात्। नियोगसिद्धेरेव पुरुषार्थत्वे तस्य स्वर्गादिसाधनतांगीकारो निष्फलः। ननु काम्यकर्मसु नियोगस्य फलान्तरसाधनत्वम्, फलं प्रति करणीभूतयागस्य नियोगं प्रति विषयत्वम् फलकामिनोऽत्र नियोज्यत्वात्। नित्यकर्मसु तावत् नियोगं प्रत्येव विषयत्वकरणत्वे। ''नियोगार्थसिद्धेः किमन्यत् प्रयोजनं सर्वविधीनाम्'' इति गुरूक्तेः नियोगस्यैव परमपुरुषार्थत्वं च। एवं नित्यकाम्यभेदः इति चेत् न।

फलवत्त्वाविशेषेऽपि यत्र कामनानिमित्तं तत्काम्यम्, यत्र अकरणे प्रत्यवायः तन्नित्यमिति भेदोऽन्यथाप्युपपन्नः। अन्यथा नित्यादीनां फलशून्यत्वे प्रवृत्त्यभावः। नियोगस्यैव परमपुरुषार्थत्वात् हितसाधनबुद्धयैव प्रवृत्त्यंगीकारे नित्यकाम्यभेदो न घटते। फलकारणयागादौ रागतः प्रवृत्तिः इतिकर्तव्येषु विधिप्रयुक्ता काम्येषु, नित्येषु करणेतिकर्तव्यतयोरुभयोरपि विधित एव प्रवृत्तिरिति वैषम्ये स्थिते नियोगस्य फलरूपत्वेन यागादावपि रागत एव प्रवृत्तेः संभवात्। किं च फलं प्रति यागस्य करणत्वे श्रुत्यादिप्रमाणाभावः। यजेतेत्यादिना करणत्वस्य प्रकृतिप्रत्ययाभ्यामप्रतीतिः। फलशिरस्कनियोगस्यैव साध्यत्वम्। नाप्यर्थापत्तिः तत्र प्रमाणम्। नियोगसिद्धये यागस्य फलकरणत्वं न शक्यते अभ्युपगन्तुम्। यागानुष्ठानादेव नियोगसिद्धे तादृशकारणत्वकल्पना निरुपयोगा। नियोगसिद्धयैव फलस्यापि सिद्धेः। नापि नियोगस्य कृतिसाध्यत्वसिद्धये। यागस्य स्वर्गं प्रति साधनत्वाभाव इव करणत्वाभावोऽपि नियोगं प्रति करणत्वादेव कृतिसाध्यत्वम्। प्रवृत्तेरनुपपत्तिः करणत्वाभावे या शंकिता सा साधनत्वाभावेपि तुल्या। किं च साधनत्वाभावे साधकतमं करणमिति रीत्या तद्विशेषरूपकरणत्वमपि न स्यात्। साधनत्वाभावे अपि परोद्दिष्टकृतिव्याप्यत्वरूपकरणत्वांगीकारे नियोगेऽतिव्याप्तिः। तस्यापि स्वर्गादिफलोद्देशेन कृतिव्याप्यत्वात्। साक्षादिति विशेषणदानेऽपि इतिकर्तव्येषु प्रमाणादिषु अतिव्याप्तिः। उभयोः करणेतिकर्तव्ययोः नियोगं प्रति साधनत्वाविशेषे विभागानुपपत्तिश्च। सेतिकर्तव्यताकस्यैव करणत्वात् उभयत्र रागत एव प्रवृत्तेः, रागविधिप्रयुक्तत्वं प्रवृत्तिगतं करणेतिकर्तव्यविषये न संभवति। लोकेपि तथैव दृष्टत्वात्। एतेन श्येनाग्नीषोमीयवैषम्यमप्यपास्तम्। रागतः प्रवृत्तेः समानत्वात्। नियोगफलं संबंधभेदकृतवैषम्यमपि नास्ति करणे-(यागे) तिकर्तव्ययोः। सर्वेषामपि अविशेषेण नियोगेनैव प्राधान्येन संबद्धत्वात्। श्येनयागादौ निषेधानुप्रवेशादधर्मत्वेन इतरेषु तदभावाद् धर्मत्वेन च वैषम्यमिति चेत् न। नातिरात्रे षोडशिनमिति निषेधात्तस्यापि अनर्थत्वप्रसंगः। विधेः भावार्थफलयोः साध्यसाधनत्वबोधः भावार्थानुष्ठानबोधश्चेति व्यापारद्वये, श्येनादौ अननुष्ठापकत्वकृतभेदोऽस्तीति चेत् न। रागतः प्रवृतिः समानेति उक्तम्। श्येनवदग्नीषोमीये अप्यनर्थताप्रसक्तिश्च। नापि प्रायश्चित्तविधानेन भेदः। वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेदिति अनृतवदने विधित एव प्रवृत्तिः, अतः नैमित्तिकत्वे (न तु पापापाकरणाय) सारस्वतचरुविधानात्। (६ - ज) नियोगप्राधान्यखण्डनम् -- (२. १८४)

स्वर्गादिसाधनत्वान्नियोगस्य न प्राधान्यम्। तत्सुखशेषत्वाच्च। नियोगस्याचेतनत्वात्, स्वामिभृत्यदृष्टान्तवैषम्यञ्च। स्वर्गादिसुखस्य न नियोगशेषत्वम्। यदर्थं सर्वं यच्च नान्यर्थं तत्सुखम् इति सुखलक्षणात्। यूपं तक्षतीत्यादि प्रसिद्धपदसमभिव्याहारान्यथानुपपत्तिरूपार्थापत्तिगम्यत्वानंगीकारात् न नियोगस्य यूपाहवनीयादिवत् संबंधग्रहणोपपत्तिः। अंगीकारे अपूर्वत्वव्याघातश्च। लिङादेः क्रियातिरिक्तकार्याभि-धायित्वानुमानं क्रियाकार्यत्वानुमानपराहतम्। इष्टसाधनवादिवेदान्तिनं प्रति तत्रानुमाने गामानयेति दृष्टान्तस्य साध्यविकलत्वं च।

### ७ प्रामाण्यवादः - (पु १०२)

दोषाभावस्य अभावत्वान्न अकारणत्वम्। इति अभावस्य कारणत्वमंगीकृतम्। तत्र दृष्टान्तः -- विशेषदर्शनाभावो भ्रमहेतुः, प्रमाणाभावः प्रमेयाभावज्ञानहेतुः विहिताकरणं प्रत्यवायहेतुः। "स्वकाले यदकुर्वन् हि करोति यदचेतनः प्रत्यवायोऽस्य तेनैव इति भवनाथवचनमुदाहृत्य नयनप्रसादिनीकारेणैतदेव सुस्थापितम्। सिद्धान्ते तु - प्रकृतेतु ज्ञानसामग्रीत एव प्रमोद्भवसंभवे दोषाभावस्यापि तद्धेतुत्वकल्पना निष्प्रमाणिकेति सूचितम्।

(८) शक्तिः -- (पु २२६)

प्रतिबन्धान्यथानुपपत्तिः कार्यान्यथानुपपत्तिः उपादानोपादेयभावानुपपत्तिश्च शक्तौ न प्रमाणमिति कार्यौदासीन्यस्वभावादिभिः हेतुभिः तार्किकैरुक्तम्। तत्रैव शक्तिप्रमाणत्वेन मीमांसकानुमानमुदाहृतम् -- अस्तु तर्ह्यनुमानम् -- तथाहि विमतमजनकवशातो जनकदशायामतिशययागि कारकत्वात् कुण्ठकुठाखदिति अयं तिमिरारिप्रयोग इति नयनप्रसादिनी (पु २३१) मुरारेरिति भावद्योतनिका (५५)। प्राभाकराणाम् शक्तिः पदार्थान्तरम् (नप्र. ३३०.)।

प्रतिबन्धाभावस्य कारणत्वासंभवात् न कार्यार्थापत्तेरन्यथोपपत्तिः। सर्वत्र स्वभाववादप्रसक्तेः उपादानोपादेयभावनियमानुपपत्तिरपि शक्तौ प्रमाणमेव इति शक्तिवादः ऊरीकृतः। (२४५)

शक्तिवादिनोरपि प्राभाकरवद्भाट्टवेदान्तिनोः कर्मातींद्रियत्वस्य असिद्धिः। प्राभाकरस्य भ्रांतिमात्रप्रत्यक्षत्वं कर्मणः। (२४७)

अन्विताभिधानवादः -- (पु. २४२)

योग्येतरान्वितस्वार्थेषु पदानामावापोद्धारदर्शनात्तत्रैव सामर्थ्यमवसीयते। यद्यपि प्रतिप्रयोगं विशेषान्तरतत्संसर्गयोः व्यभिचारः तथापि योग्येतरान्वितस्य स्वार्थमात्रस्याव्यभिचारात् प्रथमावगतयोग्येतरान्वितस्वार्थाभिधानसामर्थ्यानुसारेण प्रयोगान्तरेष्वपि तथैव कल्प्यते। साहचर्यवशात् स्वार्थेषु प्रथमं स्मारकाणां पश्चादन्विताभिधायकत्वं स्वीक्रियते। अव्यभिचारात् गोपदं स्वार्थमात्रमेव स्मारयति नार्थान्तराणि। व्यभिचारात्। पदार्थविषयाणां प्रत्ययानां स्मृतित्वम्। ते अन्वितगोचराः न स्वरूपमात्रागोचराः पदार्थवादिनां भाट्टादीनामपि। अभिधानतः स्मारितमेव न वाक्यार्थान्वयि किं तु साहचर्यमात्रादपि यथा 'गंगायां घोषः' इत्यादौ तीरादिपदार्थानां मुख्यार्थसाहचर्यात् वाक्यार्थान्वयाः। स्वरूपमात्रेणैव पदेभ्यः स्मारिताः पदार्थाः साकांक्षादिमंतः पदैरन्विता अभिधीयन्ते। अभ्यासातिशयश्च पदार्थस्मरणहेतुः।

आकांक्षा प्रतिपत्तुर्जिज्ञासा। मानांतराधिगतत्वात् पदार्थानां न वाक्यार्थप्रत्यायकत्वम्। अनुमानादर्थापत्तेर्वा श्वेतोऽश्वो धावतीत्यादौ संसर्गावगमः। वाक्यार्थप्रत्ययस्य शब्दसामर्थ्याजन्यत्वे पदार्थाख्यं सप्तमं प्रमाणमभ्युपेयं स्यात् प्रत्यक्षादिषु तस्य अनन्तर्भावात्। शक्तित्रयकल्पनागौरवं च यथा स्वार्थानुभवजननशक्तिः पदानामेका, अर्थानां परस्परान्वयप्रत्यायनशक्तिरपरा, पदानां पुनः तदाधानशक्तिस्तृतीयेति। पदानां साहचर्येणार्थस्मारकत्वे तु शक्तिद्वयम्। अन्विताभिधानवादिनः पदानां योग्येतरान्वितार्थाभिधानसामर्थ्यमेकमेवेति लाघवं च। पदानां संस्करोन्मेषमात्रोपयोगान्नाभिधातृत्वम्। अन्यथा पदार्थानामपि स्ववाचकपदसंस्करोन्मेषकाणाम-भिधायकत्वप्रसंगः। इति।

खण्डनम् अभिहितान्वयवादरीत्या - (पु. २५७)

पदकदम्बके समभिव्याहृतपदार्थस्मृतीनामाकांक्षादिसहकारिणीनां अन्वयबोधकत्वं संभवति। पदार्थस्मरणानां पदावान्तरव्यापारत्वात् शब्दत्वमेव श्रुत्यादिवत् न तु सप्तमप्रमाणत्वम्। व्यापारव्यवधानादकरणत्वे यागादीनामपि अपूर्वव्यवधानेनाकरणत्वप्रसंगः। गुरुमतानुसारिणां लिंगप्रकरणादीनां श्रुतिकल्पनं विनैव शब्दप्रमाणान्तर्भावाभ्युपगमः। तेषामपि अर्थान्तरे तदन्वये स्वार्थे च पदशक्तित्रयकल्पनागौरवम्।

अर्थान्तरतदन्वययोः लक्ष्यत्वे अन्विताभिधानभंगप्रसंगः । पदानामेव पदार्थस्मारकाणामभिधातृत्वप्रसिद्धिः । पदस्मारितपदार्थानां परस्परान्वयप्रत्ययो लाक्षणिकः शाब्दश्च । भाष्यकारसंमतत्वात् अभिहितान्वयवाद एव श्रेयानिति । ''न च तद्गतानां पदार्थानां ब्रह्मस्वरूपविषये निश्चिते समन्वये अवगम्यमाने अर्थान्तरकल्पना युक्ता श्रुतहान्यश्रुतकल्पनाप्रसंगादिति'' ब्रह्मसूत्रशांकरभाष्यवाक्यमुदाहृतम् (१-१-४) तत्वदीपिकायाम् (२. २६७) । अस्मिन् विषये मदीयनिबन्धः द्रष्टव्यः ।

### (१०) भेदः -- (पु १४१)

वस्तुग्रहस्यैव भेदग्रहत्वात् । वस्तुस्वभावतया अनपेक्षदृष्टिदृष्टस्य सविकल्पके व्यवहारे प्रतियोगिसापेक्षत्वम् न तु ततः पूर्वम् । विद्यमानभेदयोः स्वरूपेण स्फुरतोरेव धर्मिप्रतियोगित्ववद् विशेषणविशेष्यत्वस्याप्युपपत्तिः भेदान्तरप्रतीतिमंतरेणैव । एवं प्रत्यक्षं भेदप्रमाणम् । लिंगविशेषस्य लिंगिविशेषप्रत्यायकत्वाद्नुमानमपि । आगमेनापि शब्दान्तरादिभिः कर्मभेदप्रतिपादकेन भेदः सिद्धः (पु. २५८) प्रत्यक्षदृष्टगवयसादृश्यविशिष्टपरोक्षगोविषयमुपमानमपि भेदं साधयति । तिलेभ्य एव तैलं पयस एव दधि इति व्यवस्थानुपपत्तिरूपा अर्थापत्तिरपि भेदे प्रमाणम् । योग्यानुपलब्धिरप्यन्योन्याभावरूपं भेदमुपपादयति । इदं स्वरूपभेदवादिनां सर्वेषां सामान्यतो मतम् येषु प्राभाकरोप्यतमः ।

### खण्डनम् -- (पु. २८५)

सर्वदापि प्रतियोगिसापेक्ष एव भेदः । स्वरूपभेदत्वे सप्रतियोगिकस्यैव भेदस्य स्वरूपे अन्तर्भावापत्तिः । अद्वैतप्रसंगश्च । प्रतियोगिनः तटस्थत्वे स्वरूपभूतभेदस्य अन्यनिरूप्यत्वानुपपत्तिः । विदारणात्मकभेदस्य वस्तुस्वरूपत्वे न किंचनैकं वस्तु स्यात् । अभेदैकार्थसमवायिन्या एकताया भेदेन विरोधात् । परमाणुरपि नैकः स्यात् । अन्यापेक्षं रूपं भेदो न स्वारसिकमित्यपि न घटते । भेदस्य स्वरूपत्वे धर्मिणि दृष्टे भेदस्यापि दृष्टत्वात् न संशयादीनामवकाशः स्यात् । निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वमपि । अपि च भेदोपजीवित्वात् प्रत्यक्षादिसर्वप्रमाणानि भेदं साधयितुं नालम् । इति ॥

### (११) साक्षिणि प्रमाणम् नास्ति --

न तावदर्थापत्तिः व्यभिचारिकरणजन्ये ज्ञानानां चैतन्यरूपमनुगतमनुसंधातारमन्तरेण प्रतिसंधानानुपपत्तिजन्या प्रमाणम् । ज्ञानानां स्वयंप्रकाशत्वात् तदाश्रयतया सिद्धस्य स्थिरस्यात्मनः पूर्वोत्तरकालीनज्ञानानुसंधानोपपत्तिः । एतेन प्रमातृप्रमाणप्रमेयप्रतीत्यन्यथानुपपत्तिरपि परास्ता । त्रिपुटीप्रत्यक्षवादे घटमहं जानामीति त्रितय-प्रतिभासोपपत्तेः इति ।

परिहारस्तु -- न च नित्यबोधमन्तरेण पूर्वापरबुद्धीनामनुसंधानासिद्धिः । ग्राहकतयासिद्धेः निराकृतत्वात् । आत्मनः ज्ञानस्वरूपत्वादेव । (पु. ५८९)

### (१२) प्रकीर्णसंग्रहः --

क) प्राभाकराणां सत्ताजातिर्नास्ति -- चि पु ३२६

ख) शक्तिः पदार्थान्तरमिति गुरुणाम् मतम् -- नयनप्र पु ३३०

ग) साक्षात्वं प्रत्यक्षस्य लक्षणमिति मीमांसकाः। जातिसांकर्यात् न तथेति तस्य खण्डनम्। -- चि पु ३७५-६

घ) सादृश्यं नाम पदार्थान्तरम्। न द्रव्यगुणकर्मादीनामेव सादृश्यव्यवहारहेतुत्वोपपत्तिः। सामान्यमेव सादृश्यमिति वादिभिः सादृश्यानंगीकारात् इति तत्खण्डनम् - चि पु ४०७-९ आकाङ्क्षा नाम जिज्ञासा जातिमात्रे गृहीतसंगतिकस्य व्यक्तौ अपर्यवसानवृत्त्या बोधकत्वमिति प्राभाकराः। चि ४२९

छ) यदप्युक्तम् -- अखण्डार्थता अनुपपन्नेति, केनैतद्दूषणमीरितम्? न तावद् वैयाकरणेन, सहि प्रातिपदिकार्थस्य प्रथमाविभक्तेश्च अव्यतिरिक्तार्थतामाह। बौद्धा अपि विज्ञानं क्षणिकमिति अव्यतिरिक्तार्थतामाहुः। प्राभाकरास्तु स्वरूपं भेदः निर्घटं भूतलमित्यादीनामखण्डार्थतामाहुः। स्वरूपभेदवर्तिनां सर्वेषामेतदेवोदाहरणीयम्।

*ऋजुविवरणम् १००३ पु*

चित्रग्वादावखण्डार्थत्वमवश्यमभ्युपेयं प्राभाकरादिभिः। चि १९६, नयन २६४ पु।

ज) मीमांसकपक्षेपि अनादिकालसंचितविरुद्धफलानां कर्मणामेकस्मिन् एव जन्मनि भोगानुपक्षया-न्मोक्षासंभवः। -- न्यायरत्नदीपावली ३९० पु।

# क्षेत्रज्ञं चापि मां विद्धि

डा. एम्.एल्. नरसिंहमूर्ति,

भगवद्गीता कर्म-भक्ति-ज्ञाननिष्ठात्वेन अथवा कर्मोपास्तिज्ञानकाण्डात्मना त्रिधा विभक्ता। प्रथमे काण्डे कर्मत्यागद्वारा त्वंपदार्थो विचार्यते। द्वितीये उपासनाकाण्डे भक्तिनिष्ठावर्णनसहकृता तत्पदार्थो विमृश्यते। तृतीये तु ज्ञानकाण्डे क्षेत्रक्षेत्रज्ञविवेचनपुरस्सरं जीवब्रह्मैक्यमवधार्यते। तथा च समग्रस्य गीताशास्त्रस्य 'तत्त्वमसि' इति महावाक्यार्थ एव प्रतिपाद्यो विषयः।

पदार्थज्ञानपूर्वकत्वात् वाक्यार्थज्ञानस्य, महावाक्यर्थज्ञानं च तत्त्वंपदार्थज्ञानाधीनम्। अत एव गीतायां प्रथमषट्के त्वंपदार्थं, द्वितीयषट्के तत्पदार्थं च प्रतिपाद्य अन्तिमषट्के वाक्यार्थनिष्ठोऽखण्डार्थः प्रादर्शि। तथा हि-

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥ [1]

इति त्रिगुणात्मिका क्षेत्रलक्षणा संसारहेतुत्वात् अपरैका, अन्या च जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मकत्वात् परा इति ईश्वरस्य द्वे प्रकृती सूचिते याभ्यां युक्ताभ्यामेव ईश्वरस्य ईश्वरत्वं जगदुत्पत्त्यादिहेतुत्वं च। तदेव प्रकृतिद्वयं क्षेत्रक्षेत्रज्ञशब्दाभिधेयं परस्परं विविक्तं निरूपयति -

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥ [2] इति

अहं ममेति यः एतद्वेत्ति अभिमन्यते तं क्षेत्रज्ञं प्राहुरित्यर्थः।

कुत एवमभिधीयत इत्युक्तौ पूर्वम् 'अद्वेष्टा सर्वभूतानाम्[3] इत्यादिना तत्त्वज्ञविशेषणानि उक्तानि, येन तत्त्वज्ञानेन विशिष्टाः परमात्मनः प्रिया भवन्ति 'ज्ञानी त्वात्मैव मे मतम्[4]' इत्युक्तज्ञानिनां ज्ञानं कीदृशमित्येतद्वक्तुमध्यायस्यास्यारंभः। क्षेत्रं शरीरं यो वेत्ति मनुष्योऽहं, ममेदं शरीरमिति, शरीरं नात्मा दृश्यत्वात् घटवत् इति स्वातिरिक्तेन वा, क्षेत्रं दृश्यत्वेन क्षेत्रज्ञं द्रष्टृत्वेन विदन्तीति तद्विदः क्षेत्रज्ञमाहुः। एवं देहेन्द्रियाद्यतिरिक्तं क्षेत्रज्ञमिति कथनेन तस्य पारमार्थिकस्वरूपपरब्रह्माभेदमाह 'क्षेत्रज्ञं चापि मां विद्धि[5] इति। क्षेत्रज्ञातारं दृश्यभिन्नं द्रष्टारं केवलं दृश्यान्यत्वेनैव न जानीहि सांख्यवत् परं मां चापि विद्धीति संबन्धः। मदभिन्नं चापि विद्धीत्यर्थः। चापीति निपातौ जीवस्याक्षरत्वज्ञानस्य शरीरादन्यत्वज्ञानेन समुच्चयार्थौ भिन्नक्रमौ। अथ वा चकारः क्षेत्रज्ञ

1. भ.गी. 7-4,5, 6
2. 13-1
3. भ.गी. 12.13
4. Ibid 17.18
5. Ibid 13-2

ज्ञानसमुच्चयार्थकः, अपिशब्दो एवकारार्थकः। सर्वक्षेत्रेषु द्रष्टारं क्षेत्राभिन्नं विद्धि, तं च सदसदादिशब्दप्रत्ययागोचरं मामसंसारिपरमेश्वरमेव विद्धि इति। भरतवंशोद्भूतत्वात् भारत इति, एवं क्षेत्रज्ञत्वमपि परमात्मनि कल्पितमिति भारत इत्यनेन ध्वन्यते। तदेवं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तज्ज्ञानं सम्यग्ज्ञानमित्यर्थः। अनेन क्षेत्रक्षेत्रज्ञयोः ज्ञेयत्वमभिप्रेतम्।

अयमत्राभिसंधिः - सर्वक्षेत्रेषु ब्रह्मादिस्तम्बपर्यन्तेषु शरीरेषु यः क्षेत्रज्ञः तत्तत्क्षेत्रतद्धर्मतत्कर्मतदवस्थानां च ज्ञाता वस्तुत एकोऽपि घटाद्युपाधिभेदेन आकाशवत् अविद्यया स्वात्मनि कल्पितोपाधिभिः सुखदुःखादिप्रत्ययैश्च-भिन्न इव प्रतिशरीरमहं प्रत्ययार्थतया स्थितः सर्वप्रत्ययसाक्षी यः तं सर्वक्षेत्रेभ्यः पृथग्भूतं तत्तत्क्षेत्रतद्धर्म-तत्कर्माद्यसंस्पृष्टं तत्तच्छब्दप्रत्ययागोचरम् आकाशवत् निराकारं निर्विकारं असङ्गचिद्रूपं सत्यज्ञानादिलक्षणं सर्वश्रुति समधिगम्यं मामिति विद्धीति। आत्मानं ब्रह्मेत्यवगच्छेत्यर्थः। 'अयमात्मा ब्रह्म'[1] इति श्रुतेः। सर्वक्षेत्रेषु अन्तर्यामिसूत्रात्मरूपेण स्थितत्वात् आत्मैक्यं सर्वक्षेत्रेषु अहमर्थत्वेन स्थित आत्मा ब्रह्मैवेति विजानीहीत्यर्थः।

ननु चापीति निपातद्वयश्रवणात् क्षेत्राद्विभक्तं क्षेत्रज्ञं मामेव विद्धीत्युक्त्वा ततः क्षेत्रमपि मामेव विद्धि; क्षेत्रं ह्यविद्याकार्यमित्यतः न तस्य पृथक्सत्ता इत्यत अधिष्ठाने ब्रह्मणि तत्कल्पितमिति क्षेत्रमपि मामेव विद्धीति। विशिष्टाद्वैतिनः क्षेत्रस्यापि परमात्मत्वं ब्रुवते। अद्वैतवेदान्तैकदेशिनां (शंकरानन्दानां) मते क्षेत्रस्य ब्रह्माभिन्नत्वमुच्यते। अन्यथा क्षेत्रस्य देहादिप्रपञ्चस्य ब्रह्मभिन्नत्वे ब्रह्मणः अद्वितीयत्वं न सिद्ध्यतीत्यद्वैतश्रुतिविरोधः, अतः द्वयोरपि ब्रह्मत्वमुच्यते। प्रमाणं चात्र 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म'[2] इति श्रुतिः।

परमिदं न भाष्यानुकूलं दृश्यते। आत्मानात्मविवेकज्ञानं मोक्षसाधनमिति भाष्यकृदाशयः। गीतायां च 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम'[3] इति वदता भगवताऽपि क्षेत्रक्षेत्रज्ञरूपदृश्यद्रष्टुरूपयोः अनात्मात्मनोः ज्ञानं मतमिति मुक्तिसाधनतया अभिप्रेतम्। क्षेत्रस्यापि ब्रह्माभिन्नत्वे आत्मानात्मविवेकज्ञानं तन्न भवतीत्यतः नेदं वाक्यस्यास्य तात्पर्यं भवितुमर्हति। अपि चैवमुच्येत चेद् विशिष्टाद्वैतमतोक्तविलक्षणं न भवति। किं च 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ,[4] इति पूर्वमुक्तम्। आत्माज्ञानमेव मृत्युः। स चात्मज्ञानेन निवर्त्यः।तस्मात् यादृशज्ञानं मृत्युसंसारनिवर्तकं येन तत्त्वज्ञानेन ज्ञानिनः अद्वेष्टृत्वादिपूर्वोक्तलक्षणलक्षिता भवन्ति तद्वक्तव्यम्। जीवात्मपरमात्मभेदभ्रमाधीनत्वात् सर्वानर्थस्य, जीवपरयोरभेद एव तेन विषयीक्रियते। जीवानां प्रतिक्षेत्रं भिन्नत्वात् संसारित्वाच्च असंसारिणा एकेन परमात्मना कथमभेद इति शङ्कायामुच्यते, भेदः संसारश्च अविद्याकल्पितानात्मधर्मत्वात् न जीवस्य तदस्ति। जीवे अविद्याकल्पितानात्मधर्मा अध्यारोपिता इति देहेन्द्रियान्तःकरणेभ्यः क्षेत्रेभ्यः पृथग्भूतः क्षेत्रज्ञः पुरुषो जीवः प्रतिक्षेत्रमेक एव निर्विकार इत्येतत् प्रदर्शनाय क्षेत्रक्षेत्रज्ञविवेकः क्रियते। पूर्वं सप्तमाध्याये 'भूमिरापोऽनलो वायु'[5] रित्यादिना भूम्यादिक्षेत्ररूपतया जीवरूपक्षेत्रज्ञतया च परापरशब्दवाच्ये द्वे प्रकृती निर्दिष्टे। प्रकृतिद्वयवतो ईश्वरस्य तत्त्वनिर्णयाय पुनः 'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च'[6] ''इत्यादिविशेषणविशिष्टज्ञानिनः मम प्रिया भवन्ति इत्यतः तज्ज्ञानाय क्षेत्रक्षेत्रज्ञविवेकः आवश्यकः। इदं शरीरं क्षेत्रं क्षतात् त्राणात् क्षेत्रं क्षिणोत्यात्मानमविद्यया, त्राति तं विद्यया, क्षरतीति वा क्षेत्रम् इति अनात्मत्वम भिहितं क्षेत्रस्य। 'एतद्यो वेत्ति तं प्राहुः'[7] इत्यनेन द्रष्टारमात्मानमाह। क्षेत्रं दृश्यं क्षेत्रज्ञो द्रष्टा इत्युक्तम्। एवं

1. बृह. 2-5-19. 2. श्वेता. 1-12. 3. भ.गी. 13-2.
4. bid 12 - 7. 5. भ.गी. 7-4 6. Ibid 12-13 7. Ibid 13-1

क्षेत्रक्षेत्रज्ञयोः स्वरूपमुक्त्वा तन्मात्रेण किमित्याकांक्षायां 'क्षेत्रज्ञं चापि मां विद्धि'[1] इत्यारभ्य जीवपरैक्यं तज्ज्ञानं च मुक्तिसाधनमित्याह। क्षेत्राद् भिन्न आत्मा इत्येवोच्येत चेत् सांख्येनापि तदुच्यत इति नापूर्वत्वं प्रामाण्यं वा सिध्येत्। अतः क्षेत्राद् भिन्न आत्मा इत्येव न, क्षेत्रज्ञं क्षेत्राद् भिन्नं मां चापि विद्धीत्यभिप्रायः । क्षेत्रं बाध्यत्वेन क्षेत्रज्ञं बाधावधिभूतत्वेन यज्ज्ञानं तज्ज्ञानं मम मतमित्यर्थः । क्षेत्रमात्मनि कल्पितं दृश्यं क्षेत्रज्ञश्च परमात्माभिन्नः प्रत्यगात्मा, येनैतौ क्षेत्रक्षेत्रज्ञौ विषयीक्रियेते तज्ज्ञानमेव मतं मम मुक्तिहेतुत्वेनाभिप्रेतमिति आत्मानात्मविवेकज्ञानमेवोक्तं भवति।

नन्विदमयुक्तम्; सर्वक्षेत्रेषु एक एवेश्वरो द्रष्टा नान्यतस्तद्व्यतिरिक्तो भोक्ता इति जीवस्येश्वरेऽन्तर्भाव इत्युच्येत तर्हि संसारालम्बनो हि जीवः, तस्य यदि ईश्वरेणैक्यं संसारित्वमीश्वरस्य स्यात् । जीवे नेश्वरान्तर्भावो युक्तः, संसारिणोऽन्याभावात् ईश्वरस्यापहतपाप्मत्वात् तद्विपरीतगुणत्वेन ग्रहणं नोपपद्यते संसारित्वस्यानिष्टत्वादित्यतः संसाराभावप्रसङ्गो वा । उभयाङ्गीकारे 'तयोरन्यः पिप्पलं स्वाद्वत्ति[2] 'अनश्नन्नन्योऽभिचाकशीति'[3] इत्यादि जीवेश्वरभेदबोधकश्रुतिवैयर्थ्यापत्तिः । किं च प्रत्यक्षेण संसारस्योपलभ्यमानत्वात् तदभावे प्रत्यक्षविरोधश्च । जीवेश्वरयोः विरूद्धधर्माक्रान्तत्वात् सर्वथा नैक्यं संभवति इति चेत्, न, ज्ञानाज्ञानयोः स्वरूपतः फलतश्च भिन्नत्वात् संसारित्वादिकमज्ञानफलम् जीवेश्वरैक्यमविरुद्धम् । ज्ञानाज्ञानयोः स्वरूपतः फलतश्च भिन्नत्वे 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता।'[4] 'श्रेयश्च प्रेयश्च मनुष्यमेतः'[5] इति श्रुतिः प्रमाणम्। संसारकारणीभूता अविद्या कार्येण सह विद्यया निवर्तते । तदुच्यते; 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः'[6] 'तमेवं विद्वानमृत इह भवति'[7] 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[8] 'विद्वान्न बिभेति कुतश्चन'[9] 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'[10] 'ब्रह्म वेद ब्रह्मैव भवति'[11] 'भिद्यते हृदयग्रन्थिः'[12] इत्यादिश्रुतिषु। स्मृतिषु च, 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः'[13] 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्'[14] इति। एवं च अनर्थनिवृत्तिः ज्ञानफलं अनर्थप्राप्तिरज्ञानफलमिति फलतो भेदः ज्ञायेत । तथा च क्षेत्रज्ञस्येश्वरस्यैव अविद्याकृतोपाधिभेदात् संसारित्वमिव भवति । ज्ञेयस्थः कर्तृत्वभोक्तृत्वादिलक्षणः संसारः ज्ञातरि अविद्यया अध्यारोप्यते तेन ज्ञेयधर्मेण ज्ञाता न दुष्यति।

ननु 'आत्मानं न जानामि' मनुष्योऽहमित्याद्यनुभवदर्शनात् ज्ञातुः धर्मोऽविद्या, तद्धर्मवान् ज्ञाता। तथा च ज्ञातुः संसारित्वं क्षेत्रज्ञः ईश्वरः असंसारीति विरुद्धम् इति चेत् करणदोषेण ग्रहीतुः दोषो न भवति, आवरणादिरूपा अविद्या अन्तः करणस्यैव धर्मः न तु क्षेत्रज्ञस्य। तथा चाविद्या न ज्ञातृधर्मः ज्ञेयत्वात् प्रदीपप्रकाशवत्। यज्ज्ञेयं तत्स्वातिरिक्तज्ञेयं यथा प्रदीपप्रकाशः । ज्ञाता न ज्ञेयधर्मवान् ज्ञातृत्वात् यथा देवदत्तो न मेयघटगतधर्मवान् । अविद्यादिः तत्त्वतो न ज्ञातृधर्मः व्यभिचारित्वात् स्थूलत्वकृशत्वादिवत्। अतः अविद्यायाः न ज्ञातृधर्मत्वम्। अत एव क्षेत्रज्ञस्य कालक्षयेऽपीश्वरत्वम्। तदुक्तं -

---

1) भ.गी 13-2
2) मुं. 3-1-1
3) Ibid
4) कठो - 1-2-4
5) Ibid 1-2-2
6) केनो. 2-5-
7) तै.आ. 2-1-3.
8) श्वेता. 3-8.
9) तैति. 2-9.
10) कठो 2-1-10
11) मुं.3-2-9.
12) Ibid 2-2-8
13) भ.गी. 5-15.
14) Ibid 5-16

अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ।
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥[1]

इति । अन्तः करणव्यतिरिक्तोऽहमिति प्रतीयमानो जीवः परस्मान्न भिद्यते चेतनत्वात् ब्रह्मवत् इति न्यायश्च ।

ननु 'नाहमीश्वर' इति जीवेश्वरभेदप्रत्यक्षसत्वात् श्रुतिस्मृतिन्यायेन तदैक्यं न युक्तमिति न वाच्यम् । नाहमीश्वर इति भेदानुभव इहेति परिच्छिन्नतया अहमात्मनः अनुभूयमानत्वात् अपरिच्छिन्नस्य निरुपाध्यात्मनः। परमार्थतः परिच्छेदासंभवात्, औपाधिकं परिच्छिन्नत्वम् । अत एव भेदस्याप्यौपाधिकत्वात् प्रत्यक्षस्य व्यावहारिकसत्तामङ्गीकृत्य श्रुत्यादिना तस्य पारमार्थिकसत्ता निराक्रियत इत्यतो नोपजीव्यविरोध : । अपि च ज्येष्ठत्वं बाध्यत्वे हेतुः न तु बाधकत्वे । उत्तरोत्पन्नेन शुक्तिज्ञानेन पूर्वोत्पन्नरजतज्ञानस्य बाधदर्शनात् । अतः प्रत्यक्ष श्रुत्यादिबाध्यं ज्येष्ठत्वात् रजतज्ञानवत् इति पर्यवस्यति । जीवेश्वरैक्ये शास्त्रस्य प्रत्यक्षादीनां चानर्थक्यमिति न शङ्क्यम् । विद्यावस्थायां चेदिष्टापत्तिः, अविद्यावस्थायां तु नानर्थक्यमद्वैतिभिरुच्यत इति न चोद्यः ।

ननु नात्र जीवेश्वरैक्यमुच्यते, किं तु 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'[2] इति वचनानुसारेण सर्वक्षेत्रेषु अन्तर्यामितया विद्यमानस्य स्वस्वरूपस्यैवैकत्वं प्रतिपाद्यते । सर्वभूतान्तर्यामी ईश्वरः एक एवेति ईश्वरैक्यविज्ञानमुच्यत इचि चेत् ,

न, ईश्वरः किं सावयवः सन् भूतनियामकः उत निरवयवः सन् अथवा उभयात्मकः सन्निति वक्तव्यम् । सावयवत्वे ईश्वरस्य घटादिवत् विकारित्वानित्यत्वादिदोषप्रसक्तिः श्रुतिविरोधश्च । निरवयवत्वे तु 'यः प्राणेन प्राणिति'[3] 'सत आत्मा सर्वान्तरः'[4] इति प्राणित्वप्राणनक्रियावत्वश्रवणात् अशरीरत्वानुपपत्तेः । तथात्वे 'अशरीरं शरीरेषु'[5] 'अप्राणो ह्यमनाः शुभ्र'[6] इत्यादिश्रुतिविरोधश्च । उभयात्मकत्वं तु न भवति विरोधात् । न हि सावयवत्वनिरवयवत्वयोः सामानाधिकरण्यं सिद्ध्यति । ईश्वरस्य क्षेत्रज्ञत्वे सुखदुःखादिभाक् भवेत्; तदा 'अनश्नन्न्योऽभिचाकशीति[7] इति श्रुतिविरोधः । ननु क्षेत्रज्ञस्येश्वरत्वेऽपि समानोऽयं दोष इति चेत् न, अविद्याध्यारोपितत्वात् क्षेत्रज्ञत्वस्य, अत एव जन्मादिकमप्यारोपितं, विद्यया तन्निवृत्तेः ब्रह्मात्मत्वमविरुद्धम् । क्षेत्रज्ञस्येश्वरत्वे --

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।[8]

---

1) भ.गी. 13-31,32 2) भ.गी. 18 -61 3) बृह. 3-4-1 4) Ibid
5) कठो 1-2-21 6) मुं. 2-1-2. 7) Ibid 3-1-1 8) भ.गी. 13-22,27,28,31.

शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते।
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते॥
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते।[1]

इत्यादिगीतावचनानि प्रमाणम्। क्षेत्रज्ञस्य ईश्वरत्वाननुभवे कारणं तु अज्ञानमेव 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः'[2] इत्युक्तेः। नापि क्षेत्रज्ञे ईश्वरत्वबुद्धिविधानं, ''त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि'[3] 'अहं ब्रह्मास्मि'[4] 'तत्त्वमसि'[5] ' तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं शिवात्मने'[6] 'शान्तं शिवमद्वैतं'[7] इत्यादौ स्पष्टरूपेण ऐक्यस्य प्रतिपादनात्। किं च 'अथ योऽन्यां देवतामुपास्ते'[8] 'मृत्योः स मृत्युमाप्नोति[9] इत्यादिभेदनिन्दादर्शनाच्च। तथा च विद्याविद्ययोर्वैलक्षण्याभ्युपगमात् क्षेत्रज्ञेश्वरैकत्वे ईश्वरस्य संसरित्वं संसाराभावप्रसङ्गो वा इत्यादि न चोद्यतां भजते। क्षेत्रज्ञे आपाद्यमानस्य दोषजातस्य ज्ञेयत्वोपपत्त्या क्षेत्रधर्मत्वमेव न तु क्षेत्रज्ञधर्मत्वं, तस्य द्रष्टृत्वात्। अपि च महाभूतानीत्यादिना ज्ञेयमात्रस्य क्षेत्रान्तर्भावकथनात् ''एतद्यो वेत्ति' इति क्षेत्रज्ञस्य ज्ञातृत्वनिर्णयात् ज्ञेयं सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ इत्यवधार्यतेऽत्र। ज्ञातुः जीवत्वमुपाधिकल्पितं, तस्यैव स्वरूपं परमात्माभिन्नमेव इति तत्त्वमसिवाक्यार्थस्य जीवब्रह्मैक्यस्यैव प्रतिपादनात् तत्रैव गीतायास्तात्पर्यम् इति शम्।

---

1) X.Ch. 13 - 32. 2) Ibid 5-15 3) वराहो. 2-34. 4) बृह. 1-4-10.
5) छां. 6-8-7. 6) वराहो -2-34. 7) मां. 7. 8) बृह. 1-4-10.
9) कठो 2-1-10.

# शाब्दापरोक्षविचारः

पण्डितप्रवर गोडा. सुब्रह्मण्यशास्त्री (राष्ट्रपतिसम्मानितः)

इह खलु धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः इति लोकशास्त्रप्रसिद्धिः, पुरुषेणार्थ्यमानत्वात् पुरुषार्थ इति व्युत्पत्या पुरुषकामनाविषयः पुरुषार्थ इत्युच्यते। पुरुषेण सुखं दुःखनिवृत्तिश्च काम्यत इति तयोरेव पुरुषार्थत्वम्। इतरेषां तु तत्साधनतया कामनाविषयत्वम्। पूर्वोक्तेषु चतुर्षु त्रयाणां सुखसाधनतया, दुःखपरिहारसाधनतया वा तेषु पुरुषार्थत्वव्यवहारः। परन्तु तैः साधितस्य सुखस्य साधनपरतन्त्रता अनित्यता सातिशयता च। मोक्षस्तु निरतिशयसुखरूपत्वात् अनर्थनिवृत्त्युपलक्षितात्मस्वरूपत्वाच्च स्वतः पुरुषार्थः न तु पुरुषार्थ साधनतया। तथाचोक्तं अविद्यास्तमयो मोक्षः सच बन्ध उदाहृतः। निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः। इति। मोक्ष इति पदमेव बन्धनिवृतिवाचकम्। बन्धश्चाविद्येति तन्निवृत्युपलक्षितनित्यज्ञानानन्तानन्दरूपात्मस्वरूपस्थितिरेव मोक्ष इति पूर्वोक्त वाक्याभ्यां ज्ञायते। अविद्या नाम अहमज्ञ इति प्रत्यक्षसिद्धा कर्तृत्वभोक्तृत्वादिरूपसंसारदोषवर्जिते नित्य निरतिशयानन्दरूपे आत्मनि तत्स्वाभाविकं रूपमावृत्य तत्र कर्तृत्वाद्यारोपसंपादिका आत्मस्वरूपसाक्षात्कार निवर्त्या सदसत्वादिभिरनिर्वचनीया भावरूपा प्रकाशनिवर्त्यतमो दृष्टान्तदृष्टान्तिता इन्द्रो मायाभिः पुरू रूप ईयते जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवति," "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव" इत्यादि श्रुतिस्मृतिप्रसिद्धा ॥ साच शुद्धे आत्मनि अन्तःकरणतद्धर्मकर्तृत्वाद्यपरोक्षभ्रमं जनयति। अपरोक्षभ्रमः अधिष्ठानतत्वसाक्षाकारेणैव निवर्तते यथा शुक्तिरूप्यभ्रमः शुक्तितत्व साक्षात्कारेण रज्जुसर्पभ्रान्तिः रज्जुतत्व साक्षात्कारेण निवर्तते तद्वत् अहं सत्यज्ञानानन्तानन्दस्वरूपं ब्रह्म न, अहं कर्ता भोक्ता सुखी दुःखी त्यादिः योयमात्मनि अपरोक्ष भ्रमः, सः आत्मतत्वसाक्षात्कारेण अहं सच्चिदानन्दस्वरूपब्रह्मैव नाहं कर्ता भोक्ता इत्यादि रूपेणैव निवर्तत इति वक्तव्यम्। "ब्रह्मविद्ब्रह्मैव भवति," "तरति शोक मात्मविदित्यादिश्रुतेः। ईदृश साक्षात्कारः कथमुत्पद्यते, किं च तत्कारणमिति यथामति संक्षेपेण अस्मिन् लघुप्रबन्धे पूर्वाचार्यग्रन्थाननुसृत्य विचार्यते।

तत्र केचित् इन्द्रिय जन्यं ज्ञानं प्रत्यक्षम्। ब्रह्मसाक्षात्कारे श्रवण-मन न निदिध्यासनसंस्कृतं मनः कारणम्। न च इन्द्रियजन्यत्वस्यप्रत्यक्षत्वे सुखादि प्रत्यक्षेऽव्याप्तिः। मनस इन्द्रियत्वाभावेन तज्जन्यत्वस्य तत्राभावात् सुखादीनां साक्षिवेद्यत्वात् अनुमितेर्मनो जन्यत्वेन तत्रातिव्याप्तिश्चेति वाच्यम्। मनस इन्द्रियत्वाभ्युपगमेन सुखादि प्रत्यक्षस्य मनोरूपइन्द्रियजन्यत्वेन तत्राव्याप्तेरभावात्। इन्द्रियत्वावच्छिन्नजनकताकजन्यत्वस्यैव प्रत्यक्षत्व रूपत्वेन अनुमितेर्मनस्त्वेनैव तज्जन्यत्वात् इन्द्रियत्वेन तज्जन्यत्वाभावान्नातिव्याप्तिः। ज्ञानसामान्यं प्रति मनस्त्वेनैव कारणत्वात् न च "यन्मनसा न मनुते" इति श्रुत्या मनोगम्यत्वस्य निराकरणात्तद्विरोध इति वाच्यम्। मनसैवानुद्रष्टव्यमिति श्रुत्यानुगुण्येन तदगम्यत्वश्रुतेः असंस्कृतमनोविषयत्वस्वीकारेण तद्विरोधाभावात्। तन्त्वौपनिषदमित्यादिश्रुत्या उपनिषद्गम्यत्वेपि मननादिसंस्कृत तदुपजीविमनोवेद्यत्वं ब्रह्मणो न विरुद्धम्। अपूर्वस्य वेदवेद्यत्वेपि तदुपजीव्यानुमानार्थापत्तिवेद्यत्ववत्। वेदानुपजीविमानान्तरगम्यत्वस्यैव वेदवेद्यत्वविरोधित्वात्। शास्त्रदृष्ट्याचातूपदेशो वामदेववत् इति सूत्रे शास्त्रदृष्टिरित्यस्य शास्त्राद् दृष्टिः शास्त्रदृष्टिः शास्त्रप्रयोज्यप्रमा, शास्त्रार्थध्यानजा मनोजन्या प्रमा इत्यर्थ इति न तत्सूत्रविरोध इत्याहुः।

विवरणानुसारिणस्त्वन्ये यद्यपि ब्रह्मैव प्रत्यक्षं यत्साक्षादपरोक्षाद् ब्रह्मेति'' श्रुतेः अपरोक्षादित्यस्यापरोक्षमित्यर्थः तथापि वृत्तीनां ज्ञानावच्छेदकतया ज्ञानव्यवहारभाजामपि प्रत्यक्षादिव्यवहारविषयत्वेन तत्र प्रत्यक्षं कीदृशमित्यालोचने अपरोक्षार्थविषयकज्ञानत्वं प्रत्यक्षत्वमुच्यते, विषयस्यापरोक्षत्वन्तु प्रमात्रभेदेन । सचाभेदः प्रमातृचैतन्यब्रह्मचैतन्ययोरकल्पितः साक्ष्यध्यस्तसुखादीनान्तु कल्पितः घटाद्यवच्छिन्नचैतन्यप्रमातृचैतन्ययोः इन्द्रियद्वारा बहिर्निर्गतान्तःकरणवृत्तिकृता भेदाभिव्यक्तौ घटाद्यवच्छिन्नचैतन्ये कल्पितानां घटादीनामपि प्रमातृचैतन्याभेदः सम्पद्यत इति आन्तराणां बाह्यानाञ्चापरोक्षत्वमिति तत्तद्विषयकज्ञानानामपरोक्षत्वम् अनुमित्यादिस्थले तु द्वाराभावेनान्तःकरणस्यानुमेयेन संबन्धाभावान्न प्रमातृचैतन्याभेदः इति अनुमितिरूपवृत्तेः अनुमेयांशे न प्रत्यक्षत्वम् । अनुमितिस्तु प्रत्यक्षैव चैतन्यरूपत्वात् । इत्थञ्च जातिरूपप्रमातुर्ब्रह्माभेदस्य श्रुति सिद्धत्वात् यत्साक्षादपरोक्षात् ब्रह्मेति श्रुत्या साक्षात्प्रमातृचैतन्यस्वरूपत्वादपरोक्षत्वं ब्रह्मण इति तत्वमसीत्यादि शब्दजन्यमपि तज्ज्ञानं प्रथममेवापरोक्षम् । शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्येपि स्वप्रकाशापरोक्षात्मन्यपरोक्ष ज्ञानजनने विरोधाभावात् । मनसः अनेकाग्रतादोषात् विपर्ययसंस्कारदोषाच्च प्रतिबद्धं शाब्दज्ञानं भ्रान्त्या परोक्षवदवभासते । तत्र अपरोक्ष ज्ञान मुद्दिश्य यज्ञदानादीनां मनन निदिध्यासनादीनां विधान सामर्थ्यात् यज्ञादिभिः मनसः शुद्धौ शमदमादिभिः विपरीतप्रवृत्तिनिरोधे मननेन प्रमेयसंभावनारूपगुणयुक्तं चित्तं ब्रह्मात्मविषय निदिध्यासनसंपादितैकाग्रतागुणात् परोक्ष्यभ्रमनिमित्तप्रतिबन्धनिरासेन शब्दस्य सहकारीभूत्वा अपरोक्ष निश्चयनिमित्तं भवति । तथाच शब्दादेवापरोक्षनिश्चय इत्याहुः । तेषाम् अयमभिप्रायः । अस्य उद्दालकस्य तत् तस्मात्, तत्वमसीत्युपदेशात् आत्मानं विज्ञातवान् श्वेतकेतुः इत्यर्थकं तद्धास्य विजज्ञावितिवाक्यम्, तस्मै मृदितकषायाय तमसपरं पारं दर्शयति तमसः अज्ञानप्रयुक्तात् परं विलक्षणं, पारं सर्वाधिष्ठानं निरवच्छिन्नानन्दं दर्शयति साक्षात्कारयति इति वाक्यं वेदान्तविज्ञानसुनिश्चितार्था इत्यादिवाक्यं च शब्दस्यापरोक्षज्ञानजनकत्वे प्रमाणम्। प्रथमवाक्यंहि अपरोक्षज्ञान मुपदेशाद्भवतीति प्रतिपादयति । वेदान्तविज्ञानसुनिश्चितार्था इत्यस्य वेदान्तवाक्यात् यद्विशेषविषयकं अद्वितीयत्वाद्युपलक्षणेन व्यावृत्ताधिष्ठानमात्रविषयकं ज्ञानं तेन सुनिश्चितः तदभिन्नस्यापरोक्षस्याप्रमात्वेनागृह्यमाणस्य विषयीकृतः अर्थः अखण्डब्रह्मात्मैक्यरूपो येस्ते इत्यर्थः । छान्दोग्य सप्तमप्रपाठकस्य तमसः पारं दर्शयतीति वाक्येन अविद्यानिवर्तकज्ञानस्यापरोक्षत्वोक्त्या तत्रैवषष्ठप्रपाठकस्थ विजज्ञाविति वाक्येपि विशब्दस्यापरोक्षज्ञानपरत्वनिश्चयो भवति । एवं आचार्यवान्पुरुषोवेदे'' त्यनेना चार्योपदेशजन्यज्ञानवत्पुरुषमुक्त्वा तस्य ''तावदेवचिरं यावन्न विमोक्ष्येऽथ संपत्स्ये'' इति वाक्येन तज्ज्ञानादेव कैवल्योक्त्यापि शाब्दमेवापरोक्षमिति ज्ञायते । न च ग्राममार्गोपदेष्टरि मार्गं दर्शयतीतिवत् परम्परया प्रयोजकतया औपचारिकं साक्षात्कारप्रयोजकत्वमुपदेशस्येति वाच्यम् । साक्षात्कारणत्वे बाधकाभावेन अत्रोपचारकल्पनाया अन्याय्यत्वात् । नारद-सनत्कुमाराख्यायिकायामुपदेशातिरिक्तकारणस्याप्रतीतेश्च । उपासनादेः चित्तैकाग्रतादि द्वारा ज्ञानप्रयोजकत्वमेव न कारणत्वम् । तत्वमस्यादिवाक्यस्यापरोक्षज्ञानाजनकत्वे अपरोक्षभ्रमनिवृत्तिर्नस्यात् । न च मनसैवापरोक्ष ज्ञानं भवतीति वाच्यम् । मनसः कुत्राप्यसाधारण्येन कारणत्वाभावात् । आत्मनः स्वप्रकाशत्वात् सुखादीनां च साक्षिवेद्यत्वेन तत्साक्षात्कारे मनसः कारणत्वासिद्धेः न च यथा परोक्षज्ञानजनके शब्दे अपरोक्षज्ञानजनकत्वं त्वया कलप्यते तथा अन्यत्राक्लृप्तं कारणत्वं मनसः कल्प्यते इति वाच्यम् । यतः शब्दस्य परोक्ष ज्ञाने कारणत्वं क्लृप्तम्, तज्जन्यज्ञाने अपरोक्षत्वमात्रं कल्प्यम्, मनसस्तु कारणत्वमपि कल्पनीयं तज्जन्य ज्ञानेऽपरोक्षत्वमपि कल्पनीयमिति विशेषात् । न च विमतः शब्दो नापरोक्षधीहेतुः शब्दत्वादिति अनुमानेन बाध

इति वाच्यम्। दशमस्त्वमसीत्यादौ व्यभिचारेणानुमानायोगात्। न च तत्रापीन्द्रियमेव करणं शब्दस्तु तत्सहकारीति वाच्यम्। अन्धस्यापि तद्वाक्यात् अपरोक्षभ्रमनिवर्तकस्य दशमोस्मीत्यपरोक्ष ज्ञानस्य दर्शनादिन्द्रियजन्यत्वस्य तत्रासम्भवात्।

अनावृतविषयकज्ञानत्वमेवापरोक्षत्वम्। घटादौ वृत्या आवरण भङ्गे सति अनावृतविषयकज्ञानत्वस्य घटादि ज्ञाने सत्वात्तस्य प्रत्यक्षत्वम्। अनुमित्यादिस्थले वृत्तेर्विषयदेशाप्राप्त्या आवरणभङ्गाभावे न तज्ज्ञानस्य नापरोक्षत्वम्। एवं तत्त्वमसीतिवाक्यजन्याखण्डाकारवृत्या आवरणभङ्गे अनावृतविषयकत्वेनैव शाब्दत्वेपि अपरोक्षत्वमिति। न च शब्दस्य साक्षात्कारकारणता बोधकं प्रमाणं नास्ति। मनसस्तु करणत्वे मनसैवानुद्रष्टव्यमिति श्रुतिरेव मानम्। तद्वास्यविजज्ञावित्यादि वाक्यं तु न स्पष्टं वाक्यस्य साक्षात्कारकारणत्वं प्रतिपादयतीति वाच्यम्। तन्त्वौपनिषदं पुरुषं पृच्छामीत्यादि वाक्यस्यैव प्रमाणत्वात्। उपनिषदि साधुरिति तद्धितश्रुत्या एव तदन्यासाधुत्वे सति तत्साधुत्वरूपसाध्वर्थे विहितायाः प्रमाणत्वात्, यन्मनसा न मनुते इति ब्रह्मसाक्षात्कारे मनसः कारणत्वनिषेधात्। यतो वाचो निवर्तन्ते इति श्रुत्या औपनिषदत्वश्रुत्यनुसारेण शक्त्या अबोधकत्वपरत्वात्। न च मनसैवानुद्रष्टव्यमिति श्रुत्यविरोधाय यन्मनसेति श्रुतेरपक्वमनोविषयत्वम् कल्पनीयमिति वाच्यम्। मनसः करणत्वे कल्पनाधिक्यस्य उक्तत्वात्। किं च कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्धी र्भीरित्येतत्सर्वं मनएवेति श्रुत्या मनसः वृत्तिरूपेण परिणामित्वप्रतीत्या उपादानत्वसिध्या करणत्वं वक्तुं न युक्तमिति तस्य ब्रह्म साक्षात्कारकरणत्वं न सिध्यति। न च इन्द्रियजन्यज्ञानत्वमेव प्रत्यक्षत्वं मनोऽपीन्द्रियमिति वाच्यम्। मनसइन्द्रियत्वे प्रमाणाभावात्। न च मन इन्द्रियं इन्द्रियत्वे बाधकाभावात् चक्षुर्वदित्यनुमानं प्रमाणमिति वाच्यम्। इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः इति श्रुत्या अर्थेभ्यः चकारादिन्द्रियेभ्यश्च मनसो भेदबोधनेन बाधकसत्वात्। एवं एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च इति श्रुतौ इन्द्रियेभ्यः पृथक् मनोग्रहणादपि मनसो नेन्द्रियत्वम्। अस्मिन्मते शास्त्रदृष्टयातूपदेशो वामदेववत् इति सूत्रे शास्त्राद्दृष्टिः शास्त्रदृष्टिः शास्त्रजन्यप्रत्यक्षमित्यर्थस्य साक्षाच्छास्त्रजन्यत्वरूपस्य सम्भवात् केषाञ्चिन्मते शास्त्रप्रयोज्यमित्यर्थस्य वक्तव्यतया एवं औपनिषदमित्यस्यापि अस्मिन्मते स्वारसिकतया योयमुपनिषत्स्वेवाधिगतः पुरुषः इत्यादि भाष्यानुगुण्यस्यापि सत्वेन तत्वमसीति वाक्यादेव श्रवण-मनन-निदिध्यासनादिसंस्कृतमनस्सहकृतादविद्यानिवर्तकाखण्डब्रह्मापरोक्षधीरुदेतीत्येतदेव मतं युक्तमिति निश्चिनुमः।

# अद्वैतसिद्धान्तरीत्या जीवन्मुक्त्युपपत्तिः । -

पण्डित राणी नरसिंहशास्त्री

वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽऽसीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामितं शङ्करमर्चिताङ्घ्रिम् ॥
अनादिमुखरूपता निखिलदृश्यनिर्मुक्तता
निरन्तरमनन्तता स्फुरणरूपता च स्वतः ।
त्रिकालपरमार्थता त्रिविधभेदशून्यात्मता
मम श्रुतिशतार्पिता तदहमस्मि पूर्णो हरिः ॥

स्वप्रकाशचिदभिन्नं सुखं पुमर्थः । तच्च विद्वदनुभवगम्यम् । अविद्योच्छेदोपलक्षितः पूर्णानन्दरूप आत्मामोक्षः। अविद्योच्छेदश्च :- तदीयस्थूलसूक्ष्मरूपाश्रयकालपूर्वत्वाभावः । सर्वदृश्याश्रयकालपूर्वत्वाभावरूपेण दृश्योच्छेदेन व्याप्यः मोक्षस्य दृश्योच्छेदोपलक्षितात्मरूपकैवल्यरूपत्वात् । मुक्तिश्च द्विधा - जीवन्मुक्तिः, विदेहमुक्तिश्चेति ।

ज्ञानजनकप्रारब्धकर्माधीनदेहपातोत्तरकालिकी
चरमतत्वज्ञानसाध्या मुक्तिः विदेहमुक्तिः ।

तदुक्तं ज्ञानामृते

अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ।
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ॥ इति

अविद्याया अस्तमयः - संस्कारादिकार्यरूपेणाप्यनवस्थानम् । सा स्थूलरूपा, संस्कारादिरूपा च । विदेहताकालीनोऽस्तमय एव मुख्यो मोक्षः । ज्ञातत्वोपलक्षित आत्मापि विदेहताकालीन एव । जीवन्मुक्तिकालीनस्य ज्ञातत्वोपहितत्वस्यापि कदाचित्सम्भवेन सर्वदा ज्ञातत्वोपलक्षितत्वस्यासम्भवात् । सर्वदा ज्ञातत्वोपलक्षितस्यात्मन एव मोक्षरूपत्वम् । जीवन्मुक्तौ तु संस्कारादिरूपेण मोहसत्वम् । जीवन्मुक्तश्च तत्वज्ञानेन निवृत्ताविद्योऽप्यनुवृत्त-प्रारब्धकर्माधीनदेहादि प्रतिभासः । निवृत्तसर्पभ्रमस्यापि संस्काराद्भयकम्पानुवृत्तिवत् दण्डसंयोगनाशेऽपि चक्रभ्रमणवच्च संस्कारानुवृत्ते रविद्यानिवृत्तावपि तत्कार्यानुवृत्तिसम्भवात् । निस्सारित पुष्पायां सम्पुटिकायां पुष्पवासनादर्शनवत् संस्कारः कार्योऽपि ध्वंस इव निरुपादानकः । अविद्येव च शुद्धात्माश्रित इति नाविद्यासापेक्षः न च

"ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते ऽ यनाय ॥"

इत्यादिस्मृतिश्रुतिभिः सर्वकर्मणां ज्ञाननाश्यत्वप्रतिपादनात् कथं ज्ञानिनः प्रारब्धतदधीनदेहादेः स्थितिरिति वाच्यम्? । प्रारब्धान्यकर्मणामेव ज्ञाननाश्यत्वस्याभ्युपगन्तव्यत्वात् । इषुवेगन्यायेन प्रारब्धस्य भोगैकनाश्यत्वात् ।

“तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ” इति ब्रह्मसूत्रमपि प्रारब्धान्यपूर्वसञ्चितकर्मणां नाशः आगामिकर्मणामश्लेषश्च ज्ञानप्रयुक्त इति बोधयति । यद्वा अविद्यालेशानुवृत्त्या देहाद्यनुवृत्तिः । आकारस्यैव लेशशब्दार्थत्वात् ।

“इन्द्रो मायाभिः पुरुरूप ईयत” इति श्रुत्या अविद्याया अनेकाकारत्वावगमात् । आकारिनिवृत्तावप्याकारस्य अनुवृत्तिः व्यक्तिनिवृत्तावपि जातेरिव । आकारपदार्थश्च शक्तिः । अनेकशक्तिमदविद्यायाः प्रपञ्चे पारमार्थिकत्वभ्रमहेतुशक्तेः प्रपञ्चे अर्थक्रियाहेतुशक्तेश्च प्रारब्धकर्मसमकालिक तत्त्वसाक्षात्कारेण निवृत्तावपि अपरोक्षप्रतिभासयोग्यार्थाभासजनिकायाः शक्तेरनुवृत्तेः तद्वती अविद्यापि तिष्ठत्येवेति न शङ्कावकाशः । न चाविद्यायां कथं मुक्त इति व्यपदेशः? । शक्तिनाशमात्रात् । तथा च श्रुतिः “तस्याभिध्यानात् योजनात्तत्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः” इति, योजनात् श्रवणादीनां भूयो भूयोऽभ्यासात् अभिध्यानात् । तत्वभावशब्दितसाक्षात्कारादुक्तशक्तिरूपविश्वमायानिवृत्तिः । अन्ते प्रारब्धभोगान्ते । अवशिष्टशक्तिमदज्ञानतत्प्रयुक्तदेहादिरूपविश्वमायानिवृत्तिर्भूयश्चेत्यर्थः । यद्वा अज्ञानस्य सूक्ष्मावस्थालेशः । यथा यागे गतेऽपि यागसूक्ष्मावस्थारूपमपूर्वं यागे साधनतानिर्वाहकमङ्गीक्रियते तथा अज्ञाने निवृत्तेऽपि तत्सूक्ष्मावस्थारूपो लेशो देहादिप्रतीत्यनुकूलः स्वीक्रियते । स्वर्गजनकताग्राहक श्रुतेरिवात्राऽपि ।

“तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य” इति जीवन्मुक्तिबोधकश्रुतेरेवात्रापि प्रमाणत्वात् । तस्मादविद्यालेशानुवृत्त्या जीवन्मुक्तिरूपपन्नतरा ।”

अत्रोपोद्बलकतया श्रीमद्भागवतस्थं वचनं प्रमाणतया दीयते ।

“देहं च नश्वरमवस्थितमुत्थितं वा ।
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।
देवादुपेतमथ दैववशादपेतं
वासो यथा परिवृतं मदिरामदान्धः ।
दोहोऽपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रति समीक्षत एव साधुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः ।
स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥

अत्र श्रीधरी - ननु च यः परिपाल्यमानोऽपि मुमूर्षति तं चेन्न पश्यति तर्हि पतेदेव नेत्याह दैववशेन गच्छन् स्वारम्भकं कर्म यावदस्ति तावत्पर्यन्तं प्रतिसमीक्षत एव साधुः प्राणेन्द्रियसहितः । ननु तर्हि तस्मिन् कदाचिदासज्जेतापि, नेत्याह, स्वाप्नं स्वप्नतुल्यम् अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येन अत एव प्रतिबुद्धं ज्ञातं परमार्थं वस्तु येन सः । तथाच श्रुतिः - “तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य” इति । “यावदधिकारमवस्थितिराधिकारिकाणाम्” इति ब्रह्मसूत्रे भगवत्पादैः इत्थमुपवर्णितम् । तेषामपान्तरतमः प्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानामधिकारतन्त्रत्वात् स्थितेः । यथाऽसौ भगवान् सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसान उदयास्तमयवर्जितं कैवल्यमनुभवति ।

"अथ ततऊर्ध्वमुदेत्य नैवोदेत नास्तमेतैकल एव मध्ये स्थाता" इति श्रुतेः। एवमपान्तरतमः प्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्तास्सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते। तदवसाने चापवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येणैव गृहादिव गृहान्तरमन्यमन्यं देहं सञ्चरन्तः स्वाधिकारनिर्वर्तना परिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वान्निर्माय देहान् युगपत् क्रमेण वा अधितिष्ठन्ति। न चैते जातिस्मरा इत्युच्यन्ते, "त एवै ते" इति स्मृतिप्रसिद्धेः। पूर्वदेहनामप्रत्यभिज्ञाहीनाः परतन्त्राः साभिमाना जातिस्मराः। आधिकारिकास्तु पूर्वनामानः सतन्त्रा निरभिमाना इति वैषम्यम्। प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः।

"तस्य तावदेव चिर" मिति शरीरपातावधिक्षेपकरणात्। तस्मादुपपन्ना यावदधिकारमवस्थिति-राधिकारिकाणाम्। न च ज्ञान फलस्यानैकान्तिकता। तथा च श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्यणामिति। प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहशङ्कानुपपत्तिः। कर्मफलेहि स्वर्गादावनुभवानुरूढे स्यादाशङ्का भवेद्वा न वेति। अनुभवारूढं तु ज्ञानफलम्। "यत्साक्षादपरोक्षाद्ब्रह्म" इति श्रुतेः। "तत्त्वमसि" इति च सिद्धवदुपदेशात्। नहि तत्त्वमसीत्यस्य अर्थस्त्वं मृतोभविष्यसीत्येवं परिणेयः। "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे" ति च सम्यग्दर्शन-समकालमेव तत्फलं सर्वात्मत्वं दर्शयति "तस्मादैकान्तिके विदुषः कैवल्यसिद्धिः। इत्थं चेदमायातंविदुषो देहपातावधि श्रुतेरनुभवाच्च ज्ञानस्यावारकाज्ञानांशनिवर्तकस्य प्रारब्धविक्षेपस्थित्यनुकूला ज्ञानांशनिवर्तनसामर्थ्याभावसिद्धेः भोगेनैव प्रारब्धकर्मक्षय इति। भगवतोऽपि लीलाविग्रहस्वीकारेण ज्ञानोपदेशसिद्धिः। गुरुशिष्यादिपरम्परा-भाष्यादिग्रन्थरचनापरम्परायाश्चाविच्छेदसिद्धिरित्यपि बोध्यम्। एतत्सर्वं सूचयामासुर्भगत्पादाः।

"विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः॥"

इत्यादिना। योगिभिरपि सम्प्रज्ञातासम्प्रज्ञातसमाधिनिरूपणद्वारा जीवन्मुक्तिरभ्युपगम्यते। तथाच पातञ्जलसूत्राणि। "योगश्चित्तवृत्तिनिरोधः" तदाद्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्र। तदा सकलचित्तवृत्तिनिरोधकाले द्रष्टुः दृग्रूपस्य पुरुषस्य स्वरूपेऽवस्थानम्। नतु बुद्धिवृत्तौ प्रतिबिम्बितत्वम्।

"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।
योगस्तद्वृत्तिरोधश्च ज्ञानं सम्यगवेक्षणम्॥"

असाध्यःकस्य चिद्योगःकस्य चित्तत्व विश्चयः। इति उक्तं हि पतञ्जलिना "निर्विचारवैशारद्ये ऽध्यात्मप्रसादः।" "ऋतं भरा तत्र प्रज्ञा" "श्रुतानुमानाभ्यामन्यविषया विशेषार्थत्वादिति। निर्विचारः सूक्ष्मवस्तुविषयकनिर्वि-कल्पसमाधिः। तस्य वैशारद्ये पाटवे सति अध्यात्मप्रसादः अत्यन्तसत्वोद्रेको भवति। ततः ऋतं भरा सत्यमेव गृह्णती प्रज्ञा जायते। सा च शब्दानुमानविषयाभ्यामन्यविषया शब्दानुमानग्रहणायोग्य विशेषविषयत्वात्। प्रारब्धकर्मापेक्षयापि समाधेर्बलवत्त्वेन तन्नाशकतया दुःखं नोत्पद्यत एव। अत एवाणिमाण्डव्यादीनां समाधिस्थानां

चोरबुद्धया शूलाग्रपातितानामपि न दुःखमुत्पन्नम् । प्रत्युत समाधिमाहात्म्येन तदपेक्षयाप्युत्कृष्टसुखतेति । महाभारतादावुक्तम् । किञ्च भगवद्गीतासु जीवन्मुक्तस्य स्थितप्रज्ञस्य लक्षणान्युच्यन्ते । अत्रेयं भगवत्पादशैली विम्रष्टव्या । यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां । प्रवृत्तो यश्च कर्मयोगेन तयोः स्थितप्रज्ञस्य, प्रजहातीत्यारभ्य अध्यायसमाप्तिपर्यन्तं स्थिप्रज्ञलक्षणं साधनं चोपदिश्यते । सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते । यत्नसाध्यत्वात् । यानि यत्नसाध्यानि लक्षणानि च भवन्ति तानि श्रीभगवानुवाच। "प्रजहाति यदा कामान्" इतित्यादि आ अध्यायपरिसमाप्ति । प्रश्नेऽपि "स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव" इति श्लोकव्याख्यावसरे स्थिता प्रतिष्ठिता, अहमस्मि परं ब्रह्मेति प्रज्ञा यस्य सः । समाधिस्थस्य समाधौ स्थितस्येति व्याख्यानेन विद्वदनुभवगम्यं ब्रह्मतत्वं सम्यङ्निरूपयन्ति भगवत्पादाः जीवन्मुक्तिविवेकोक्तदिशा जीवन्मुक्तिलक्षणमीषन्निरूप्यते ।

"यथास्थितमिदं विश्वं यस्य व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥"

विद्यत एव देहेन्द्रियादिव्यवहारः गिरिनद्यादिकं च अनस्तंगतत्वात् परमेश्वरेणानुपसंहृतत्वात् यथापूर्वमवतिष्ठमानं सत्सर्वैरन्यैः प्राणिभिर्विस्पष्टमवलोक्यते । जीवन्मुक्तस्य तत्प्रत्यायकधीवृत्त्यभावात्सुषुप्ताविव सर्वमस्तंगतं भवति । स्वयंप्रकाशमानचिद्व्योम केवलमवशिष्यते बुद्धस्य । सुषुप्तौ तात्कालिकधीवृत्त्यभावसाम्येऽपि भाविधीवृत्तिबीजस्य सद्भावात् न जीवन्मुक्तत्वम् ।

"नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ।
यथा प्राप्ते स्थितिर्यस्य स जीवन्मुक्त उच्यते ॥
यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥"

चक्षुरादीन्द्रियाणां स्वस्वगोलकेष्ववस्थानेन उपरत्यभावात् जागर्ति । मनोवृत्तिरहितत्वात् सुषुप्तिस्थः । अतएवेन्द्रियैरर्थोपलब्धिरित्येतस्य जाग्रतो लक्षणस्याभावाज्जाग्रन्न विद्यते । सत्यपि बोधे कामादिभि र्धीदोष वासनाराहित्येन वृत्तिराहित्येन तद्दोषाभावान्निर्वासनत्वम् ।

रागद्वेषभयादीनामनुरूपं चरन्नपि । योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥

रागानुरूपं भोजनादिप्रवृत्तिः । द्वेषानुरूपं बौद्धकापालिकादिभ्यो विमुखत्वम् । भयानुरूपं सर्पव्याघ्रा-दिभ्योऽपसरणम् । आदिशब्देन मात्सर्यानुरूपमितरयोगिभ्य आधिक्येन समाध्यनुष्ठानं सत्यपि व्युत्थानदशायामी-दृशाचरणे पूर्वाभ्यासेन प्रापिते प्रत्यक्तत्वे विश्रान्तचित्तस्य कालुष्यरहितत्वादत्यच्छत्वम् । यथा व्योम्नि धूलिमेघादियुक्तेऽपि निर्लेपस्वभावत्वादतिशयेन स्वच्छत्वम् तद्वत् ।

"यस्य नाहं कृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥
यस्मान्नोद्विजते लोको लोकान्नोद्वजते च यः ।
हर्षामर्षभयान्मुक्तः स जीवन्मुक्त उच्यते ॥

शान्तसंसारकलनः कलावानपि निष्कलः ।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥''

शत्रुमित्रमानावमानादिविकल्पाः संसारकलनाः शान्ता यस्य सः । चतुष्षष्टिविधाः कला तत्सद्भावेऽपि तदभिमानव्यवहारयोरभावान्निष्कलत्वम् । चित्तस्य स्वरूपेण सद्भावेऽपि वृत्त्यनुदयान्निश्चित्तत्वम् ।

''यः समस्तार्थजातेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥

परगृहे विवाहोत्सवादौ स्वयं गत्वा तत्प्रीत्यै तदीय कार्येषु व्यवहरन्नपि लाभालाभयोर्हर्षविषादरूपं बुद्धिसन्तापं न प्राप्नोति यथैवमयं मुक्तः स्वकार्येऽपि शीतलः । न केवलं सन्तापाभावच्छीतलत्वम् । किन्तु पूर्णस्वरूपानुसन्धानादपि। एते च जीवन्मुक्तस्थितप्रज्ञ भगवद्भक्तगुणातीतातिवर्णाश्रमि युक्तमुन्यादिसंज्ञाभिः व्यवह्रियन्ते । जीवन् जनदृष्ट्या प्राणधारणं कुर्वन् स्वदृषा मुक्तः बन्धहीनो जीवन्मुक्तः । भगो लोकदृष्ट्या षड्गुणैश्वर्यसमूहो विद्यते यस्य स भगवानद्वैतः परमात्मा तं भजते सार्वदिकस्फूर्त्त्या स्वात्मरूपत्वेन सेवते इति भगवद्भक्तः ।

भगवत्पादैरपरोक्षानुभूतावित्थमुक्तम् ।

''रज्जुरूपे परिज्ञाते सर्पखण्डं न तिष्ठति ।
अधिष्ठाने तथा ज्ञाते प्रपञ्चः शून्यतां गतः ॥
देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कुतः ।''

ननु जीवन्मुक्तस्य ज्ञानिनः प्रारब्धाभावे सति ''अत्रब्रह्म समश्नुते,'' ''तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य'' इति श्रुतिः प्रारब्धं किमर्थं वक्तीति चेदुच्यते ।

''अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ।'' श्रुतिः अज्ञानिजनबोधार्थं प्रारब्धं वक्तीत्यर्थः । ज्ञानेन सर्व व्यवहारकारणे ऽ ज्ञाने नष्टे सति ज्ञानिनः कथं व्यवहारः? इत्यज्ञानिभिराक्षिप्ते प्रारब्धादिति तद्बोधार्थमिति किं तर्हि ज्ञानिबोधार्थं वक्तिश्रुतिरिति चेदुच्यते -

''क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।
बहुत्वं तन्निषेधार्थं श्रुत्या गीतं च यत्स्फुटम् ॥
''भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परापरे ॥

इति श्रुत्या कर्माणीति बहुत्वं स्फुटं यद्गीतं तत् तन्निषेधार्थं प्रारब्धाभावप्रतिपादनार्थम् । अन्य सञ्चितक्रियमाणापेक्षया ''कर्मणी'' इति द्वित्वं गेयम् । तथा न गीतम् । अतो ब्रह्मसाक्षात्कारात् चिज्जडग्रन्थिभेदेनसञ्चित क्रियामाणप्रारब्धाख्यत्रिविधकर्मक्षयान्ते परमपुरुषार्थं ज्ञानिबोधार्थं श्रुतिर्वक्तीति भावः ।

उच्यतेऽज्ञैर्बलाच्चेत्तदानर्थद्वयागमः ।
वेदान्तमतहानं च यतो ज्ञानमिति श्रुतिः ॥

उक्तवैपरीत्ये बाधकमा हएतत्प्रारब्धम्, अज्ञैः श्रुतितात्पर्यानभिज्ञैः, बलात् अविवेकसामर्थ्याच्चेदुच्यते यथार्थतया प्रतिपाद्यते, चकाराद्द्वयात्मानं, न पश्यन्ति तदा अनर्थद्वयागमो दोषद्वयप्राप्तिः । तत्र प्रारब्धरूपस्य द्वैतस्याङ्गीकारे

अनिर्मोक्षप्रसङ्ग एको दोषः। मोक्षाभावे ज्ञानसम्प्रदायोच्छेदरूपो द्वितीयो दोषः। न केवलं दोषद्वयप्राप्तिः। अपितु वेदान्तमतहानं च। वेदान्तमतस्याद्वैतस्य हानं त्यागो भविष्यति। प्रारब्धग्रहणरूपस्य द्वैतस्य याथार्थ्यादित्यर्थः। तर्हि किं प्रतिपत्तव्यम्। अत आह यतो यस्याः श्रुतेः सकाशात् ज्ञानं भवति तादृशी सा श्रुतिः ग्राह्येति शेषः। सा श्रुतिस्तु

''तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्यायेद्बहून् शब्दान्वाचो विग्लापनं हि तत्॥

धीरो विवेकी ब्राह्मणः ब्रह्म भवितुमिच्छुः तमेव वेदान्तप्रसिद्धमात्मानं विज्ञायादावुपदेशवतः शास्त्रतश्च ज्ञात्वानन्तरं प्रज्ञां शास्त्राचार्योपदिष्टविषयामपरोक्षानु भवपर्यन्तां जिज्ञासापरिसमाप्तिकरीं कुर्वीत बहून् कर्मोपासनाप्रतिपादकान् शब्दान् वाक्य सन्दर्भान्नानु ध्यायेत् न चिन्तयेत्। तदद्वैतशास्त्र पठनं वाचो विग्लापनम्, विशेषेण श्रमकरम्। हीति सर्वानुभवसिद्धम्। अत्रोपोद्बलकतया श्रीमद्भागवतीयौ श्लोकावुपनिबध्येते

''आत्मानमन्यञ्च स वेद विद्वनपिप्पलादो न तु पिप्पलादः।
योऽविद्ययायुक्सन्नित्यबद्धो विद्यामयो यस्स तु नित्यमुक्तः।

देहस्थोऽपि न देहस्थो विद्वान्स्वप्नाद्यथोत्थितः।
अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा॥

विद्वान्मुक्तः संस्कारवशेन देहस्थत्वेन प्रतीयमानोऽपि अविद्वज्जनदृष्ट्या देहस्थो न भवति। यथा स्वप्नादुत्थितः स्मर्यमाणस्वप्नस्थितोऽपि तत्रस्थो न भवति। तद्गतसुखदुःखाद्यभावात्तद्वत् तथा वस्तुतः अदेहस्थोऽपि कुमतिरविद्वान् देहस्थः तन्निमित्तसुखदुःखभाक्। यथा स्वप्नदेहगत इति शम्।

# मोक्षस्वरूपविमर्शः

प्रो. सुधांशुशेखरशास्त्री

वन्देगुरुपदद्वन्द्वमवाङ्मानसगोचरम्।
श्वेतरक्तप्रभाभिन्नं शिवशक्त्यात्मकं परम्॥

## उपक्रमः

इह खलु मोक्षविचारः प्रस्तूयते। यतो धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थ; नित्यत्वे सति निरतिशयत्वात्। नित्यश्च मोक्षः, "न स पुनरावर्तते" छा. ६४-८-१५-१ इति श्रुतेः। "नित्यश्च मोक्षः सर्वैर्मोक्षवादिभि रभ्युपगम्यते" इति भाष्योक्तेश्च।

## मोक्षसामान्यनिर्वचनम्

तत्रावसानार्थकमोक्षधातोर्भावे घञि कृते निष्पन्नस्य मोक्षशब्दस्याभाव एवार्थः प्रतीयते। अवसानशब्दस्य "विरामोऽवसानम्" वावसाने" इत्यादि पाणिनीयसूत्रेषु अभावार्थे प्रयोगदर्शनात्। तत्र कस्यायमभाव इति प्रतियोगिजिज्ञासायां तादृशः प्रतियोगी ग्राह्यो यः कस्यापि प्राणभृतः स्वेष्टतयाऽभिप्रेतो न स्यात्। अभावमेव च सर्वेऽपि यस्याभिलषेयुः। ईदृशञ्च पारिशेष्याद् दुःखमेव। न च तदपि कुन्त्या इष्टतयाऽभिप्रेतमेव "विपदः सन्तु नः शश्वत् तत्र जगद्गुरोरित्युक्तेरिति वाच्यम् तत्रापि "अपुनर्भवदर्शनमितिशेषोक्त्या श्रीकृष्णदर्शनस्यैवाभिप्रेतत्वे तात्पर्यात्। तथा च दुःखाभाव एव यथाश्रुतमोक्षशब्दस्यार्थः। तत्र कस्य दुःखस्याभावः? न वर्तमानस्य, तस्योपभोगादेव संक्षपात्, नापि चातीतस्यातीतत्वादेव तद्धानार्थस्य प्रयासस्य वैफल्यात्, अपि त्वनागतस्यैव तस्य। तदाह भगवान् पतञ्जलिः - "हेयं दुःखमनागतम्" इति। ईदृशस्य मोक्षस्य साधनं तत्त्वज्ञानम्। तच्च दर्शनशास्त्रलक्षणादिसाध्यम्।

एवञ्च मोक्षसामान्ये न कस्यापि विप्रतित्तिः। सर्वेषामेव दर्शनाचार्याणां प्रायः स्वाभिमतदर्शने मोक्षोद्देश्येनैव प्रवृत्तिर्जायमाना दृश्यते। कृत्स्नमपि च दर्शनशास्त्रं मोक्षप्रयोजनकमेव। मोक्षविशेषस्वरूपन्तु स्वस्वाभिमतप्रमाणैर्यस्य यत्साधायितुं शक्यमात्मैक्यमात्मनानात्वं वाऽऽत्मानात्मनोरैक्यं वा भेदो वाऽऽत्मनः स्वाभाविकं भोक्तृत्वमभोक्तृत्वं वा तदनुसारेण तेनाङ्गीक्रियते। तत्र कस्य दर्शनकारस्य कीदृशं मोक्षस्वरूपमभिमतं तत्संक्षेपतोऽत्र वर्णयामः।

## चार्वाकमतम्

तत्र प्रथमं प्राप्तमतिस्थूलमतिमद्भिरप्यवगम्यमानतया चार्वाकसिद्धान्तन्तावदवलोकयामः। चार्वाकसिद्धान्ते प्रत्यक्षमेवैकं प्रमाणम्, तेन प्रमाणेन सिद्धं यद् वस्तु तदेव सत्यम्। अतएव जन्मान्तरं तैर्न स्वीक्रियते।

परित्यक्त एतस्मिन् शरीरे जन्मान्तराभावे च मोक्ष एवावशिष्यते। अत स्तन्मते मरणमेव मोक्षः। देहस्य नाशो मुक्तिरित्युक्तेः।

## योगाचारादिबौद्धमतम्

सौगताः किल सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यमिति भगवत्तथागतोपदिष्टचतुर्विधभावनामादृत्य परमपुरुषार्थं प्रेप्सन्तो योगाचारसौत्रान्तिकवैभाषिकमाध्यमिकभेदेन चातुर्विध्यमुपगता यथाक्रमं विज्ञानमात्रास्तित्वं बाह्यार्थानुमेयत्वं बाह्यार्थप्रत्यक्षत्वं सर्वशून्यत्वं चेति स्वमतं प्रतिपादयन्ति। उपदेष्टुस्तथागतस्यैकत्वेऽपि विनेयबुद्धितारतम्यान्मतस्य चातुर्विध्यम्। तत्र योगाचारादित्रयाणां मोक्षविषये प्राय ऐकमत्यम्। एते खलु तत्त्वज्ञानानन्तरं जायमानो विमलप्रत्ययप्रवाहापरपर्यायो निर्मलज्ञानोदय एव मोक्ष इति प्रतिपेदिरे। तदुक्तम्-

**"दुःखमायतनञ्चैव ततः समुदयो यतः" (वि.वि) इति। अत्र समुदयो मोक्षः।**

कार्यकारणभूताश्च तत्राविद्यादयो मताः।
बन्धस्तद्विगमादिष्टा मुक्तिर्निर्मलता धियः॥ (त.स.५४३) इति च।

## माध्यामिकबौद्धमतम्

माध्यमिकस्तु सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेवाङ्गीकृतवान्। तन्मते सर्वशून्यतायां पर्यवसानात्मक आत्मोच्छेद एव परनिर्वाणापरपर्यायो मोक्षः। तदुक्तं लङ्कावतारादौ -

प्रदीपस्यैव निर्वाणं विमोक्षस्तस्य चेतस" इति।
इदं वस्तुबलायातं यद् वदन्ति विपश्चितः।
यथायथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा॥ इति च॥

## आर्हतमतम्

कर्मकृतस्य देहस्वरूपवरणस्याभावे जीवस्य सततोर्ध्वगमनं मोक्ष इति जैनः। तदुक्तं तत्त्वार्थाधिगमसूत्रे - "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्षः" (१०.२) "तदनन्तरमूर्ध्वं गछत्यालोकान्तात्" (१०५) इति।

## विशिष्टाद्वैतवादिमतम्

सर्वकर्तृत्वाद्यतिरिक्तानां सर्वज्ञत्वादीनां परमात्मगुणानां प्राप्ति र्याथातथ्येन भगवत्स्वरूपानुभवश्चेति रामानुजीयाः। एतन्मते उपासनासहितस्य ज्ञानस्य मोक्षसाधनत्वं स्वीकृतम्। उपासना च भक्तिरूपा। तत्र च "अन्धं तमः प्रविशन्ति" इत्यादिश्रुऽतिर्मानम्। पञ्चरात्ररहस्ये एतेषां सिद्धयन्तः "प्रतिपादितस्तत्र मोक्षस्वरूपविषये इत्थं जगाद-

ततः स्वाभाविकाः पुंसां ते संसारतिरोहिताः
आविर्भवन्ति कल्याणाः सर्वज्ञत्वादयो गुणाः।

एवं गुणाःसमानाः स्युर्मुक्तानामीश्वरस्य च
सर्वकर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते। इति।

'जीवस्यानादिकर्मरूपाविद्यातिरोहितस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते'' इति श्रीभाष्यकारैरप्युक्तम्।

''फलं परमपदपर्यङ्कारोहणादिकम्। तथा चायमीश्वर इवापहतपाप्मत्वसत्यसंकल्पत्वादिविशिष्टो भवती''ति च वेदान्तदेशिकैरपि न्यायसिद्धाञ्जनादौ।

माध्वमतम्

एवमेव माध्ववेदान्तिनोऽपि - जगत्कर्तृत्व लक्ष्मीपतित्व श्रीवत्सप्राप्तिरहितं दुःखामिश्रितं पूर्ण

सुखं मोक्ष इति वदन्ति। सच श्रीविष्णुप्रसादादेवेति तेषां सिद्धान्तः। तदुक्तं विष्णुपुराणे-

तस्मिन् प्रसन्ने किमिहास्त्यलक्ष्यं
धर्मार्थकामैरलमल्पकास्ते।
समाश्रिताद् ब्रह्मतरोरनन्तात्
निःसंशयं मुक्तिफलं प्रयान्ति'' (१-७-८१) इति)

## पाशुपतमतम्

परमैश्वर्यप्राप्तिर्मोक्ष इति नकुलीशपाशुपताः। एतेषां समये यथावत्तत्त्वनिश्चय एव मोक्षसाधनम्। स च पाशुपतशास्त्रादेव न चान्यथा। तदुक्तम् -

''ज्ञानमात्रे वृथा शास्त्रं साक्षाद् दृष्टिस्तु दुर्लभा। पञ्चार्थादन्यतो नास्ति यथावत्तत्त्वनिश्चयः'' ॥ इति ॥ पञ्चार्थात् पञ्चार्थप्रतिपादनपरकपाशुपतशास्त्रादि त्यर्थः

## शैवमतम्

शिवत्वप्राप्तिरेव मोक्ष इति शैवाः। शिवत्वप्राप्तिसाधनीभूताश्च दीक्षादय उपाया इति मृगेन्द्रादिशैवदर्शनादौ स्पष्टीकृतम्।

## काश्मीरशैवाद्वैतमतम्

पूर्णात्मतालाभ एव मोक्ष इति शाक्ताः। स च प्रत्यभिज्ञामात्रादेव। प्रत्यभिज्ञा च परमेश्वरं प्रति आभिमुख्येन ज्ञानम्। स्वातन्त्र्यशक्तिविशिष्टस्य परमेश्वरस्याहंतया परिपूर्णोऽहमित्याकारकं ज्ञानमिति यावत्। संकोचभाव एव जीवत्वम्। पूर्वोदीरितपरिपूर्णताज्ञानेन जीवत्वनिवृत्तौ मुक्तत्वव्यवहारः। तदुक्तम्-

''मोक्षश्चास्य पशोस्तादृशस्वातन्त्र्यशक्त्यभिन्न प्रकाशात्मक एव'' (द.स.) इति।

''मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि स.'' (त.) इति च।

मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः॥

इति परमार्थसारेऽभिनवगुप्तपादोक्तेरप्यत्रैव तात्पर्यम्। स्वातन्त्र्यशक्तिश्चैतेषां सिद्धान्ते चितः स्वात्मभूता एव स्वीकृता। स्वातन्त्र्यशक्तेः स्फार एव जगत्। तदुक्तम् -

तत्स्वातन्त्र्यादधिकमधुना नोत्तरं बंभणीमः" इति।

## रसेश्वरदर्शनमतम्

पारदरसेन देहस्थैर्ये जीवन्मुक्तिरेव मोक्ष इति रसेश्वरवादिनः। पारदशिवालिङ्गार्चनेन जीवोऽपि शिवरूपतां पाप्नोति तदुक्तम् -

पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम्।
यो यजेत्पारदं लिङ्गं स एष शम्भुरव्ययः। इति।

अपि च

आयतनं विघ्नानां मूलं धर्मार्थकाममोक्षाणाम्।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम्॥

इत्यत्र शरीरस्थैर्यमेव मोक्ष इति प्रतिपादितम्। तदुपायश्च रसराजः। तदुक्तम्

"एकोऽसौ रसराजः शरीरमजरामरं कुरुत" इति।

## वैशेषिकमतम्

अशेषविशेषगुणोच्छेदो मोक्ष इति वैशेषिकाः। तदाह वैशेषिकसूत्रकारो भगवान् कणादः- "आत्मकर्मसु मोक्षो व्याख्यातः" (वै.सू.६-२-१६) इति। आत्मकर्मसु शब्दादिविषयकेषु समाप्तेषु सत्सु मोक्षो भवतीति सूत्रार्थः।

तत्रत्यभाष्यकाराश्चाप्याहुः- "तदा निरोधात् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्ष" इति। एतेषां मते द्रव्यादिपदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमेव मोक्षसाधनम्। तदाह - धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्य विशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" (१-१-४) इति।

## न्यायमतम्

आत्यन्तिकी दुःखनिवृत्तिरेव मोक्ष इति नैयायिकाः। "तदत्यन्तविमोक्षोऽपवर्गः" १-१-२२ इति सूत्रकार वचनं तत्र प्रमाणम्।

सूत्रघटकतच्छब्देन दुःखस्य परामर्शः। मिथ्याज्ञानादयो दुःखान्ता धर्मा अविच्छेदेन वर्तमाना एव संसारः। एतादृशस्य संसारस्य निवृत्तिरेव मोक्षोपायः। तादृशसंसारनिवृत्तिश्च पदार्थतत्त्वज्ञानादेव। यदा तत्त्वज्ञानान्मिथ्या ज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयान्ति। दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, ततो दुःखमपैति

दुःखापाये चात्यन्तिकोऽपवर्गो भवतीति न्यायसिद्धान्तः। तदाह - सूत्रकारो भगवान् गौतमः- ''दुःखजन्मप्रवृति-दोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः'' (१-१-२) इति। ''प्रमाणप्रमेयसंशयप्रयोजन दृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निश्रेयसाधिगमः (१-१-१) इति।

वस्तुतस्तु न्यायवैशेषिकयोर्नास्ति वैमत्यं परस्परं मोक्षविषये आत्मनोऽशेषगुणोच्छेदस्यात्यन्तिकदुःख निवृत्तिरूपतया तदुपायतया वा न्यायमतेऽपि स्वीकृतत्वात्। आत्यन्तिकदुःखनिवृत्तेर्मोक्षतया वैशेषिकैरप्यभ्युपगतत्वांत्। तदुक्तमुदयनाचार्यैः किरणावल्याम् - ''निः श्रेयसं पुन र्दुःखनिवृत्तिरात्यन्तिकी'' (पृष्टसं.६) इति। अत्रात्यन्ति कत्वम् - स्वसमानाधिकरणदुःख प्रागभावासमानकालीनत्वम्। स्वं दुःखनिवृत्तिः।

न्यायमञ्जर्यां जयन्तभट्टेनाप्युक्तम् -

यदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः।
तावदात्यन्तिकीदुःखव्यावृत्ति र्नावकलप्यते॥
धर्मधर्मानिमित्तो हि सम्भवः सुखदुःखयोः।
मूलभूतौ च तावेव स्तम्भः संसारसद्मनः॥
तदुच्छेदे तु तत्कार्यं शरीराद्यनुपप्लवात्।
नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते॥ इति।

नवीनास्तु - चरमदुःखध्वंस एव मोक्षः। तत्र चरमत्वञ्च लाघवात् तत्त्वज्ञाननाश्यतावच्छेदकतया दुःखविशिष्टान्य दुःखमात्रवृत्तिदुःखत्वव्याप्यो जातिविशेषः। वैशिष्ट्यञ्च स्वावच्छेदकीभूतशरीरावच्छिन्नत्वस्वाव्य वहितोत्तरत्वोभयसम्बन्धेनेत्याहुः।

## मीमांसकमतम्

स्वर्गादि प्राप्ति र्मोक्ष इति मीमांसकाः। एतेषां मते स्वर्ग एव परमपुरुषार्थः। तत्र परमत्वं दुःखासंभिन्नत्वम्। स्वर्गस्य दुःखासंभिन्नसुखरूपत्वात्। तदुक्तम्-

''यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ''

इति। ईदृशस्य मोक्षस्योपायो धर्मः। ''स हि निःश्रेयसेन पुरुषं संयुनक्ति इति प्रतिजानीमहे'' ''तयो यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीती प्रतिजानीमहे'' ''य एव श्रेयस्कर स एव धर्मशब्देनो च्यत (शाबभा. १-१-२ इत्यादिभाष्योक्तेः।

धर्मश्च वेदैकसमधिगम्यः। ''चोदनालक्षणोऽर्थो धर्मः (जै. १-१-२) इति भगवान् जैमिनिः। चोदनालक्षणश्चोदनाप्रमाणक इत्यर्थः। स च यागादिक्रियाकलापरूपः। तस्यैव प्रयोजनमुद्दिश्य वेदेन विधीयमानोऽर्थोधर्म इतिलक्षणलक्ष्यत्वात्। तदुक्तं भट्टपादैः-

श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
चोदनालक्षणैः साध्या तस्मात् तेष्वेव धर्मता॥ इति।

स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीत्यादि वचनैर्यज्ञाद्यनुष्ठानेन यजमानः स्वर्गं यातीति प्रतिपादितम्।

मोक्षशब्दस्य व्युत्पत्तिलभ्यमर्थमादाय तु प्रपञ्चसम्बन्धाभाव एव मोक्षः। तदाह पार्थसारथिमिश्रः- प्रपञ्चसम्बन्धविलयः। त्रेधा हि प्रपञ्चः पुरुषं बध्नाति भोगायतनं शरीरं भोगसाधनानीन्द्रियाणि भोग्याः शब्दादयो विषयाः। भोग इति च सुखदुःख विषयोऽपरोक्षानुभव उच्यते, तदस्य त्रिविधस्यापि बन्धस्यात्यन्तिको विलयोमोक्षः'' किमिदमात्यन्तिकत्वं पूर्वोत्पन्नानां शरीरेन्द्रियाविषायाणां विनाशः, अनुत्पन्नानां चात्यन्तिकोऽनुत्पादः। कथमत्यन्तानुत्पत्तिः उत्पादकयो धर्माधर्मयोनिः शेषयोः परिक्षयात्। सोऽयं प्रपञ्चसम्बन्धो बन्धस्तद्विमोक्षश्च मोक्षः'' शा.दो. १-१-२)इति।

प्रभाकरास्तु आत्यन्तिकदुःखप्रागभावो मोक्षः। आत्यन्तिकत्वञ्च स्वसमानाधिकरणयावदधर्मनाशविशिष्टत्वम्। तेन संसारितादशायां नातिप्रसङ्गः, इतिवदन्ति।

व्याकरणमतम्

मूलचक्रस्थायाः परानामिकाया ब्रह्मरूपाया वाचो स्वाभिन्नतया दर्शनं मोक्ष इति पाणिनीपाः। तदाह श्रुतिः-

चत्वारि श्रृङ्गास्त्रयो अस्यपादा द्वेशीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥

अत्र ''महो देवो मर्त्यां आविवेश'' इत्यंशं व्याचक्षाणेन भगवता पतञ्जलिना - ''महान् देवः शब्दो मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश। महता देवेन परेण ब्रह्मणा साम्ययुक्तं स्यादित्युक्तम्। अत्र साम्यं सापुज्यम्। तथा च सायुज्यात्मको मोक्ष एतन्मते पर्यवस्यति।

एतन्मते मोक्षसाधनं व्याकरणशास्त्राध्ययनतज्जन्यशब्दतत्त्वज्ञानम्। व्याकरणशासूत्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषोऽहंकारादिग्रन्थीन् विच्छिद्य ब्रह्मणाऽत्यन्तं संसृज्यते। अत एवोक्तम्-
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति'' इति व्याकरणशास्त्रस्य मोक्षसाधनत्वं हरिणाप्युक्तम्-

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामाधिविद्यं प्रचक्षते॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥ (वा.प.१-१४,१६)

अत्र सिद्धिः- कैवल्यप्राप्तिः।

## सांख्यमतम्

प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मोक्ष इति सांख्याः। प्रकर्षेण करोति कार्यमुत्पादयतीति प्रवृत्तिः। प्रकर्षश्च तत्त्वान्तरारम्भकत्वम्। तथा च यस्मात्तत्वान्तरमुत्पद्यते तादृशकरणविशेषः प्रकृतिः। सा च सांख्य

सिद्धान्ते सत्त्वरजस्तमोगुणानां साम्यावस्था। साम्यावस्थातः प्रच्युतिश्च संसारदशा। अतः प्रकृतेः परिणामः प्रपञ्चः। पुरुषस्तु न कस्यापि प्रकृतिर्न कस्यापि विकृतिः। एतादृशप्रकृतिपुरुषयोरविवेकात्संसारो विवेकाच्च मोक्षः। प्रकृतेरुपरमः साख्यकारिकायामित्थं प्रतिपादितः-

**रंगस्य दर्शयित्वा निवर्तते नर्तकी यथानृत्यात्।**

**पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥**

इति पुरुषस्य स्वरूपेणावस्थानमाहत्यैव च मोक्षार्थे कैवल्यशब्दप्रयोगः। कैवल्यं प्राप्नोति'' (सा.का.१४-६८) इति। तत्र केवलस्यात्मस्वरूपस्य भावः कैवल्यम् इत्यर्थः।

## योगदर्शनमतम्

चितिशक्तेर्निरुपाधिकस्वरूपावस्थानं मोक्ष इति पातञ्जलाः। एतेषां सिद्धान्ते द्विविधा मुक्तिः प्रतिपादिता। प्रकृतेः कैवल्यम् चितेः कैवल्यञ्च। तदुक्तं भगवता पतञ्जलिना ''पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः'' (पात.यो.सू. ४-३४) इति। वस्तुतस्तु सांख्ययोगयोर्मोक्षविषये मतैक्यमेव।

## अद्वैतवेदान्त मतम्

मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगमो मोक्ष इत्यद्वैतवेदान्तिनः। ''ब्रह्म वेद ब्रह्मैव भवति'' (मु. शरण)

''यस्मिन्सर्वाणि भूतान्यात्मैवाभूद् विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ (ई. ७, बृ. १-५-७)

''परमेव ब्रह्मभवति य एवं वेद। इत्यादिश्रुतिवाक्येभ्यः। ''सम्पद्याविर्भावः स्वेन शब्दात्'' ''मुक्तः प्रतिज्ञानात्'' आत्मा प्रकरणात्'' (ब्र. ४४ १-३) इत्यादि सूत्रेभ्यः। ''केवलेनैवात्मनाविर्भवति, न धर्मान्तरेण'' ''स सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते'' इत्यादि भाष्यकारव्रचनाच्च।

## अद्वैतातिरिक्तनिरुक्तमतसमीक्षणम्

अत्रेदं किञ्चिद्विमृश्यते - ''येयं प्रेते विचिकित्सा मनुचेऽस्तीष्येके नायमस्तीति चैके ''इत्युपक्रम्य'' ''अस्तीत्येवोपलब्धव्य'' इत्यादि, ''यथा मरणं प्राप्य' इत्युपक्रम्य ''योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्'' इत्यादि, ''अत्रायं पुरुषः स्वयं ज्योतिः'' इत्युपक्रम्य तं विद्याकर्मणी समन्वारभेते पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन'' इत्यादि शतशः श्रुतिवाक्यैः कृतप्रणाशाकृताभ्यागमापत्त्या च प्रतिपादितस्य देहादिव्यतिरिक्तजन्मान्तरसम्बन्ध्यात्मास्तित्वस्यावश्यमेवाभ्युपेयत्वाच्चार्वाकमतसिद्धमोक्ष-प्रतिक्षेपः।

अतएव शून्यवादपक्षोऽपि प्रतिक्षिप्तः। तज्ज्ञानसंतानस्यात्मरूपतया तदुच्छेदस्यापुरुषार्थत्वात्। नहि सर्वतः प्रियतमस्यात्मन उच्छेदं कश्चिदपि वाञ्छति। नापि विशुद्धविज्ञान संतानोदयो मोक्षः। कारणानिरूपणात्। न च चतुर्विधभावनाप्रकर्षपर्यन्तजनितसाक्षात्कार एव करणमिति वक्तुं शक्यम्, यतो बौद्धमते क्षणिक बुद्धिपरम्परामात्रमेवात्मा। तस्य चात्मरूपैकाधिकरणस्यास्थिरस्याभावात्तदधिकरणकविशुद्धेरप्यसम्भवात्।

स्याद्वादमोक्षोऽप्यमोक्ष एव । तन्मते सर्वेषां पदार्थानां सप्तभङ्गीन्यायनिर्णीतत्वेन मोक्षेऽपि तन्न्यायप्रसरताया अवश्यमभ्युपेयतया मोक्षस्वरूपस्य निर्धारयितुमशक्यत्वात् । तदुक्तं भगवता भाष्यकारेण- ''स्वर्गापवर्गयोश्च पक्षेभावः पक्षे चाभावः, तथा पक्षे नित्यता पक्षे चानित्यता इत्यनव धारणायां प्रवृत्त्यनुपपत्तिः। (ब्र.सू.शां.भा. २/२/३३)।

विशिष्टाद्वैतवादिनां मोक्षोऽपि न स्वान्तः संतोषदः । तस्य साष्टर्यादिरूपतया भेदघटितत्वेन ''द्वितीयाद् वै भयं भवति'' इति भयवत्त्वाद्याक्रान्तत्वेन ''यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं विजानीयात्'' एक मेवाद्वितीयम्'' ''नेह नानास्ति किञ्चन'' ''मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति''

एषा ब्राह्मीस्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामंतकालेऽपि ब्रह्मनिर्वाणमृच्छति''

इत्यादिश्रुतिस्मृतिविरोधात्। सन्ति चैतानि वेदान्तवाक्यानि निरस्तसमस्तोपाध्यनवच्छिन्नचैतन्यानन्दैकरसे ब्रह्मणि तात्पर्यवन्ति तन्निर्णायकयावल्लिङ्गसत्त्वात् । न चैतान्युपक्रम परामर्शोपसंहारैः क्रियासमभिहारेणेदृ गद्वैतात्मतत्वमभिदधति तत्पराणि सन्ति शक्यान्यन्यथायितुम्।

किञ्च तेषां मुक्तिदशायां दुःखनिवृत्तिसत्त्वेऽपि तस्या अनात्यन्तिकत्वेन क्षयितया स्वतः पुरूषार्थत्वाभावात्। तदुत्तरं शरीरपरिग्रहेण बन्धसम्भवाच्च।

एतेन माध्वादयोऽपि निरस्ताः।

न्यायवैशेषिकाभिमतमोक्षोऽपि न क्षोदक्षमः । तत्रातीतस्य दुःखस्य स्वत एव निवृत्ततयाऽसाध्यत्वेन, वर्तमानस्य स्वोत्तरवर्तिविरोधिगुणनिवर्त्यत्वेनानागतस्य चाविद्यमानत्वादेव निवर्तयितुमशक्यवेन निवृत्तजातीयस्य दुःखस्य पुनरनुत्पाद एव वक्तव्यः । स च न सम्भवति अनुत्पादस्य प्रागभावरूपतयाऽनुत्पाद्यत्वात् । अतएव दुःखात्यन्ताभावोऽपि न मोक्षः। एतेनैव प्रभाकरोऽपि परास्तः।

किञ्च मोक्षदशायामशेषगुणान्तर्गततया सुखस्यापि विनष्टत्वेनापुरुषार्थत्वप्रसङ्गः । ''एषोऽस्य परमानन्दः'' यो वैभूमा तत्सुखमिति सुखरूपताप्रतिपादकश्रुतिविरोधप्रसङ्गश्च । वैशेषिकाभिमतमोक्षस्य पाषाणकल्पत्वं संस्मृत्यैव केनचिद्भक्तभावुकेनोक्तम् -

वरंवृन्दावने शून्ये श्रृगालत्वं वृणोम्यहम्।
न तु वैशेषिकीं मुक्तिं प्रार्थयाभि कदाचन ॥ इति।

दुःखाभावोऽपि नावेद्य पुरूषार्थतयेष्यते।
नहि मूर्च्छाद्यवस्थायां प्रवृत्तो दृश्यते सुधीः'' ॥ इति च।

नचात्यन्तिकदुःखध्वंस एव मोक्षः, तत्र ध्वंसस्य कृतत्वेनानित्यतया तदात्मकस्य मोक्षस्यापि तथात्वापत्त्या ''न स पुनरावर्तते'' इति श्रुतिविरोधापत्तेः। नापि तत्रप्रमाणम्। न चात्मा कदाचिद्ध्वस्ताशेषविशेषगुणः, नित्यत्वे सत्यनित्यविशेषगुणाश्रयत्वात् महाप्रलयावस्थापरमाकाशवदिति, ''दुःखसन्ततिमत्यन्तमुच्छिद्यते संततित्वात् प्रदीपसंततिवदिति चानुमानम्, प्रथमे वेदान्तिनः प्रति हेतोरसिद्धेः। दृष्टान्तस्य साध्यसाध नकल्यम्। महाप्रलये

आकाशस्यपि त्वयाभ्युपगमादाश्रयत्वासिद्धेः। द्वितीये पार्थिवपरमाणुरूपादिसंताने व्याभिचारः। तत्र सन्ततित्वस्य सत्त्वेऽपि आत्यन्तिकोच्छेदाभावात्; अन्यथा सर्गान्तरे रूपाद्यनुत्पत्त्यापत्तिः।

अत एव भट्टाभिमतो मोक्षोऽपि व्युदस्तः। तत्र 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'' इत्यादिस्मृत्या स्वर्गसुखस्याप्यनित्यतया प्रागुक्तदोषापत्तेः। तस्य पातभयादिजन्मदुःखानुविद्धतया च तदर्थं प्रेक्षावतां प्रवृत्त्यनुपपत्तेश्च।

नापि सांख्यसम्मतो मोक्षः। सुखसाक्षात्कारस्यैव पुरुषार्थत्वसम्भवादात्मनश्च सांख्यैः सुखरूपतानभ्युपगमात्। किञ्च तन्मते बन्धस्य बुद्धिगतत्वेन मुक्तेश्च पुरुषगतत्वेनाभ्युपगततया बन्धमोक्षयोः वैयधिकरण्यापत्तेः। किञ्च बुद्धितत्त्वस्यानादित्वे विनाशानुपपत्तेः, भावनाशे जन्यत्वेन प्रतियोगिनो हेतुत्वात्। सादित्वे च तद्धर्मादृष्टप्रवाहस्यापि सादितया प्रथममदृष्टवैचित्र्यं भोगादिकार्यवैचित्र्यञ्च न स्यात्। तदुक्तम् -

''कर्तृधर्मा नियन्तारश्चेतिता च स एव नः।
अन्यथाऽनपवर्गः स्यादसंसारोऽथवा पुनः'' ॥ इति।

असंसार : - संसारावैचित्र्यमित्यर्थः। न च बुद्धिगतयोरेव बन्धमोक्षयोः पुरुषे उपचारः, निमित्ताभावात्। एतेन योगाभिमतो मोक्षोऽपि परास्तः।

## अद्वैतवेदान्तमतविवेचनम्

तथा चाद्वैतब्रह्मवादिभिरुद्घोष्यमाणः मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगम एव मोक्षः। अद्वैतसिद्धान्ते स्वप्रकाशतया स्वतः सिद्धे ''केवलो निर्गुणश्च'' ''एष नेति नेति'' ''अस्थूलमनणु'' ''अशब्दमस्पर्शम्'' इति लोकहिताय प्रवृत्तमानया निषेधमुखेन श्रुत्या च प्रतिपादिते निर्विशेषे ब्रह्मणि ''तदैक्षत'' ''एकोऽहं बहु स्यामिति श्रुतिप्रतिपादितस्येक्षणस्यासम्भवात् तदुपपादकं मायेत्यपरपर्यायमज्ञानाख्यं तत्त्वं स्वीक्रियते। तच्चाज्ञानं सत्त्वेनासत्त्वेन सदसत्त्वेन च निर्वक्तुमशक्यतयाऽनिर्वचनीयं भावरूपं विक्षेपावरणात्मकशक्तिद्वयविशिष्टञ्चास्ति। तदेव परमेश्वरे ईक्षणरूपेण परिणमते। अतः परमेश्वरस्यान्तःकरणाभावेऽपि मायावृत्त्यात्मकमीक्षणमुपपद्यते। तदीक्षणानन्तरं ''तस्माद्वैतस्मादात्मन आकाशः सम्भूत आकाशाद् वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी'' इति श्रुतिप्रतिपादितस्य जगतो जनिर्जायते। एतच्च जगत् मायायाः परिणामः। अत एवात्र जडत्वदुःखवत्त्वादिव्यवहारः। चैतन्यस्य विवर्तोऽत एवात्रास्तित्वभातित्वप्रियत्वादीनां प्रतीतिः।

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ इति श्रुतेः।

एतच्चाज्ञानं शुद्धचैतन्याश्रितमिति विवरणानुसारिणः। तदुक्तम् -

आश्रयत्वविषयत्व भागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमोनाश्रयो भवति नापिगोचरः ॥ इति।

वाचस्पतिमिश्रास्तु - जीवाश्रितमेवाज्ञानं ब्रह्मविषयीकरोति।

अत एव जीव एव ''अहमज्ञ इति व्यवहारो नेश्वरे इति वदन्ति।

अयञ्च मायावादो न श्रुतिविरूद्धोऽपितु श्रुति सम्मतः। "मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्" "इन्द्रो मायाभिः पुरुरूपमीयते" इत्यादि श्रुतिषु निरुक्ताज्ञानरूपार्थे मायाशब्दप्रयोगदर्शनात्। "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादि सूत्रेण सूत्रकारैः "परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयं च प्रवर्तकत्वम्" "मायैव संध्ये सृष्टिः" "तस्मान्मायामात्रं स्वप्नदर्शनम्" इत्यादि भाष्येण भाष्यकारैश्च समर्थितः। "माया ह्येषा मया सृष्टेत्यादिस्मृत्यापिसिद्धः।

अज्ञाननिवृत्तिस्तु ज्ञानेन भवतीति सर्वानुभवसिद्धम्। घटज्ञानेन घटविषयकाज्ञानविवृत्तिदर्शनात्। तथा च कृतश्रवणमनननिदिध्यासनस्य पुरुषस्यात्मसाक्षात्कारे जाते सति अज्ञानं निवर्तते। तन्निवृत्तौ च पूर्वं प्राप्तोऽपि स्वस्वरूपः विस्मृतस्वकण्ठगतचामीकरवत् प्राप्यते। अर्थात् तत्र प्राप्तत्वव्यवहारमात्रं जायते।

केषाञ्चिन्मते - अविद्यानिवृत्तिरेव मोक्षः। अविद्यानिवृत्तिश्चात्मरूपा। अभावस्याधिकरणरूपता स्वीकारात्। अत एव मोक्षे नापूर्वं किञ्चित्प्रापणीयमपितु मूलस्वरूपेणावस्थानमेव भवति। तच्च यद्यपि बद्धावस्थायामप्यासीदेव किन्तु तदा तदज्ञातं मोक्षदशायां ज्ञातं भवति।

तदुक्तम् -

"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः"। इति।
"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति च।

मोक्षश्चायं विद्यैकसाध्यः। विद्या चात्मसाक्षात्कार एव। तस्मिन् सति जीवन्नपि मुक्त एवेति जीवन्मुक्त इत्युच्यते। प्रारब्धक्षयात्पतिते च शरीरे विदेहकैवल्यं प्राप्यते। "तस्य तावदेव चिरमित्यादिश्रुतेः"।

चान्द्रिकाकारमते तु निरुक्ताविद्यास्तमयः स्थूलसूक्ष्मरूपेणाप्यनवस्थानम्। तच्च विदेह कैवल्ये एव भवितुमर्हति न तु जीवन्मुक्तौ तदानीं व्युत्थानदशायामविद्यालेशस्य सम्भवात्। अत एव विदेहताकालीन एव मुख्योः मोक्षः। अत एव चरमतत्त्वज्ञानस्य दृश्याश्रयकालपूर्वत्वाभावनियमश्चान्द्रिकाकारैः स्वीकृतः।

## अद्वैतमतनिष्कर्षः

वस्तुतस्तु - दृश्यध्वंसस्य सत्यत्वेऽ द्वैत श्रुतिव्याकोपात् मिथ्यात्वे तदाक्षेपिकाया अविद्यायाः सहभावादेव न भावाद्वैते चेतस्तोषः। न वा नृसिंहस्वामिभिः स्वीकृते स्वस्वेतर दृश्यनाशस्य वृत्यात्मकचरमक्षणात्मकत्वे तुष्टिः, वृत्तिनाशस्य वृत्त्यात्मकत्वासम्भवात्। न वा चरमतत्त्वज्ञानस्य दृश्याश्रयकालपूर्वत्वाभावनियमे चित्तसंतोषः। तत्र चरमेत्यस्य ज्ञाने साक्षात्कारत्वलाभार्थत्वे ब्रह्मसाक्षात्कारस्य विदेहकैवल्याव्यवहितप्राक्क्षणं एवोपेतव्यत्वेन श्रुतिस्मृतीतिहासपुराणविद्वदनुभवादिसिद्धाया जीवन्मुक्तेर्विलोपप्रसङ्गः, जीवन्मुक्तिकालिकतत्त्वज्ञाने व्यभिचारवारणर्थत्वेऽपि "विद्वान्नामरूपाद्विमुक्तः" इत्यादि श्रुत्या विद्योत्तरं जायमानस्य दृश्यसामान्योच्छेदस्य ध्वंसरूपस्यानभ्युपगमेन दृश्यसद्भाव इदानीमिव विदेहमुक्तावपि दुर्वार इति तर्कशून्यतया कथमुक्तनियमोपपत्तिरित्यादिदूषणसद्भावात्। पञ्चमप्रकारतापक्षोऽपि न क्षोदक्षमः, सदसत्तदुभयात्मकतदुभय-विलक्षणविलक्षणस्य बुद्धयनारोहात्। तस्मात् बद्धत्वादिभ्रमनिवृत्तिफलः परिपूर्णात्मता बोधोदय एव परमः पुरुषार्थः।

अत्रेदं तत्त्वं यत् - निरुक्तमोक्षस्वरूपे परिपूर्णत्वमीश्वरत्वं समस्तैश्वर्यखचितत्वमिति यावत् । ईदृशपरिपूर्णपरमात्मभावापत्तिरेव मोक्ष इति वेदविदां सिद्धान्तः । तथाहि "तस्मात् यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितमनेकानर्थयोगि, तद्विलयेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपद्यते, सर्पादिविलयनेनेव रज्वादीन्" इति दहराधिकरणे, "किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव? न नास्त्येव, विद्यमानमपि तत्तिरोहितमवद्यादिव्यवधानात्। तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्यापतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति" इति सन्ध्याधिकरणे, "मद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ता" इति वीतरागभयक्रोध इत्यागीताभाष्ये च श्रीमद् भगवत्पादाः प्रत्यपादयन् । प्रपञ्चितञ्चैतत् सिद्धान्तलेशसंग्रहे श्रीमदप्पय्यदीक्षितेन्द्रैः । अत एव -

जाग्रत्स्वप्नसुषुप्ति धर्मकमिदं चित्तं त्वदज्ञानतः
प्रादुर्भूतमतस्त्वमेव सततं त्वत्तो न तद्भिद्यते ।
स्वाज्ञानञ्च तवानुभूतिबलतः सिद्धं मृषा तत्त्वतो
नासीदस्ति भविष्यतीति भवतः पूर्णा चितिः शिष्यते ॥ (सं.शा. ३-१४०)

इति संक्षेपशारीरकोक्तिरपि संगच्छते । "वास्तवत्वेन पूर्णानन्दचिदात्मावशिष्यते इत्यर्थः" इति तत्रैव मधुसूदन स्वामिपादाः ।

अथवा परिपूर्णत्वं परिच्छेदत्रयशून्यत्वम् । स्वान्यूनसत्ताकाभावप्रतियोगि यद् यत्तत्प्रतियोगिकभेदवत्त्वम् । अभावे स्वान्यूनसत्ताकत्वविशेषणाद् ब्रह्मणि जडानुयोगिकभेदप्रतियोगित्वसत्त्वेऽपि नासम्भवः ब्रह्मान्यूनसत्ताकभेदाप्रसिद्धेः । तथा च स्वान्यूनसत्ताकाभावप्रतियोगित्वरूपपरिच्छिन्नत्वमेव मिथ्यात्वव्याप्यम् । तस्य च ब्रह्मण्यसत्त्वान्न तत्र मिथ्यात्वापत्तिः । एवं चेदृशपरिपूर्णात्मताबोधोदय एव मोक्षः । उक्तभाष्यस्याप्यत्रैव तात्पर्यम् । ईदृशमोक्षदशायां "सत्यं ज्ञानमनन्तं ब्रह्म" इति स्वारूपलक्षणलक्ष्यं निर्विशेषमेव तत्त्वमवशिष्यते । "ब्रह्मवेद ब्रह्मैव भवति" परमेव ब्रह्म भवति"

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"

इत्यादिश्रुतिभ्य इति शिवम् ।

# आधुनिकोऽद्वैतवादः

प्रो. राममूर्तिशर्मा

सत्यमेकमद्वितीयमपरिवर्तनीयं शाश्वतञ्च वतेते, परं तस्यापि विभिन्नकालवर्तिभिर्वि-चारकैर्विविधरीतिभिर्विचारः क्रियते । सत्यञ्च साक्षात्कर्तुं मनीषिभिरनेकविधोपायाः प्रस्तूयन्ते । एतस्यायं परिणामो यत् उपनिषत्प्रतिपदितसत्यस्य संक्षिप्तशैल्या व्याख्यातुर्ब्रह्मसूत्रस्य श्रीशङ्कराचार्यरामानुजाचार्य-मध्वाचार्य-निम्बार्काचार्यप्रभृतिभिराचार्यैरनेकानेकदृष्टिभेदैर्भाष्यरचना कृता । एकोनविंश-विंशतितमशताब्दौ भारते प्राधान्येन विविधविषयाणां नवीनतायाः युगो वर्तते । अत एव अद्वैतवादसिद्धान्तस्य साम्प्रतिकदिशा विवेचनस्यावसरो ऽ नायासमेव समायातः । अत्रेदमेव प्रधानं कारणं प्रतीयते यदाधुनिके युगे आध्यात्मिकदर्शनापेक्षया जीवनदर्शनमतिमहत्वपूर्णमवगम्यते । जीवनदर्शनस्य विचारणस्य चास्मिन्युगेऽयमेव हेतुर्वक्तुं शक्यते यत् प्राचीनेषु आधयात्मिकग्रन्थेषु जीवनोपयोगिषु विचारेषु सत्स्वपि तेषां विचाराणां प्राबल्येन समुद्घोषो न वर्तते । अत्रैवेदमपि वक्तव्यं यत्प्राचीनेषु आध्यात्मिकग्रन्थेषु श्रीमद्भगवद्गीतादिषु न जीवनदर्शनस्याभावेऽपि तु विस्ताराभाव एव वक्तव्यः । अतो ड्यूसनप्रभृतीनां जर्मनदेशीयानमिदं मतं यदुपनिषत्सु जीवनदर्शनस्य आचारपक्षस्य चाभाव एव प्रायशो दृश्यते । वस्तुतस्तु अद्वैतवेदान्ते जीवनदर्शनस्य मानवत्वस्य च पोषका अनेका सूक्तयः संप्राप्यन्ते । निदर्शनार्थमपेतब्रह्मक्षत्रादिभेदम् ''आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ताः आरभ्यन्ते'' (ब्र.सू.शा.भा. १.१.१), ''नानोपाधिवशादेव जातिनामाश्रमादयः । आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥' (आत्मबोधः), ''तत्ववित्वविरोधित्वाल्लौकिकं सम्यगाचेरत् । (पञ्चदशी, ध्यानदीपप्रकरणम्) ''मनोविशुद्धो गृही भवेद् वाऽस्युर्मस्करी वा (''शङ्करदिग्विजयः १३.५.७)''अत्रैव जन्मनि भवेदपवर्गदायि वाक्यप्रसूतमनुभूतिफलावसानम्'' (संक्षेपशरीरकम्.३.३.४९)प्रभृतीनि च कथनानि एकात्मवादाश्रितां जीवनदृष्टिमेव सम्यक् समर्थयन्ति इति सुविशदम् । अतश्च सुसिद्धमिदं यदद्वैतवेदान्तादिदर्शनसंप्रदायेषु जीवनोपयोगिसिद्धान्तेषु सत्स्वपि तेषामाधुनिकदृष्टचा विचारः परां सङ्गतिमुपयोगित्वं च सेत्स्यति । अस्मादेव रामकृष्णपरमहंसविवेकानन्दअरविन्दधोषादिभिरनेकै-र्भारतीयदार्शनिकैरद्वैतराद्धान्तस्य नूतनदिशा विवेचनं प्रस्तुतीकृतम् । इदानीमेतेषां दार्शनिकानां विचारसरण्याः विवेचनेनाद्वैतावादस्य स्वरूपं स्पष्टीक्रियते । रामकृष्णपरमहंसस्य दार्शनिकः सिद्धान्तः

रामकृष्णपरमहंसो भारतवर्षस्य समन्वयकर्ता अद्वैती दार्शनिक आसीत् । अत एवास्य हृदि ज्ञानिनां निर्गुणोपासकानां, सगुणोपासकानां, प्राचीनदार्शनिकानामर्वाचीनविचारकाराणां च कृते समान एवादर आसीत्। भगवत्याः महाकाल्या अपि उपासकः परमहंसोऽ द्वैतसिद्धान्तस्यानुसर्ता समाजायत । शाङ्करवेदान्तमिव माया परमंहसेन परमेश्वरस्यशक्तिरूपेण स्वीकृता । अपि च मानवसेवा परमहंसस्य दर्शनस्य प्रमुखा विशेषता । मानवसेवा निमित्तमाश्रित्य कलिकता - अलमोडा प्रभृतिषु नगरेषु मठानां स्थापना कृता वर्तते । अयमेवाद्वैतवादस्य व्यावहारिक

स्वरूपं वर्तते । मानवसेवया पुरुषः परमात्मानं सहजमेव प्राप्नोतीति निर्गलितम् । परमहंसदर्शनस्यायं लोकसेवापक्षोऽस्य दर्शनस्य (अद्वैतवादस्य) जीवनदृष्टिं सम्यग्विशदयतीति अन्याय्यमिदं लपनं यदद्वैतवादस्तु वेदान्तिनां पलायनवादिदर्शनम् ।

### विवेकानन्दस्य विचारसरणिः -

विवेकानन्द : परमहंसस्य रामकृष्णस्य शिष्य आसीत् । अनेन समन्वयित्राऽ द्वैतवादस्य व्यावहारिकपक्षस्य वैशिष्ट्येन समर्थनं कृतम् । विवेकानन्दस्य दर्शनदृष्टेरयं प्रमुखः पक्षो यदयं जगतो मिथ्यात्वमनङ्गीकृत्य तस्य सत्यत्वं स्वीकरोति । दर्शनस्य व्यावहारिकीं महत्तां प्रतिपादयताऽनेन दार्शनिकेन व्यावहारिकताया अभावे कश्चिदपि दार्शनिकविचारो बौद्धिकव्यायाममात्रं परिगण्यते । स्वामिनो विवेकानन्दस्यायमपि प्रबलः पक्षो यत् सः साध्यमिव साधनमपि समानं महत्त्वमदात् । विवेकानन्दस्येयमपि महत्त्वपूर्णा दृष्टिर्यत् सः परमात्मानमिव कर्मणां कृतेऽपि महत्त्वमस्वीकरोत् । अत एव सूक्तम् -

हस्तः कर्मणि संसक्तश्चित्तं ब्रह्मण्यधिष्ठितम् ।
नियतं यस्य तस्यैव जन्म जन्मेति मे मतिः ॥

### कर्मतत्परताविषये तेन सम्यगुदीरितम् -

It may be that I shall find it good to get outside of my body, to cast it off like a disused garment. But I shall not cease to work. I shall inspire men everywhere, until the world shall know that it is one with God.

विवेकानन्दस्य धार्मिकी दृष्टिरपि बहुव्यापिका । तेन विभिन्न धर्माणां परस्परं समन्वयोऽकारि । तन्मतेन हिन्दुधर्मस्तु मानवधर्म एव । अमेरिकायां शिकागो नगरे धर्मसंसदि भाषणां प्रस्तुवता विवेकानन्देन हिन्दुधर्मस्येदमेव महत्वं प्रतिपादितं यत् धर्मेऽस्मिन् समस्तस्यापि लोकस्य हितचिन्तना वरीवर्तते । विकेकानन्दस्य मते औपनिषदो वेदान्त एव भारतीयधर्मस्य मूलम् औपनिषदश्च सिद्धान्त एकात्मवादस्यैवेति हिन्दुत्वस्य विश्वबन्धुत्वभावना सहजमेव सिध्यति । न केवलं विवेकानन्देन अन्यैश्च भारतीयैरेव हिन्दुधर्मस्य प्रशंसा विहिताऽपि तु वैदेशिकैरपि विद्वद्भिर्धर्मोऽयं सर्वथा सुगीतः । जर्मनदेशीयः शोपेनभिधो मनीषी निशि शयनात्पूर्वं प्रातः उत्थाय चोपनिषदां पारायणमकरोदिति वैदेशिकानां भारतीयधर्मदर्शनं प्रति श्रद्धामयीमास्थामेव व्यनक्ति । एकनान्येन विपश्चिता वैदेशिकेन जीगेनबलगेन (ZIEGENBALG) जर्मनदेशीयेनोक्तम् -

""The more I became acquainted with the teachings of the Hindus, the more I was impressed by them...the Hindu books might be studied with as much profit as Aristole's".

परमस्य विदुषोऽनेके ग्रन्थाः हिन्दुत्वस्य प्रशंसाहेतोः क्रिस्टानुसारिभिः प्रशासकैस्तज्जीवनकाले न प्रकाशिताः ।

### अरविन्दघोषस्य दार्शनिकः सिद्धान्तः

भारतीयेषु आधुनिकदार्शनिकेषु अरीवन्दघोषस्य प्रसिद्धिः योगोपासनदार्शनिकरूपेणास्ते । अरविन्दस्य दार्शनिकः सिद्धान्तः शिवाद्वैत एवेति वक्तुं शक्यते । अस्मिन् शिवाद्वैतमते शिवस्तु ब्रह्मैव चिच्छक्तिश्च

शिवस्यापृथग्भूताशक्तिः । जगच्च शिवशक्तेचिद्रूपिण्या एव परिणामः । अतश्चारविन्ददर्शने जगत् शिवस्वरूपमेव वस्तुतः । जगतश्च मिथ्यात्वं निराकुर्वता महार्षिणाऽ रविन्देनोक्तम् -

""I do not agree with the view that the world is an illusion, Mithya."

अरविन्दस्य प्रमुखसिद्धान्तो जडचेतनवादः । अरविन्दस्य मते जडचेतनवादसिद्धान्तानुसारं जडमपि जगत् चेतनसमन्वितं वर्तते । परम् अज्ञानकारणाज्जीवो जगत श्चेतनस्वरूपस्य दर्शनं कर्तुमक्षमः । अतो जगतश्चेतनतां सत्यतां च स्वीकृत्यारविन्देन व्यावहारिकदर्शनस्यैव प्रतिपादनं कृतम् । सृष्टिश्चास्य दार्शनिकस्य मते ईश्वरस्य लीलामात्रमेव । परमेश्वरस्य लीला च कथं मिथ्या भवितुमर्हति । अरविन्ददर्शनमनुसृत्य जगतः सत्ता शक्तिमयी आनन्दमयी च वर्तते । आनन्दस्वरूपं जगदानन्देनोत्पन्नमानन्देन जीवितमानन्दस्वरूपञ्चवर्तते । अतोऽरविन्ददर्शनं कियज्जीवनोपयोगिति न विवरणमपेक्षते ।

रामकृष्णपरमहंसाद्यतिरिक्तमन्येऽपि सन्ति परमाधुनिका अद्वैतिनो यैरद्वैतसिद्धान्तमाश्रित्य स्वकीयमाधुनिकजीवनं व्याख्यातम् । उदाहरणाय राधाकृष्णन् - जे.कृष्णमूर्ति - विनोबाप्रभृतयो दार्शनिका अद्वैतदृष्टिमवलम्ब्यैव स्वविचारदृष्टिं विस्पष्टयन्ति । विनोबादर्शने सङ्कुचितजीवनं परित्यज्य ब्रह्मस्वरूपावाप्तिरेव जीवनस्य परमो लक्ष्यः । एवञ्च व्यापकतमस्थितिप्राप्तिरेव विनोबा मते ब्रह्मनिर्वाणम् । अस्याचार्यस्य प्रमुखः सिद्धान्तः सर्वोदयवादः । सर्वोदयसिद्धान्तानुसारं सर्वेषामप्युदयः समर्थ्यते । सर्वोदयसिद्धचर्थं विनोबाचार्येण समत्वसिद्धान्तस्याश्रयो गृहीतः । स्वकीये साम्यसूत्राभिधे ग्रन्थेऽनेन मनीषिणा समत्वसिद्धान्तस्य विस्तृतं मौलिकञ्च वर्णनं कृतम् । अद्वैतदर्शनस्यात्मैकत्वविचारमाश्रित्यैवाचार्यो विनोबा निम्नोक्तजातिभावनां तिरस्कृत्य सकलायाः मानवजातेरुदयं कामयते प्रयतते स्म च । सर्वषामुदयं कामयमानेनानेन महत्वपूर्ण योगदानं प्रमाणीकरोत्याचार्यस्य । एवमेव रवीन्द्रनाथ - महात्मागन्धी - प्रभृत्याधुनिकयुगस्य महापुरुषाणमपि विचारदृष्टिरौपनिषदं वेदान्तमेवाश्रित्य विकासमधिगतेत्यपि सुस्पष्टमेव सर्वधा । किं बहुना, यत् सुविदितं राधाकृष्णन् प्रभृतयोऽनेकेऽन्येऽपि विपश्चिद्वर्याः वेदान्तशास्त्रे भूरि भूरि कृतश्रमाः वेदान्तशास्त्रस्य गूढतथ्यानामनुसन्धाने रताः सन्तः स्वधिया वेदान्तशास्त्रमभिनन्दन्तीति विदाङ्कुर्वन्तु सुधियः ।

# NOTE ON 'END OF LIFE'

*N.S. Dravid*

The teaching of Niskama Karma or desireless action in the Gita, and the statement in its several verses that the supreme happiness of moksa is the result of desireless action are found inconsistent with each other by Chakravarty.[1] The inconsistency seems to him to arise because if there is to be no desire for the result of action there is no sense in describing what the result of such action is, by the Gita. Chakravarty considers and rejects some ways of resolving this inconsistency and finally opts for its solution the view that moksa is not the goal of desireless action, that it is 'neither morally nor causally good' and that the motive for desireless action is 'the hope for happiness' in the Kantian sense of the word 'hope'. Chakravarty uses the phrase 'being worthy of happiness' for this 'hope' and says he has arrived at this solution of the inconsistency by combining the insights of Nyaya and Kant on the matter.

Before considering whether the Nyaya and Kantian views on the goal of morality can be combined we may draw attention to the almost preposterous statement made at the end of his essay by Chakravarty, that 'moksa is neither morally nor causally good'. Is there any Indian school of thought which upholds such a view? That moksa is the supreme goal of existence is maintained by every Indian thinker. Even Chakravarty quotes with approval a remark of Gadadhara, the great Indian neo-logician of the sixteenth century, that the supreme happiness of moksa is the primary goal of action. To deny this and to maintain that no desireless action is aimed at moksa which comes unasked to the agent of the action is to totally misrepresent the Indian point of view on moksa. How could moksa be a value or purusartha, least of all the supreme value or 'parama purusartha' if it were not sought after by the moral agent? Chakravarty substitutes 'being worthy of happiness' for actual happiness as the ultimate goal of desireless action. What he means by this is that the doer of desireless action should try to be 'worthy of happiness'. Is not 'being worthy of happiness' a result and does it not call for the effort of the doer to achieve it? According to Nyaya every effort is preceded by the desire to obtain or attain the result to be produced by the effort. In this connection Chakravarty quotes the view of Udayana, (expressed in his commentary on Vacaspati's Tatparyatika) that it is 'vairagya' or 'the sense that enough is enough'. (According to Chakravarty, a peculiar mental state which is neither purely cognitive nor purely conative) which is the cause of actions resulting in moksa. A careful reading of Udayana's remarks in the commentary and the consideration of the Nyaya theory that every instance of voluntary action is invariably caused by the desire for the result of the action, will however show that 'vairagya' can be only the remote cognitive cause of the so-called desireless action. There cannot be any desireless action in the strict sense of the word - even that which leads to moksa - in the Nyaya view. Moreover, it is absurd to say that 'being worthy of happiness' is the ultimate object of actions according to Nyaya. In this school neither happiness nor suffering (or any other so-called mental state for that matter) has any place in the liberated condition of self. Absolute absence of suffering unaccompanied by any state of happiness is the nature of liberation or moksa in the Nyaya view. Even in Kant's ethical philosophy the place of 'worthiness for happiness' is rather dubious. Kant no doubt seeks to connect morality with happiness by postulating the existence of God and the immortality of self. Happiness, according to Kant is, so to say, a reward from God to the moral agent. But is Kant fully justified in holding such a view? Is it not inconsistent with his notion of the categorical imperative

which, he says is the only good and good-in-itself not requiring the supplementation even of happiness? Unless there is some deficiency in morality divested of happiness, Kant's attempt to bring the two together through the postulated agency of God would have to be regarded as unjustified. But be this as it may, a combination of views like those of Nyaya and Kant which have very little in common with each other cannot at all be envisaged.

The right solution to the apparent inconsistency in the Gita is to be found in the reason given there for withholding the desire for the result of one's action. Gita says that various factors like destiny, means of action, diverse material processes, etc., besides the action concerned determine how and when the latter will bear any result. The doer of the action cannot exercise control over all these factors. God is the overall controller of all that goes on in the world. Under such circumstances, it would be but wise for man to concentrate all his attention on the action itself and execute it with the utmost efficiency and leave it to God to reward the action appropriately. Thus, it would be both foolish and egoistic on the part of a sincere activist to attend to the result of his action (even including moksa) when it cannot be fully controlled by him and when God stands guarantee for the successful consummation of all sincere actions whosoever may have done them.

The corresponding inconsistency in the position of Advaita Vedanta can be resolved by taking note of the distinctive character of the desire for moksa as understood by this school. Chakravarty has, in this connection, misrepresented certain remarks from Vidvan-Manoranjani commentary of Vedanta-sara, an important inroductory text of Vedanta. There the commentator says that the so-called desire for moksa is unlike all other desires in that it does not produce or bring into being any result that is not already in existence. The liberation of self is nothing but the realisation of the self or its real nature. Nothing new accrues to the self in this process of realisation. There being thus no result to be produced, there cannot be any desire there in the strict sense of the word.

In another way too the distinctive nature of the moksa-desire may be brought out. Desires for empirical objects are gratified but not destroyed by the attainment of their objects. In fact each experience of gratification of the empirical desire may lead to greater and greater intensification of the desire. But the desire for moksa is supposed to lead to the total elimination of all desires including itself. This is why this desire is said to arise only when a sense of disgust for all the mundane and extra- mundane objects takes root in one's mind. Thus the inconsistency stands fully resolved in Vedanta, as according to it neither moksa is a result nor the so-called desire for moksa is a desire strictly speaking.

According to Nyaya however there has to be the desire for liberation for initiating action leading to the latter. But liberation which is of the nature of absolute negation or absence of suffering for this school is not a positive result. The goal of the seeker of liberation is just to be rid of suffering and not to obtain anything. For this reason the desire for moksa in Nyaya too cannot be supposed to be aimed at any positive result.

The Vedantic solution of the inconsistency could also be adopted by Nyaya. The self in Nyaya is instrinsically devoid both of suffering and happiness and as such the elimination of all suffering caused by action is not the production of a result but simply the reinstatement of the self to its own real nature.

One final point. It may be asked, 'whatever may be the nature of moksa, if there is desire for it, (whatever the nature of this desire) can't there be attachment to it on the part of the person who

seeks to achieve it?' The answer is, 'No'. The attachment to moksa by a spiritual aspirant (as contemplated by a Nyaya author quoted by Chakravarty) cannot be envisaged at all. Only a spiritually-unregenerate person who takes himself to be an embodied being can have the attachment, which is of the nature of a limitation. To the spiritually-awakened person (in the state of moksa) whose identity is merged in the pure self (divested of all limitations) no attachment is possible at all.

**Notes**

1. See 'The End of Life : A Nyaya-Kantian Approach to the Bhagavadgita' by Dr. A. Chakravarty, Journal of Indian Philosophy 16(1988) 327-334.

# आनन्दवादो दुःखवादश्च

पण्डितराजः श्रीमुरलीधरपाण्डेयः

भारतीयप्रसिद्धद्वादशदर्शनानामनेकप्रकारेण वर्गीकरणं कृतमस्ति - प्रथमस्तावत् - श्रुतिसापेक्षाणि श्रुतिनिरपेक्षाणि च। यानि दर्शनानि येनकेनापि प्रकारेण श्रुतिमपेक्षन्ते तानि श्रुतिसापेक्षाणि, यानि च श्रुतिं नापेक्षन्ते तानि श्रुतिनिरपेक्षाणीत्युच्यन्ते। श्रुतिनिरपेक्षेषु चार्वाकजैनचतुर्विधबौद्धदर्शनानि गण्यन्ते, श्रुतिनिरपेक्षेषु च साङ्ख्ययोगन्यायवैशेषिकपूर्वोत्तरमीमांसादर्शनानि परिगण्यन्ते। अतः परोप्येको विभेदकप्रकारोऽस्ति - सद्वादि, असद्वादि, सदसद्वादि, सदसदनुभयचतुष्कोटिविनिर्मुक्तवादि च। यथा सद्वादीनि पूर्वमीमांसादर्शनं तथोत्तरमीमांसावेदान्तदर्शनं साङ्ख्ययोगदर्शनं च। असद्वादिनि न्यायवैशेषिकदर्शने जैनदिर्शनं च सदसद्वादि चार्वाकदर्शनं सदसत् सदसदसदसदनुभयचतुष्कोटिविनिर्मुक्तवादि चतुर्विधबौद्धदर्शनं च।

अत्र पूर्वोत्तरमीमांसे सदेव सौम्य इदमग्र आसीत् (छ. उप. ६/२/१) इति श्रुतिमाद्यन्तः सद्वादं च पोषयतः। साङ्ख्ययोगदर्शने अपि सत्कार्यवादमाश्रित्य परिणामपक्षं चाधृत्य नित्या प्रकृतिः नित्यो जीवो जगच्च कारणावस्थापन्नमव्यक्तमिति कृत्वा सद्वादिन्येव। न्यायवैशेषिकदर्शने च - असदेव इदमग्र आसीत् (छ.उप. ६/२/२) इति श्रुतिमाश्रित्य असतः सज्जायत इत्यङ्गीकुरुतः। जीवादृष्टवशादीश्वरो गजदुत्पादयति। उत्पादनं च कार्यं तच्च प्रागभाव प्रतियोगिरूपम्। एतदर्थमिमांश्रुति मुपस्थापयत :-

विश्वतश्चक्षु रुतविश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्।
स बाहुभ्यां धमति संपतत्रैः द्यावाभूमीजनयन् देव एकः॥ (ऋ वे. ८.३.१६)

अस्यार्थं न्यायकुसुमाञ्जलौ श्रीमदुदयनाचार्य एवं स्पष्टयति ''षष्ठेन परमाणुरूपप्रधानाधिष्ठेयमुक्तम्। ते हि गतिशीलत्वात् पतत्रव्यपदेश्या भवन्ति। संधमति संजनयन्निति च व्यवहितोपसर्गसम्बन्धः। तेन संयोजयति समुत्पादयन्नित्यर्थः।

एवमेव जैनदर्शनमपि पुद्गलतः सृष्टिस्वीकारेण अनेकान्तवादाङ्गीकारेण सप्तभङ्गिन्यायाश्रयणेन च तथा जीवात्मनः सत्स्वीकारेण सदसदुभयात्मकं वक्तुं शक्यते। देहात्मवादिनश्चार्वाका अप्येवमेव सन्ति। यत्र न पूर्वं सन्न च पश्चात् सत् किन्तु दृश्यमानमात्रं सत्। भस्मीभूतस्य देहस्य पुनरागमनं कुत इति तेषामुक्तिः प्रसिद्धैव। अतः सदसदुभयात्मवादिन एव चार्वाका अपि।

एतेभ्यः सर्वेभ्यो विलक्षणा बौद्धाः। एते न सद्वादिनः, न असद्वादिनः, न सदसदुभयवादिनः, नच सदसदभाववादिनः। किन्तु एतच्चतुष्कोटिविनिर्मुक्तशून्यतत्त्ववादिन इमे। एतेषामयं सिद्धान्तः प्रसिद्ध एव -

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥(मिध्यमककारिकायाम् - १/३)

एतेषां सर्वेषां सदसत् सदसदनुभयवादिनां प्रत्यक्षमात्रसद्वादिनां च मूलम् ऋग्वेदे नासदीयसूक्ते प्राप्यते नासीदासीन्नो सदासीत् तदानीं नासीद् रजो नोव्योमापुरोयत्। किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद् गहनं गभीरम्॥ (ऋ.वे. १०.१२९.१)

न मृत्युरासीदमृतं न तर्हि न रात्रा न अह्नः आसीत् प्रकेतः।
आनीदवातं स्वधयातदेकं तस्माद्धान्यन्न परः किं च नास॥ (तत्रैव - २)

तम आतीत् तमसा गूळ्हमग्रे ऽ प्रकेतं सलिलं सर्वमा इदम्।
तुच्छेनाभ्वपिहितं यदासीत् तपस् तन्महिम्ना जायतैकम्॥ (तत्रैव-३)

को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः।
अर्वाग् देवा अस्य विसर्जनेनाथ को वेद यत आबभूव॥ (तत्रैव ६)

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वान।
यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद॥ (तत्रैव - ७)

आभ्यामुभाभ्यामतिरिक्तमप्येकं विभाजकं तत्त्वमस्ति आनन्दवादः दुःखवादश्चेति। अयमेव विभाजक प्रकार उत्तम इति विभाव्यते। उपनिषन्मूलकं दर्शनम् आनन्दवादि तदतिरिक्तं सर्वं दुःखवादि। यतो हि दर्शनं ज्ञानप्रधानं भवति। वेदस्योपनिषद्भागे ज्ञानकाण्डमस्ति। अतो ज्ञानकाण्डोपनिषन्मूलकं दर्शनमेव वैदिकदर्शनम्। यानि च नोपनिषन्मूलकानि दर्शनानि तानि दुःखवादीनि। विश्वस्य मूलं सत् तत्त्वं तच्च आनन्दरूपम्। एतच्च बहुधा प्रतिपादितं तत्रतत्र। यथा हि - एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति। (बृ.आ.उप.४.३.३२) विज्ञानमानन्दंब्रह्म। (बृ.आ.उप.३.१.८) आनन्दं ब्रह्मेति व्याजातात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति प्रत्यभिसंविशन्ति (तैत्ति. उप. ३.६) सच्चिदानन्दं ब्रह्म (महानारायणोपनिषदि त्रिपादविभूतौ १.३) एवञ्चोपनिषदाधृतं दर्शनं वेदान्तः। सच शाङ्करः रामानुजीयः, माध्वः, नैम्बार्कः, बाल्लभः, गौडीयः, रामानन्दीयश्च। एते जगदाधारं मूलतत्त्वमानन्दस्वरूपमेव मन्यन्ते।

एवञ्चोपनिषदाधृतं दर्शनं वेदान्तः शाङ्करवेदान्तो रामानुजवेदान्तो मध्ववेदान्तो निम्बार्कवेदान्तो वल्लभवेदान्तो गौडीयवेदान्तो रामानन्दवेदान्तश्च जगन्मूलतत्त्वमानन्दमेव मन्यन्ते। एतेषां सिद्धान्तग्रन्थे ब्रह्मसूत्रे च सूत्रितम् आनन्दमयोऽभ्यासात्। (१.१.१३) अतः सर्वं सदा आनन्दमयमेव। संसारदशायां यदाजीवे आनन्दानुभूतिर्न जायते तस्य कारणं तत्र केवलमावरणमेव। एतच्चावरणं शाङ्करमतेऽविद्याकृतम्, अपरेषां रामानुजाचार्यादीनांते च जीवेश्वरयोरंशांशिभावेऽपि मायाकर्मादिवशेनानन्दाद्यावरणव्यवस्था क्रियते। इत्थं च भारतीयदर्शनेष्विदमेकमेवोत्तरमीमांसादर्शनं वेदान्तदर्शनं स्पष्टतः सर्वथाऽनन्दवादि। पूर्वमीमांसादर्शनं जैमिनीयदर्शनमपि प्रयोजनरूपेणानन्दमङ्गीकरोति, किन्तु प्रकारान्तरेण सुखशब्देन। सुखशब्दोऽपि आनन्दशब्दार्थे विद्वद्भिः प्रयुज्यते - यथा श्रीवाचस्पतिमिश्रेण ब्रह्मसूत्रस्य भामतीटीकायां मङ्गलश्लोके नमस्यामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् - इत्युक्तम्। तच्च सुखं द्विविधं भवति। यथोक्तं वेदान्तपरिभाषायां प्रयोजनपरिच्छेदे - सुखं च द्विविधम् - सातिशयं निरतिशयं चेति। तत्र सातिशयं सुखं विषयानुषङ्गजनितान्तः करणवृत्तितारतम्यकृतानन्दलेशाविर्भावविशेषः। निरतिशयसुखं च ब्रह्मैव। सुखशब्दव्युत्पत्तिरपि इदमेवाभिदधाति

सुष्ठु खानि इन्द्रियाणि यत्र तत् सुखम्। अर्थाद् यत्रेन्द्रियसंप्रयोगजनिताप्यायनं तत्र सुखमुच्यते। तत्र पूर्वमीमांसानये स्वर्गसुखं जायते । इदं स्वर्गसुखं निरतिशयं सातिशयं वा ब्रह्मरूपं वेत्यत्र विदुषामभिप्रायभेदोऽस्ति । इत्थं चोभयमीमांसा दर्शनमानन्दवादि।

अपराणिच सर्वाणि प्रसिद्धानि भारतीयदर्शनानि दुःखवादमूलकान्येव/मन्येऽत्र कारणं बौद्धदर्शनप्रभाव एव। बौद्धदर्शनेनैव सर्वप्रथमं चतुरार्यसत्यममन्यत १ - सर्वं दुःखम् २ - दुःखसमुदयः ३ दुःखनिरोधः ४ - दुखनिरोधगामिनी प्रतिपत्।

(महानिब्वात सूत्त २.४८) एतेषामुच्छेदार्थमुपदिष्टम्

चतुन्नं अरिआ सच्चानं अदस्सन्ना।
संसरितं दीघमद्धानं तासु तास्वेव जातिषु।
तानि एतानि दिनि भवनेति समूहता।
उच्छिन्नं मूलं दुःखस्स न त्थि दानि पुनबभवोति॥

इत्थं बौद्धदर्शनस्य मुख्यं प्रयोजनं दुःखोच्छेदः। अयं च दुःखोच्छेदः दुःखध्वंसरूपो दुःखाभावरूपो वा भवितुमर्हति/यतो हि अतः परं बौद्धैर्न विचारितं यदेतद् दुःखोच्छेदानन्तरं केन भवितव्यम्। यदुक्तं निर्वाणं तदपि - निर्गतं वानं दुःखं यस्मादिति व्युत्पत्त्या दुःखोच्छेदरूपमेव।

अतो बौद्धदर्शनस्य दुःखवादस्य प्रभावादेव सांख्यादि दर्शनेषु अनादिकालतो व्याप्तपस्य दुःखस्य व्याख्या तथा ततत्राणं प्राप्तुमुपायस्य च चर्चोपलम्यते किन्तु आनन्दस्य व्याख्या तथानन्दावाप्त्युपायो न स्पृश्यते । यथेश्वरकृष्णेन सांख्यकारिकाग्रन्थस्यादौ प्रतिज्ञायते -

दुःखत्रयाभिघाताज् जिज्ञासा तदपघातके हेतौ।
दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽ भावात्॥

अत्र प्रतिज्ञातं यदाध्यात्मिकाधिदैविकाधिभौतिकरूपं दुःखत्रयमस्ति। अस्य विनाशे यत्नः कार्यो हेतुश्च चिन्तनीय इति। तेन प्रकृतिपुरुषयो; संयोग एव दुःखकारणं तयोश्च परस्परदर्शनजन्यवियोग एव दुःखोच्छेदकारणम् । प्रकृतिपुरुषयोः पृथग्भावः केवलीभाव एव कैवल्यम्, कैवल्यमेव परमपुरुषार्थः । ज्ञस्य जीवस्य केवलं स्वरूपेऽवस्थितिस्तथा प्रकृतेरपि स्वस्यां प्रकृतावस्थितिः। अत्र सुखस्य वानन्दस्य कृते न किमपि चिन्तितम्। साङ्ख्यदर्शनं योगदर्शनं च समानतन्त्रम्। पातञ्चलयोगसूत्रस्यादौ तथान्ते च इदमेव तथ्यमुक्तम् - तदा द्रष्टुः स्वरूपेऽवस्थानम् (१.३) परिणामतापसंस्कारदुःखैर्गुणवृत्तिनिरोधाच्च दुःखमेव सर्वं विवेकिनः। (२.१५) पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वस्वरूपप्रतिष्ठा वा चितिशक्तिः। (४.३४) अस्मिन् सिद्धान्ते व्यक्ताव्यक्तयोश्चैतन्यमेव नास्ति । ज्ञश्च केवलं स एव चैतन्यमेव । अत्रनास्ति केवलीभावे आपन्ने आनन्दानानन्दविषयचर्चा। अतः स्पष्टमेव बौद्धदुःखवादस्य प्रभावः। आनन्दवादिवैदिकदर्शनसंस्कारसंस्कृते ग्रन्थे आदावन्तेमध्ये च कल्याणकारकं मङ्गलानुशासनं श्रूयते। किन्तु साङ्ख्यकारिकाग्रन्थस्यादौ - दुःखययाशासनं श्रूयते । किन्तु साङ्ख्यकारिकाग्रन्थस्यादौ - दुःखत्रयाभिघाताद् - इत्यादिना दुःखशब्देन प्रारम्भः। एवमेव पातञ्जलयोगसूत्रस्यादौ कतिचित्सूत्रानन्तरं क्लेशप्रकारवर्णनमारभ्यते।

इत्थमेव समानतन्त्रे न्याय वैशेषिक दर्शनेऽपि दृश्यते। तथोक्तं प्रमाणतत्त्वज्ञानान्निश्रेयसाधिगमः। निःश्रेयो नामापवर्गः । अपवर्गस्वरूपं च श्रीकेशवमिश्रेण तर्कभाषायामित्थमुक्तम् - सोयमेकविशंतिप्रभेदभिन्न दुःखहानिर्मोक्षो ऽपवर्गः । अत्रापि आनन्दस्य न स्पर्शः । न्यायसूत्रभाष्येऽत्र विचारितं यत् मुक्तिर्नित्यसुखाभिव्यक्तिरूपा। पुनरत्राशङ्कितं यद्यदि मुक्तिर्नित्यसुखाभिव्यक्तिरूपा तर्हि संसारदशायां कथं न जायते तथा यद्यनित्या तदात्र कारणं नोपलक्ष्यते / एवं रीत्या नित्यसुखाभिव्यक्ति र्मोक्ष इति पक्षः खण्डितः। अत्र प्रमाणं चोपन्यस्तम् - अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः (छा.उप. ८.१२.१) एवं च न्यायवैशेषिकदर्शनेऽपि आनन्दवादस्य नास्त्यवकाशः । सूचितं चैतत्तत्तदाचार्यैः । यथाचार्यगौतमेन सूत्रितम् - दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः (१.१.२) एतदनन्तरं च गौतमसूत्रवृत्तौ (१.१.२२) श्री विश्वनाथपञ्चाननेन स्पष्टीकृतम् - स्वसामानाधिकरणदुःखासमानकालीन दुःखध्वंस इति। एवमेव तत्त्वचिन्तामणिप्रकाशेऽप्युक्तम्-दुःखध्वंसस्य परमप्रयोजनत्वम्-स एव मोक्ष इति। अस्मिन् मते दुःखाभाव एव सुखम्, तच्चैव मोक्षः। यथा ह न्यायवार्तिके (१.१.२२) टिप्पण्याम् - दृष्टश्च दुःखाभावेऽपि सुखशब्दप्रयोगो बहुधा लोके। यथा ज्वराद्यपगमे लौकिका व्याचक्षाणा भवन्ति सुखिनः संवृत्ताः स्मः।

एवमेव जैनदर्शनेऽपि श्रीमता उमास्वामिना तत्त्वार्थसूत्रे (१०.९५) निगदितं यत्सम्यग्ज्ञानेन सम्यग्दर्शनेन सम्यक् चारित्र्येण च कर्मबन्धनानामात्यन्तिके विनाशे जीवः स्वाभाविकगत्या ऊर्ध्वगतिं प्राप्नोति, तत्र च सिद्ध शिलायामनन्तकालं वसति । अयमेव मोक्षः । इदं च तत्त्वं सर्वदर्शनसंग्रहे आर्हतदर्शनप्रकरणे एवमुक्तम् - मिथ्यादर्शनादीनां बन्धहेतूनां निरोधेऽभिनवकर्माभावान्निर्जराहेतुसन्निधानेनार्जितस्य कर्मणो निरसनादात्यन्तिक कर्ममोक्षणं मोक्षः । तत्रैव च पुनः गतसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मनः उपरिदेशावस्थानं मुक्तिः लब्धा तन्न चतुष्कस्य लोकारूढस्य चात्मनः क्षीणेष्ठकर्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता। विचारदशायां जैनदर्शनस्यायं मोक्षोऽपि नैयायिकवैशेषिकाभिमतमोक्ष इव प्रतिभाति। अत्रापि बौद्धदर्शनाभिमत दुःखवादस्य प्रभावः स्पष्ट एव लक्ष्यते। यतो हि प्रकारान्तरेण बहुसाम्यमभ्युपगच्छतो दुःखाभाव एव परमं प्रयोजन मुक्तंभवति । इदं सत्यं यदैतिहासिकमतानुसारं बौद्धदर्शनात् प्राग् जैनदर्शनं प्रवर्तितम् किन्तु श्रीस्थूलभद्राद् श्रीभद्रबाहो; श्रीमदुमास्वामिनोऽनन्तरमेव जैनदर्शनस्य महान् विकासोऽ जायत। अतो बौद्धाभिमतदुःखवादस्य प्रभावो जैनदर्शनेऽपि सञ्जातः।

बौद्धानां दुःखवादप्रवर्तनप्रयोजनं केवलमनाद्यपौरुषेयौपनिषदानन्दवादानभिमतिः।

इत्थं च द्वादशविधप्रसिद्धभारतीयदर्शनमोक्षसिद्धान्तपर्यालोचनेनेदं स्पष्टीभवति यदयमानन्दवादः केवलमौपनिषददर्शनस्य वेदान्तस्य प्रसूतिः। वेदान्तेतरदर्शनानां च मूलं तथा प्रसूतिर्दुःखवादः, स च बौद्धदर्शन प्रभावेण तत्र तत्र समाविष्टः। अस्य च प्रभावः सुखान्त दुःखान्त दृश्य श्रव्य काव्येष्वपि प्रविष्टः। इतिशम्।

# पञ्चरात्रे जीवस्वरूपम्

डा. लक्ष्मीनरसिंहभट्टः

पञ्चरात्रसंहितासु जीवस्य स्वरूपं विविधैः प्रकारैरुपवर्ण्यते तथा हि-

चिद्रूपं गुणरागादिभिः युक्तं च चैतन्यं जीव इति जयाख्यसंहितायाम्,[1] चैतन्यस्वरूपः स्वयं प्रकाशः शुद्धस्फटिकतुल्यो नित्यो जीव इति विष्णुतिलके,[2] अनादिः अपरिच्छेद्यः ज्ञानानन्दस्वरूपः भगवन्मयो जीव इति अहिर्बुध्न्यसंहितायाम्,[3] शुद्धा चिदानन्दरूपिणी चिच्छक्तिः अनाद्यविद्यया विद्धा सती जीव इत्याख्यायते इति,[4] हरेः अहंतायाः प्रमातृ अन्तः करण - बहिष्करण - भावभूमिकाख्यया याः चतस्रः दशा भवन्ति तत्र लक्ष्म्याः संकोचरूपः प्रमाता जीव इति च लक्ष्मीतन्त्रे,[5] पुण्यापुण्यफलभोक्ता जीव इति पाद्मसंहितायाम्, [6] उपाधौ विष्णोः प्रतिबिम्बं जीव इति विष्णुसंहितायां [7] च जीवस्वरूपमुपवर्ण्यते ।

पूर्वोक्तानां जीवस्वरूपाणं परिशीलनेन एतदवगम्यते यत् जयाख्ये लक्ष्मीतन्त्रे च यद्यपि जीवस्वरूपं समानतया वर्ण्यते तथापि जयाख्यापेक्षया लक्ष्मीतन्त्रे अहंतायाः प्रमात्रादि दशाचतुष्टयवर्णनपूर्वकं प्रमातृदशा जीव इति अधिकतया प्रतिपाद्यते । एवमेव विष्णुतिलके अहिर्बुध्न्ये च जीवस्वरूपकथने भागशः साम्यं दृश्यते तथापि क्वचिद्भेदो दृश्यते । तथा हि- जीवः ज्ञानानन्दस्वरूपः चैतन्यस्वरूपः स्वयंप्रकाश इत्यत्र साम्यं दृश्यते । अहिर्बुध्न्ये तु कालशक्तिवशात् जीवः संसरति इति विशेषः प्रदर्शितः । विष्णुतिलके जीवस्य नित्यत्वं विशेषः । विष्णुसंहितायां प्रतिबिम्बरूपेण, पाद्मसंहितायां कर्मफलभोक्तृत्वेन रूपेण जीवः भिन्नतया उपवर्ण्यते ।

इत्थं पञ्चरात्रसंहितानां जीवस्वरूपनिरूपणपरेषु अंशेषु परिशीलितेषु सत्सु स्वयंप्रकाशस्य चैतन्यस्य अनाद्यविद्यासंबन्धेन कर्मफलभोक्तृत्वे जीवत्वमित्यवगन्तुं शक्यते । अयमभिप्रायः वेदान्तिनां जीवस्वरूपाभिप्रायेण साम्यं वहति ।

अविद्यासंबन्धात् आत्मनः नानात्वं भवतीति जयाख्यसंहितायाम्[8] उच्यते । मुखस्य नानात्वमिव, एकस्यैव मुखस्य दर्पणभेदेन उपाधिवशाद्यथा नानात्वं दृश्यते तथा उपाधिभेदात् एकस्यैव विष्णोः नानात्वं मन्दबुद्धिभिरुच्यते। परमार्थतस्तु आत्मा एक एव इति विष्णुसंहितायाम्[9] उच्यते । विष्णुसंहितोक्त जीवात्मस्वरूपदर्शनेन अद्वैतसिद्धान्तः अत्र प्रतिफलतीति वक्तुं शक्यते । अद्वैतिनो हि एकमेव चैतन्यं मायायामन्तःकरणेषु वा प्रतिबिम्बितं सत् जीवव्यपदेशं लब्ध्वा संसरति नानात्वं भजत इति निरूपयन्ति । अत्र संहितायामपि परमात्मनः स्वाभाविकं बहुत्वं निराकृत्य औपाधिकस्य बहुत्वस्य कथनात् आत्मैक्यवादः संमत इति प्रतीयते ।

विष्णुतिलके जीवः ब्रह्मतुल्य इति कथनात् परमात्माभेदः जीवात्मनः न स्पष्टमुक्तः ।

विष्णोः महासत्तानाम्नी शक्तिर्वर्तते । तस्याः कोटयर्बुदांशभूते भूतिः क्रिया चेति द्वे शक्ती भवतः । तत्र भूतिशक्तिः शुद्धा अशुद्धा चेति द्विविधा । शुद्धा शक्तिः पुंशक्तिः कालशक्तिश्चेति द्विविधा । तत्र पुंशक्तिरेव

1. ज.४.५७ क्षज्ञ, ८ab
2. वि.ति. १.१०६, 7ab
3. अहि. १४.६
4. लक्ष्मी. १२.१८ ab, १३.३८
5. झळज्ञि ६, ३७, ६ ab
6. पाद्म. (ज्ञा) ४.१० abc
7. वि.३.३४ क्षज्ञ, ५ ab
8. H.४.७३ cd, ४ ab
9. zव. ३.३३ क्षd, ४ ab; ४.११

जीवात्मेति कथ्यते। अयं च जीवात्मा कालशक्तिवशंवदः सन् संसरति। परमार्थतः अनणुः ईश्वरः सर्वज्ञश्चायं जीवः अविद्यया स्वस्वरूपस्य तिरोधानात् अणुः अनीश्वरः (अकिंचित्करः) असर्वज्ञश्च भवति इति अहिर्बुध्न्यसंहितायां जीवात्मनः स्वरूपमुपवर्ण्यते''।

अत्र परमात्मनः अनेकविधाः शक्तीर्निर्दिश्य तासु पुंशक्तिः जीवात्मा इति नूतनः सिद्धान्तः आविष्कृतः। एवं रीत्या शक्तिस्वरूपत्वं जीवस्य अद्वैते विशिष्टाद्वैते वा न प्रतिपाद्यते। परं तु शक्त्यात्मवादः अत्र नूतनः।

अहिर्बुध्न्यसंहितायां परमात्मशक्तिलेशरूपत्वं जीवात्मनः उपवर्णितम्। लक्ष्मीतन्त्रे तु लक्ष्मीशक्तिलेशत्वं प्रतिपादितमिति भेदः। अन्यत्सर्वमुभयत्र समानम्।

पाद्मसंहितायां जीवात्मा शुभाशुभात्मकं कर्म कृत्वा तदनुगुणतया मायासंबन्धेन अनेकविधानि शरीराणि प्राप्य मायागमैः सत्त्वरजस्तमोगुणैः प्रेरितः गुणत्रयानुगुणानि सुखदुःखानि भजमानः संसारी भवति इति जीवात्मनः स्वरूपमुपवर्णितम्। प्रकृतिगतैः सत्त्वादिगुणैः शुभाशुभानि कर्माणि करोतीत्ययं सिद्धान्तः सांख्य दर्शनमनुसरति।

इत्थं पञ्चरात्रसंहितासु जीवबोधकवाक्यानां परिशीलनेन उपनिषत्प्रतिपादितस्यैव जीवस्वरूपस्य प्रतिपादनात् नात्र पञ्चरात्राप्रामाण्यशङ्का युक्ता।

---

10. वि.ति. १.१०७ ab  11. अहि. १४.७.१०; १८, ९ab  12. पाद्म (ज्ञा) ४.१०,१९, २०

॥ श्रीः ॥

# रामानुजमतानुसारेण 'एक विज्ञानेन सर्वविज्ञानप्रतिज्ञायाः विचारः'

टि.वि. राघवाचार्युलु

वेदवित्प्रवरप्रोक्ताः वाक्यन्यायोपबृंहिताः ।
वेदास्साङ्गं हरिं प्राहुः जगज्जन्मादि कारणम् ॥

अनादिनिधने वेदे अन्तर्लीनतया स्थित्वा वेदान्तेषु संभाषणोपन्यासोपदेशवादेभ्यः एकं रूपं धृत्वा, स्मृतीतिहासपुराणेषु कथारूपेण कथितस्सन्, प्रस्थानत्रये संग्रहरूपेण बोधिततत्वार्थः वेदार्थः । वेदविदग्रेसर वाल्मीकि-पराशर-द्वैपायनवचोभिः प्रतिपादितः, भगवद्बोधायन - टंक - द्रमिड - गुहदेव - कपर्दि - भारुचि इत्यादि पूर्वाचार्यैः परंपरागतसिद्धान्तः विशिष्टैक्यसिद्धान्तः । सदाचार्य प्रदर्शितपदव्यनुसारेण अविगीतशिष्ट परिगृहीत पुरातन वेदान्तव्याख्यानसुव्यक्तश्रुतिनिकरदर्शितः विशिष्टैक्यसिद्धान्तः भगवद्रामानुजाचार्यैः विस्तृतं विवृतत्वात् प्रसारितत्वाच्च रामानुजसिद्धान्तः, रामानुजदर्शनमिति सुप्रसिद्धः । परस्य ब्रह्मणः सर्वस्यात्मत्वावगमात् विशिष्टैक्यप्रतिपादकस्य "एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यस्य विचारः रामानुजमतानुसारेण अत्र क्रियते ।

छान्दोग्योपनिषदि श्वेतकेतुं प्रति पिता उद्दालकः "एक विज्ञानेन सर्वविज्ञानं संभवतीति प्राह । इतरेषां शास्त्राणां ज्ञानं कथं संभवति? इति संदेहे जायमाने सति उदाहरणेन वारयति "एकेन मृत्पिण्डेन घटशरावादीनि विविधानि-वस्तूनि क्रियन्ते । तदानीमेकेन मृत्पिण्डविज्ञानेन सर्वघटशरावादीनां वस्तूनां ज्ञानं यथा संभवति, तथैव अस्य सर्वस्य मूलाधारभूतं यत्, तत् ज्ञातं चेत् तेन ज्ञानेन सर्वविज्ञानं संभवति इति ।

किं तन्मूलमित्युक्ते? श्रुतयः वदन्ति - "इदं सर्वं यदयमात्मा"[1] "अयमात्मा ब्रह्म"[2] [3]"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रत्ययन्त्यभिसंविशन्ति, तद्ब्रह्म, तद्विजिज्ञासस्व "तत्सत्यं, तत्सर्वं, तदात्मा"[4] "सत्यं ज्ञानमनन्तं ब्रह्म"[5] इति । तस्मात् मूलाधारभूतेन ।ब्रह्मज्ञानेन सर्वविज्ञानं संभवतीति स्पष्टं भवति ।

कारणज्ञानेन कार्यज्ञानं संभवतीति दर्शनेषु निरूपितम् । दृश्यमानस्य अस्य सर्वस्य जगतः एक शब्दवाच्यं ब्रह्म उपादानकारणं जगत्सर्वं कार्यम् । मूलभूतवस्तु यत् रूपान्तराणि आप्नोति, तदुपादानं कारणम् । रूपान्तराणि उपादेयकार्याणि । मृत्पिण्डघटशरावादिदृष्टान्तेन जगद्ब्रह्मणोः उपादानोपादेयभावः विद्यते इति स्पष्टं भवति । तथैव "सर्व" पदेन ब्रह्मणः भिन्नस्य सर्वस्य जगतः कार्यवर्गस्य सत्वात् निमित्तकारणमन्यत् नास्तीति, सर्वस्य जगतः

---

1. बृहदारण्यकोपनिषत् 2-4-6
2. बृहदारण्यकोपनिषत् 6-4-5
3. तैत्तिरीयोपनिषद्, भृगुवल्ली - 1
4. पुरुषसूक्तम्
5. तैत्तिरीयोपनिषत्, आनं

उपादानकारणं ब्रह्मैव निमित्तकारणमपीति स्पष्टं भवति। एकविज्ञानश्रुतौ विद्यमान एकपदमेव न, [1]''सदेव सोम्य! इदमग्र आसीत्, एकमेवाद्वितीयम्'' इति श्रुतौ विद्यमानं ''अद्वितीयपदमपि निमित्तकारणमन्यत् नास्तीति, सर्वस्य जगतः उभयविधकारणसमर्थः परमात्मैवेति स्पष्टयति।

उपादानं नाम रूपान्तरप्राप्तं खलु। चैतन्याश्रयब्रह्म अचेतनजगद्रूपेण कथं परिणमति? इति संदेहे जायमाने सति उत्तरमेतत् - चेतना चेतनरूपवैविध्ययुक्त सर्वजगतः उपादानकारणभूतः सर्वविधविचित्रशक्तिविशिष्टः स परमात्मेति। केवल सादृश्येन एकेन गो ज्ञानेन इतरेषां गवां ज्ञानं यथा तथा न भवति। उपादानोपादेय भावादेव एकविज्ञानेन सर्वविज्ञानं संभवति।

उपादानोपादेयभाववस्तुनी स्वरूपतः एकमेव खलु। स्वरूपस्वभावानुद्दिश्य ईश्वरात् भिन्नयोः जडात्मकप्रकृतेः अनुरूप- अल्पशक्तिकजीवनवर्गस्य च ईश्वरः कथं उपादानकारणं स्यात् ? विशिष्टाद्वैते चिदचिदीश्वररूपतत्वत्रयस्य अत्यन्त भेदः वर्तते खलु। तस्मात् चिदचिन्मिश्रजगतः तद्भिन्नः ईश्वरः उपादानकारणं भवितुं नार्हति। तस्मात् ब्रह्मज्ञानेन सर्वज्ञानं संभवतीति एकविज्ञानेन सर्वविज्ञानश्रुतिः विशिष्टाद्वैतमते न संगच्छते इति चेत् ? न।

सृष्टिस्थितिलयेषु त्रिकालावस्थासु चिदचित्पदार्थानाम् ईश्वरेण अविनाभाव संबन्धस्य सत्वात् परब्रह्म सर्वदा तद्विशिष्टमेव।

**भगवता गीतायां स्वयमुक्तं खलु -**

[2]भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
[3]अपरेयमितस्त्वन्यां प्रकृतिं विद्धि में पराम्।
जीवभूतां महाबाहो यदेदं धार्यते जगत्॥
[4]एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा॥ इति॥

आत्मनि अपरकृतिर्नाम भूम्यादि जडरूपप्रकृतिः प्रकृतिर्नाम जीववर्गश्च सूक्ष्मरूपेण लीनं भूत्वा वर्तते। इति, तदुभयविधचिद चिद्रूपसूक्ष्मप्रकृतिभ्यां दृश्यमानं स्थूलप्रपञ्चं सृजाम्यहमिति, सर्वस्य जगतः प्रभवः तथा प्रलयश्च अहमेवेति भावः।

तस्मात् चिदचिदुभयविशिष्टं परब्रह्मेति स्पष्टं भवति। [5]तथा प्रकृतिद्वययोनित्वेन कृत्स्नस्य जगतः तयोः द्वयोरपि मदीयत्वेन, मद्योनित्वेन च अहमेव प्रभवः अहमेव प्रलयः अह मेवच शेषीत्युपधारय इति रामानुजभाष्यम्। अत्र प्रकृतिपुरुषरूपेण समष्टिदशोक्ता। ब्रह्मादिस्तम्बपर्यन्तम् अधिकाल्परूपैः विद्यमानाः सर्वे पदार्थाः

---

1. छान्दोग्योपनिषत् 6-2-1 2. भ. गी. 7 - 4 3. भ. गी. 7 - 5 4. भ. गी. 7 - 6
5. रामानुजगीता भाष्यम् 7 - 6

चिदचिन्मिश्राः एव समस्त भूताश्च चेतनाचेतन समष्टिरूपचिदचिद्भ्यामेव संजाताः। चिदचितौ भगवता सृष्टौ, भगवदधीनौ। तस्मात् तयोः उत्पत्तिस्थितिलयानां परमात्मैव कारणमिति भावः।

[1]"विष्णोस्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र"

[2]"प्रकृतिर्या मयाख्याता व्यक्ताव्यक्त स्वरूपिणी"
"पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि"

[3]"परमात्मा च सर्वेषामाधारः परमेश्वरः"
"विष्णु नामा स वेदेषु वेदान्तेषु च गीयते" ॥ इति च ॥

विष्णोः रूपात् प्रकृतिः पुरुषश्च द्वे रूपे उदिते परतः उदिते इत्यत्र संधिः आर्षः विना, परतः दिते इत्युक्तं चेत्, दो अवखण्डने इति धात्वर्थात् विष्णोः रूपात् द्वावपि पृथग्भूतौ इति भावः स्यात् अत्र प्रलयदशाग्रहणात् प्रकृतिपुरुषेश्वराः प्रलयदशायां परस्परस्वरूपभेदैरेव वर्तन्ते इति स्पष्टं भवति। परतः अदिते इत्युक्तं चेत् अपृथग्भूतेन विद्यन्ते इति स्पष्टं स्यात्। तस्मात् प्रकृतिपुरुषौ परमपुरुषयोनीति स्पष्टं भवति। व्यक्ताव्यक्तरूपमूलप्रकृतिः पुरुषशब्दवाच्यः जीवश्च परमात्मनि लीयेते इति, स परमात्मा विष्णुरेवेति च भावः।

अपिच मनुस्मृतौ एवं उक्तम् - [4]"सोऽभिध्या शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्यादि ॥

आत्मनि सूक्ष्मरूपेण लयरूपेण सुप्तप्रायेण स्थितायाः तमश्शब्दवाच्यमूलप्रकृतेः स्वशरीरात् सर्वप्रपञ्चमसृजत् परमात्मेति भावः। परब्रह्मणः संजातः प्रपञ्चः परब्रह्मणि एव स्थित्वा, परब्रह्मणि एव लीयते। प्रलयदशायां पृथिव्यादिसर्वपदार्थाः ब्रह्मणि लीना भूत्वा, तमश्शब्दमूलप्रकृतिरूपाः परमात्मनि एकीभावमाप्नुवन्तीति श्रुतिः - [5]"पृथिव्यप्सु प्रलीयते, आपस्तेजसि प्रलीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, आकाशमिन्द्रियेषु लीयते, इन्द्रियाणि तन्मात्रेषु लीयन्ते, तन्मात्राणि भूतादौ लीयन्ते, भूतादयः महति लीयन्ते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परेदेवे एकी भवति इति।

सूक्ष्मरूपेण आत्मनि विद्यामानान् चिदचित्पदार्थान् स्थूल रूपेण सृष्ट्वा, परमात्मा, [6]तत्सृष्ट्वा तदेवानुप्राविशत् [7]"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतिषु उक्तत्वात् प्रपञ्चे सर्वान्तर्यामि परमात्मेति स्पष्टं भवति।

[8]"यस्य पृथ्वी शरीरम्? यस्यापश्शरीरम्? यस्य तेजः शरीरम्? यस्य वायुश्शरीरम्? यस्य आकाशश्शरीरम्? यस्य अहंकारश्शरीरम्? यस्य मृत्युश्शरीरम्?" एष सर्वभूतान्तरात्मा अपहतपात्मा दिव्यो देव एको नारायणः "इति श्रुतिः। सर्वं च परमात्मनः शरीरम्। परमात्मा शरीरी। एकेन शरीर ज्ञानेन सर्वशरीरज्ञानं संभवति।

---

1. विष्णुपुराणम् 8 - 7 - 74
2. विष्णुपुराणम् 6 - 4 - 39
3. विष्णुपुराणम् 6 - 4 - 40
4. मनुस्मृतिः 1 - 8
5. सुबालोपनिषत् - 2
6. तैत्तिरीयोपनिषत् - आनंद - 6
7. पुरुष सूक्तम्
8. सुबालोपनिषत् - 7

सृष्टेः पूर्वं विद्यमान सूक्ष्मचिदचिद्विशिष्टब्रह्म उपादान कारणम्। तद्ब्रह्मैव स्थूलचिदचिद्विशिष्टेन परिणतत्वात् उपादेयकार्यरूपमिति स्पष्टार्थः। अत्र ब्राह्मणः चिदचितोः विशिष्टैक्यमेव वर्तते पृथक् स्थितिरूपभेदः नास्ति। तस्मात् उपादानकारणभूतसूक्ष्मचिदचिद्विशिष्टब्रह्मविज्ञानेन स्थूलचिदचिद्विशिष्ट सर्वविज्ञानं संभवतीति सुस्पष्टं भवति। इदमेव एक विज्ञानेन सर्वविज्ञानम्।

मृत्पिण्डदृष्टान्तोऽपि अत्र संभवति - घटस्योत्पत्तेः पूर्वमृदपि किंचिद्रूपस्पर्शपिण्डत्वादि धर्मविशिष्ट एव। अनन्तरं घटत्वाद्यवस्थाविशिष्टस्स्यात्। पिण्डत्वघटत्वावस्थयोः मृदा अविनाभावसंबन्धस्य सत्वात् पृथक्कर्तुम साध्यत्वात् चिदचित्पदार्थयोरपि सर्वदा ब्रह्मणः अविनाभावसंबन्धस्य सत्वात् पृथक्कर्तुमसाध्यत्वाच्च विशेषाः स्युः। इत्थं दृष्टान्ते दार्ष्टान्तिके च विशिष्टपदार्थ एव उपादानोपादेयभावमाप्नोति। दृष्टान्तात् मृदः दार्ष्टान्तिके ब्रह्मणि कश्चिद्विशेषः वर्तते। कोऽयं विशेषः? इत्युक्ते, मृदि विशेषभूताः रूपस्पर्शपिण्डत्वाद्याः धर्मा एव। ब्रह्मणि विशेषभूतौ चिदचितौ न तु धर्मौ। अपृथक्सिद्धद्रव्ये एव। "अहं देवः" "अहं मनुष्यः" इत्यादि व्यवहारेषु अहं शब्दवाच्यः आत्मा यथा देवमनुष्यादि शरीरविशिष्टः तथैव परमात्मापि अपृथक्सिद्धचिदचित्पदार्थरूप शरीरविशिष्ट इति श्रुतिस्मृतीतिहासपुराणप्रमाणवचनानि स्पष्टयन्ति। मृदचेतनत्वात् स्वपरिणामस्य निमित्तकारणरूपेण कुलालमपेक्षते। परब्रह्म तु परमचेतनत्वात् संकल्पमात्रेणैव परिणमते।" [1]अद्वितीयम् इति श्रुतिः खलु।

इत्थं कारणं कार्यमपि विशिष्टब्रह्मैव। अस्य विशिष्टैक्यस्याज्ञानिनः चिदचिद्रूपजगत् ब्रह्मणः अन्यदिति, जगदेव नास्तीति च भ्रमन्ति। [2]"तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतिः ब्रह्मणः सर्वस्य विशिष्टैक्यं स्पष्टयति।

विशिष्टब्रह्मणि चिदचितौ विशेषौ, विशेष्यं ब्रह्म। त्रयाणां स्वरूपस्वभावाः भिन्नाः। तेषां सांकर्यं नास्ति। सृष्टे: पूर्वं ब्रह्मणि विभागरहित सूक्ष्मदशावस्थायां विद्यमानानां विशेषणीभूत चिदचित्पदार्थानां सृष्टिकाले स्थूलभूत देवमनुष्यादिरूपान्तराणि पृथिव्यादि विविधरूपान्तराणि च संभवन्ति। न तु विशेष्यस्य ब्रह्मणः स्वयं रूपान्तराश्रयः यत् स्यात् तदेव उपादानं स्यात्। तस्मात् स्थूलपरिणामस्य साक्षादाश्रयाः सूक्ष्मचिदचित्पदार्थाः उपदानानि स्युः। तदाश्रयः न तु ब्रह्म स्थूलपरिणामस्य संकल्पितत्वात् ब्रह्म केवलं निमित्तकारणमेव। न तु उपादानकारणम्। तस्मात् ब्रह्मज्ञानेन स्थूलचिदचित्प्रपञ्चज्ञानं न संभवतीति पूर्वपक्षः -

अत्यन्तभिन्नपदार्थानां उपादानोपादेयभावः न संभवति। सत्यमेव। तथापि अपृथक्सिद्धसंबन्धेन विशिष्टैक्य पदार्थे विद्यमानानां विशेषानां संभवानां स्थूलपरिणामादिविशेषानां विशष्टवस्तु उपादानं स्यात्। अस्मिन् विषये प्रमाणोदाहरणं -

[3]यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः संभवन्ति।
यथा सतः पुरुषात्केशलोमानि
तथाक्षरात्संभवतीह विश्वम्॥ इति श्रुतिः॥

ऊर्णनाभिः आत्मनः तन्तवः यथा सृजते, पुनः तान् तन्तून् यथा च गृह्णते, विविधवृक्षजातयः ओषधयः पृथिव्याः यथा संभवन्ति, तथैव दृश्यमानमिदं विश्वम् अक्षरपरब्रह्मणः संभवतीति भावः। तस्मात् परिणामानां

---

1 छान्दोग्योपनिषत् 6 - 2 - 1 2. श्वेताश्वतरोपनिषत् 3 - 9. 3. मुण्डकोपनिषत् 1 - 1 - 7

साक्षादाश्रयवस्तु विशिष्टैक्य स्थले विशेषणेषु संभवतां परिणामान् अपृथक्सिद्धविशिष्टवस्तुनि उपादाने व्यवहृतत्वात् प्रामाणिकमेव ।

भाविस्थूलावस्थायाः पूर्वसूक्ष्मावस्थायोगि यत् कारणं तदुपादानम् । घटत्वादिस्थूलवस्थामाप्नुवन् तत्पूर्वं पिण्डत्वावस्थायां विद्यमानं मृत् घटस्योपादानकारणं स्यात् । इदं लक्षणं ब्रह्मणि कथं संभवति? इत्युक्ते -

[1]"ऐतदात्म्यमिदं सर्वं" [2]"तेनेदं पूर्णं पुरुषेण सर्वम् " इत्यादि श्रुतिप्रमाणैः स्थूलचिदचितोः अन्तर्यामिरूपेण विद्यमानं परब्रह्म तच्छरीरकं तदपृथक्सिद्धविशिष्टवस्तुत्वात् स्थूलपरिणामाद्यवस्थाः परब्रह्मण एव। बाल्ययौवनादयः परिणामाः साक्षात् शरीरगताः । तथापि "अहं बालः" "अहं युवा" इति शरीरविशिष्टआत्मनः एव मुख्येन व्यवहरन्ति । तथैव शरीरचिदचिद्विशिष्टब्रह्म कार्यमिति, तद्ब्रह्मैव तत्पूर्वकाले सूक्ष्मचिदचिद्विशिष्टैक्येन सत्वात् उपादानकारणमिति उपादानलक्षणपरिष्कारः ।

इत्थं चिदचिद्भ्यां सर्वावस्थानां मुख्याश्रयः परमात्मा जगतः उपादानकारणमिति निर्णीतम् । तथैव सूक्ष्मचिदचिद्विशिष्टब्रह्मणः ज्ञानेन स्थूलचिदचिद्विशिष्टब्रह्मरूपकार्यज्ञानस्य संभवात् "एकविज्ञानेन सर्वविज्ञानं" साधितम् ॥

एकविज्ञानेन सर्वविज्ञानमित्यत्र एक शब्देन विशिष्टब्रह्मोच्यते । विशिष्टरूपं ज्ञातं चेत्, तदन्तर्भूताः विशिष्यविशेषणाः सर्वेऽपि ज्ञाताः स्युः । मृत्पिण्डदृष्टान्तात् कार्योपादानकारणयोः स्वरूपैक्यमेव बोधितम् । तथैव चिदचिदात्मकजगतः ब्रह्मणश्च स्वरूपैक्यं उक्तं चेत्, सर्वश्रुतिस्मृतिप्रमाणविरोधः स्यात् । चेतनत्वाचेतनात्वाभ्यां नियाम्यत्व, नियन्तृत्व, अज्ञत्व, सर्वज्ञत्वैः चिदचिदीश्वर स्वरूपे अत्यन्त भेदः वर्तते इति श्रुतयः स्पष्टयन्ति तस्य तत्वत्रयस्य स्वरूपैक्यं असंभाव्यं खलु इत्युक्ते -

[3]"तदनुप्रविश्य सच्चत्यच्चाभवत् " [4]"ऐतदात्म्यमिदं सर्वम्" इत्यादि श्रुतिप्रमाणैः अन्तर्यामित्वेन विशिष्टैक्यं श्रुतिसिद्धम् । सृष्ट्युपसंहारप्रलयकालेऽपि सूक्ष्मदशावस्था भूतजडप्रकृत्या एकीभूतपरमात्मनः विशिष्टैक्यमेव प्रामाणिकम् । [5]तमः परे देवे एकी भवति इति श्रुतिवाक्ये एकी भावस्यार्थः विवेचनीयः । इत्थं सार्वकालिकप्रमाणिकविशिष्टैक्यं ब्रह्मणः ज्ञानेन तदपृथक्सिद्ध संबन्धविशेषणसर्वप्रपञ्चज्ञानं संभाव्यमेव ।

छान्दोग्योपनिषत् मृत्पिण्डदृष्टान्तेन समर्थितत्वात् जगद्ब्रह्मणोः उपादानोपादेयत्वरूपकार्यकारण भावात् ब्रह्मज्ञानेन सर्वकार्य प्रपञ्चज्ञानं संभवतीति समर्थितम् । बृहदारण्यकोपनिषदि उपादानोपादेयत्वरूपकार्यकारण भावप्रस्तावनारहितेन ब्रह्मणः सर्वान्तर्यामित्वात् केवलतादात्म्यसंबन्धेन एकविज्ञानेन सर्वविज्ञानं समर्थितम् । ब्रह्मणः अन्यस्य पदार्थस्य कस्यापि असत्वात् सर्वव्यापित्वविशिष्टब्रह्मज्ञानेन तदात्मक सर्वप्रपञ्चज्ञानं संभवतीति भावः ।

[6]"अक्षरात्परतः परः" इति प्रकृतिपुरुषाभ्यामाधिक्येनोक्तत्वात् तद्ब्रह्म अमृतशब्दवाच्यमहानन्दरूपम् आनन्दप्रदम् । तदेव मम हृदयगुहायां अन्तर्यामिरूपेण वर्तते । तस्मात् "अहं ब्रह्मास्मि" इति परमार्थज्ञानं यः जानाति सः तेन ब्रह्मज्ञानेन संसारबन्धहेतुमविद्याग्रन्थिं विकिरति इति मुण्डकोपनिषत् श्रुतिः ।

---

1. छान्दोग्योपनिषत् 6-8-6 2. श्वेताश्वतरोपनिषPu 3-9 3. तैत्तिरीयोपनिषत्, आनुद - 6
4. छान्दोग्योपनिषत् 6-8-6 5. सुबालोपनिषत् - 2 6. मुण्डकोपनिषत् 2-1-2

[1]''ऐतदात्म्यमिदं सर्वम्'' [2]'तत्वमसि' [3]'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'' [4]''यः आत्मनि तिष्ठन् आत्मनोऽन्तरो, यमात्मा न वेद, यस्यात्मा शरीरम्? यमात्मानमन्तरो यमयति, सत आत्मा अन्तर्याम्यमृतः । [5]'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति [6]''सदेव सोम्य इदमग्र आसीत्, एकमेवाद्वितीयम् [7]''सन्मूलाः सोम्य इमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः [8]''सर्वस्य वशी सर्वस्येशानः इत्यादिश्रुतिप्रमाणैः ब्रह्मणः अनन्यत्वं साधितमिति, ब्रह्मज्ञानेन सर्वविज्ञानस्य संभवात् ''एकविज्ञानेन सर्वविज्ञानं संभवतीति स्पष्टं भवति ।

नानाजातीयकार्याणां नानाजातीयकारणकत्वदर्शनात् तस्य ब्रह्मणः निखिलकारणतया करणमेव नानासंस्थानविशेषसं स्थितं कार्यमित्युच्यत इति कारणभूत सूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मविज्ञानेन कार्यभूतमखिलं जगत् विज्ञातं भवति । कारणात् कार्यस्य अनन्यत्वम् । नानासंस्थानविशेषसंस्थितं कार्यमित्युच्यत इति कारणभूतसूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मविज्ञानेन कार्यभूतमखिलं जगत् नाम संस्थानविशेषविशिष्टमित्यर्थः । सूक्ष्मचिदचिद्वस्तु शरीरशब्देन ब्रह्मणः हेयास्पदत्वप्रसङ्गः परिहृतः एवं भावं हृदि निधाय [9]''येनाश्रुतं श्रुतं भवति, अमतं मतं भवति अविज्ञातं विज्ञातं भवति इति पुत्रं प्रति पृष्टवान् पिता ।

सकलवस्तुजातस्य एककारणत्वं अजानन् पुत्रः श्वेतकेतुः [10]'कथं नु भगवस्स आदेशः? इति पर्यचोदयत् । परिचोदितः हृदि निहितं सत्यार्थं स्पष्टयति पिता उद्दालकः - ब्रह्मणः जगत्कारणत्वे तदुदययोगि गुणजातं, उपादानत्वनिमित्तत्वप्रयुक्तदोषशङ्कापरिहारं च विवक्षयन् कारणज्ञानेन कार्य ज्ञानं लोकसिद्धमिति प्रबोधयतिज्ञानान्दामलत्वैकस्वरुपम्, अपरिच्छेद्यमाहात्म्यं, सत्यसंकल्पत्वादि - अनवधिकातिशयासंख्येय-कल्याणगुण गणैर्जुष्टम्, अविकारस्वरूपं परं ब्रह्मैव नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं स्वलीलायै स्वसंकल्पेन अनन्तविचित्रचराचररूपजगत्संस्थानं स्वांशेनावस्थितमिति तद् ज्ञानेन अन्यस्य निखिलस्य ज्ञाततां बोधयन् कार्यकारणयोः अनन्यत्वं दर्शयितुं दृष्टान्तमाह - कार्य कारणयोः अनन्यत्वे दृष्टान्तं दर्शयति - [11]'यथा सोम्य! एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिका इत्येव सत्यम् इति । वाक् शब्दः अजहल्लक्षणया वाक्पूर्वक व्यवहारे वर्तते । वाक्पूर्वकव्यवहारश्च प्रयोजनतया हेतुः । संस्थानमेव अवस्था सैव विकारः । [12]षोडशकश्चविकारः इत्यादिषु विकारशब्दस्य अवस्थावत् द्रव्यपरत्वेन प्रयोगदर्शनात् । एकमेव मृद्द्रव्यं स्वैकदेशेन नानाव्यवहारास्पदत्वात् यथा घटशरावादिनाना- संस्थानावस्थारूप विकारापन्ननानानामधेयमपि मृत्तिकासंस्थानविशेषणत्वात् मृद्द्रव्यमेव इत्थमवस्थितं, न वस्त्वन्तरमिति । एवं कारणज्ञानेन कार्यज्ञानं संभवतीति स्पष्टं भवति ।

[13]''जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्'' ।
[14]यत्किञ्चित्सृज्यते येन सत्वजातेन वै द्विज ।
तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनुः ।

---

1. छां. 3.6-8-6
2. छां. ऊ. 6-8-7
3. यजुरारण्यकम् 3-24
4. बृहदारण्योपनिषत् 5-7-22
5. छान्दोग्योपनिषत् 6-3-2
6. छान्दोग्योपनिषत् 6-2-1
7. छान्दोग्योपनिषत् 6-8-6
8. बृहदारण्यकोपनिषत् 6-4-22
9. छान्दोग्योपनिषत् 6-1-3
10. छान्दोग्योपनिषत्
11. छान्दोग्योपनिषत् 6-1-4
12. सांख्यकारिका
13. रामायणम्, युद्धकाण्ड 120-26
14. विष्णुपुराणम् 1-22-38



16

[1]अहमात्मा गुडाकेश सर्वभूताशयःस्थितः ।''
[2]''सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च''

इत्यादिभिः बहुभिः प्रमाणैः सर्वं परमात्मनः शरीरमिति, परमात्मा शरीरीति च प्रतिपादितत्वात्, विशिष्टैक्यस्योक्तत्वात् 'एकविज्ञानेन सर्वविज्ञानं संभवतीति विशिष्टाद्वैतमतानुयायिभिः निरूपितम् ।

1. भगवद्गीता 10 - 20  2. भगवद्गीता 15 - 15

# उपनिषत्तत्वज्ञानस्वरूपनिर्णयाय श्रीमध्वाचार्यैः परिगृहीतः अभिनवदृष्टिकोणः

डा. बि. यन्. के. शर्मा

ऐतिहासिकदृष्ट्या विचार्यमाणे, भारतीयदार्शनिकनभोमण्डले अस्तंगते बौद्धसमये तत्स्थाने अद्वैतसिद्धान्त उदियाय। तस्य च अन्यैः न्यायवैशेषिक सांख्ययोगपूर्वमीमांसादिद्वैतवादैः सह प्रारब्धः सुदीर्घः संघर्षः प्रायेण क्रैस्तवैकादश- शतके विश्रान्तः बलिनि वेदनये जयश्रीः इत्येवमभिमते अद्वैतविजये समाप्तः।

यद्यपि, तदानीमेव काले दक्षिणभारते प्रादुरभवन् कानिचित् अभिनवानि द्वैतदर्शनानि तथाप्युत्तरे भारते तेषां प्रवेशः प्रचारो वा दुष्कर एवासीत्। तत्र ऐतिहासिकं कारणं तु प्रसिद्धमेव, यन्निखिलमप्युत्तरं भारतं परचक्राक्रान्तं विधर्मिणां हिंसावृत्त्या तत्रत्यानां मतान्तरीकरणव्यापारैः जनताजीवने समुत्पन्नः क्षोभः भयानकपरिस्थितिरशान्तिश्च। तत्तादृशे प्रतिकूलसन्दर्भे, दाक्षिणात्यानां अभिनववेदान्तविचाराणां निरर्गलः प्रचारः सुतरामसाध्य एवासीत्।

गच्छता कालेन, उत्तरे दक्षिणे च भारते आंगलाभिजनानां अवतारः संभूतः मन्दं मन्दं समस्तस्यापि राष्ट्रस्य आधिपत्यं साम्राज्यं च तदायत्तमभूत् स्वायत्ते राष्ट्रे स्वशासनस्य दार्ढ्याय आंगलविद्यायाः सार्वत्रिकप्राबल्यं विधातुं नवीनविश्वविद्यालयाः तदङ्गभूता उच्चशिक्षणकलाशालाश्च उद्घाट्य स्थापिताः। येषु शैक्षणिकभाषात्वेन आंग्ल एव मूर्धाभिषिक्ता। प्राध्यापकाश्च पाश्चात्या विद्वांस आक्स् फोर्ड प्रभृतिविख्यातविश्वविद्यालयेषु प्राप्तोपाधयः नियुक्ताः। ते च, तदानीं पश्चिमखण्डे तत्त्वशास्त्रप्रपञ्चे ख्यातनाम्नां काण्ट्-हेगेल् प्रभृतीनां पाश्चात्याद्वैतवादधुरीणानां उद्ग्रन्थाध्ययनेन प्रभावितान्तःकरणाः तमेव सिद्धान्तं त्सोत्साहं बोधयन्तः, शनैः शनैः भारतीयानां मनसि तदनुरागं जनयामासुः नैके तादृशविद्वांसः अस्माकं गीतोपनिषदादितत्त्वग्रन्थानां आंगलादिपाश्चात्यभाषासु अनुवादं कृत्वा, तेष्वपि मूलग्रन्थेषु स्वाभिमतपाश्चात्याद्वैतस्य प्रतिकृतिं दर्शयामासुः। अस्मिन्नेव सन्धिकाले विश्वविख्यातस्य भारतीय-तत्वज्ञानिनः स्वामिविवेकानन्दस्य जनिरासीत्। प्रबुद्धावस्थां गतेन तेन च अमेरिकादिदेशेषु स्वदेशे च भारतीय साम्प्रदायिकतत्त्वज्ञानेषु अद्वैतमतमेव शिखरायते इति प्रत्यपाद्यत। अथापि वैज्ञानिक श्रद्धालूनां पाश्चात्यानाम् अन्येषां च मनोवृत्तिमवबुध्य तदभिरोचनाय प्राचीनसाम्प्रदायिकाद्वैतदर्शने घटकीभूतं मायावादं, जगन्मिथ्यात्ववादं च बहुशः स्वार्थात्प्रच्याव्य, अन्यथयित्वा पौरस्त्य पाश्चात्यवृन्दे ख्यापयामास। तत्कृतिभिः तस्य मेधया, वाग्वैखर्या, आश्रयौज्वल्येन च वशीकृताः परःशतमाधुनिकाः सुशिक्षिता जनाः स्त्रियः पुमांसश्च कालक्रमेण वेदान्तो नाम अद्वैतमेव, नान्यत्, तदेव औपनिषदं दर्शनं भारतीयदर्शन शास्त्रस्य तपःफलायितम् इति विश्वसितुं प्रवृत्ताः। तदर्वाचीनाश्च भारतीय-तत्त्वज्ञानिश्रेष्ठा राधकृष्णप्रभृतयश्च, तमेव पक्षं विपुलैः स्वैः स्वैः ग्रन्थैः प्रचारयामासुः आंगलवाणीमुखेन द्वैतविशिष्टाद्वैत-तत्त्वज्ञानप्रचारस्तु खद्योतायितावस्थ एवासीत्।

परंतु, गच्छता कालेन आधुनिकानाम् अद्वैताभिमानिनां मनसि संशयाङ्कुरः समुत्पन्नः इति प्रतीयते, डा. राधाकृष्णस्य कृतिषु अर्वाचीनेषु केवलाद्वैतस्थाने समग्रानुभववादः प्रस्ताव्यते । मिथ्यात्वस्य अन्यथाव्याख्यानप्रवृत्तिश्च दृश्यतो किं बहुना - अद्यतनेन रामकृष्णमठीयेन स्वामितपस्यानन्देन "भक्तिवेदान्तमतानि" इत्यस्मिन् स्वग्रन्थे सांप्रदायि-कशांकराद्वैतस्य स्थाने, उपनिषद्भ्यः मायावादं जगतः ज्ञानबाध्यत्वं च दूरीकृत्य, अभिनववेदान्तः (Neo Vedantic) अभ्युपगन्तव्यः इति कण्ठरेवण प्रतिपादितमस्ति।

एतत्सर्वपर्यालोचने स्फुटमिदं भवति यत् - बौद्धानां नैरात्म्यवादं प्रतिक्षेप्तुकामैः प्राचीनाद्वैतिभिः देहातिरिक्तस्य शुद्धात्मस्वरूपस्यैव उपनिषत्सु जिज्ञास्यत्वं प्राप्यत्वं च, इत्यास्थाय सौगतस्य अजातिवादस्य प्रभावप्रभावितैः उपनिषत्स्वेव सर्वत्र विवृतस्य परब्रह्मणः जगत्कर्तृत्वादिकं, तत्सृष्टस्य जगतः पारमार्थिकत्वं च अविवक्षितमिति मन्यमानैः, एकात्मवादे परं दत्तदृष्टिभिः आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते इति वदद्भिः वियदादिप्रपंच सृष्टेरप्रतिपिपादयिषित्वोक्त्या (शां.भा. 1.4.14) जतिवादोपि स्वीकृतप्राय एव.

एवं सति, उपनिषत्सु दश दृश्यमाना जगत्सृष्टिक्रमवर्णनानि, जीवानामनादिकर्मणा पुनर्भवः मरणानन्तरं परलोकयात्रा, ततो लोकाल्लोकान्तरगमनं स्वर्गनिरयवासः गर्भवासः, मोक्षार्थं कठोरसाधनानुष्ठानं इत्यादयः सर्वे अविद्याविलासाः अतत्वावेदकाः प्रसज्येरत् । एतत्समर्थनार्थ-मुपनिषत्स्वेव परापरविद्याविभागः क्रियते चेत् "एकधैवानुद्रष्टव्यं इत्युक्तैकवाक्यता तेषां कदर्थिता स्यात् । कविर्मनीषी स्वयंभूः याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः इति स्तूयमानस्य नामरूपायां व्याकृतस्यानेककर्तृभोक्तृ-संयुक्तस्य, प्रतिनियतफलस्य मनसाप्यचिन्त्यरचनात्मकस्य, वियदादिप्रपञ्चस्य सृष्टिः ईक्षापूर्विका खलु । अतः सा न प्रतिपिपादयिषिता नापि तत्संबद्धः कश्चित्पुरुषार्थ "इत्युक्तिः न शोभते अतएव मध्वाचार्यैः तद्वशत्व ज्ञापनार्थमेव सृष्ट्युक्तिः" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च इत्युक्तपरमेश्वरमहामहिमत्वप्रकटनाय इत्युक्तां सत्यजगन्निर्मातृत्वादिकं खलु माहात्म्यं नाम।

किंच जगदिदम् आमुक्तेर्जीवजातस्य कार्यक्षेत्रम्। जन्माद्यस्येति सूत्रे अस्येत्युक्तं प्रामाणिकं जगत् न केवलं बाह्यं, नापि जडजगत् किं नामान्तरमपि चेतनसंबन्धि। संसारमोक्षस्थितिबन्धहेतुः। य एष सुप्ते जागर्ति, स्वप्नेन शरीरमाशु प्रहत्यासुप्तः सुप्तानभिचाकशीति पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ देहयोगात् वासोऽपि एतस्य वा अक्षरस्य प्रशासने, आत्मान मन्तरो यमयति नक्रते त्वत्क्रियते किं च नारे इत्यादि श्रुतिसूत्रानुसारेण जन्मादिसूत्रगतमादिपदं चेतनाचेतननित्यानित्यजगतः सृष्टिस्थितिसंहारनियमनज्ञानाज्ञान बन्धमोक्षान्तकारणत्वेन परमात्मनो लक्षणं अभ्युपेयं, इति आचार्यमध्वः मन्यते। तस्मात्तेषां सर्वेषु देशेषु सर्वेषां यथायोगं सर्वावस्थाप्रेरकः परमात्मेति उपनिषदां रहस्यमुद्घाटयति जन्मादीत्यत्र सृष्ठिस्थिति भगं समासार्थ इति तु उपनिषदां व्याप्तदृष्टिं विस्मारयति।

उपनिषच्छब्दः खलु सदेर्धातो रुपनिपूर्वकः समुत्पन्नः, तज्जन्यज्ञानस्य बन्धविस्रंसकत्वेन अविद्यानाशकत्वेन, ब्रह्मप्रापकत्वेन च निरुक्ताः। तच्च ब्रह्म, विश्वस्य कर्ता भुवनस्य गोप्ता, विश्वान्तर्यामी, जीवान्तर्यामी, विश्वतः परमम् इति वर्ण्यते । सूत्रे भूमाधिकरणे श्रूयमाणं अध्युपदेशपदं हेत्वन्तरसमर्पकं, अध्युपदेशश्च सर्वेषामेव अधिकत्वोपदेशाः नतु केवलं प्राणादधिकत्वेन इति च मध्वाचार्यैः स्पष्टीकृतम् अत्रैव विश्वतः परमां नित्यमिति श्रुतिसंवादः प्रदर्शितः।

**उपनिषत्प्रतिपाद्यः आत्मशब्दार्थः**

उपनिषत्सु आत्मशब्दः भूयसा प्रयुज्यतो अयं च प्रकरणानुसारेण अर्थद्वये वर्तते क्वचित् जीववाचकत्वेन यथा - आत्माप्यनीशः सुखदुःख हेतोः इति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो इत्यादिषु परब्रह्मपरत्वेन। तत्र अविवेकेन सर्वत्र आत्मशब्दः लोकव्यवहारसिद्ध प्रत्मगात्मपर एव, इति गृहीत्वा प्रवृत्तौ महान् प्रमादः महतां विनष्टिश्च स्याताम्।

सति चैवं प्राचीनेषूपनिषत्सु आत्मशब्दः जीववाचित्वेन ब्रह्मशब्दश्च जगदधिष्ठानचैतन्यपरत्वेन च प्रयुज्यते, अचिरात्तु अयं भेदः मन्दीभूय विश्राम्यति'' इति डा. राधाकृष्णस्य उक्तिः अविचारितरमणीया। तथा हि

1) तैत्तिरीयके अगाधे सृष्टिप्रकरणे द्वितीयवल्यां जगजन्मादिकारणत्वेन ब्रह्म लक्षयित्वा, अनन्तरब्रह्मवल्यां तस्यैव ब्रह्मणः ''ब्रह्मविदात्पोति परं, सत्यं ज्ञानमनन्तं ब्रह्मेति तत्स्वरूपमुक्त्वा, तस्यैव मुक्तप्राप्यत्वं चोक्त्वा, समनन्तरमेव ''तस्माद्वा एवस्मादात्मन आकाशः संभूतः आकाशात् वायुः इत्यादिक्रमेण पुरुषाख्यजीवोत्पत्तिपर्यन्तः सृष्टिक्रमः विस्तृतः। अत्र तस्मात् एतस्मात् आत्मन इति आत्मशब्दः पूर्वोक्तब्रह्मपरामर्शक एव भवितुमर्हति।

जीवात्मा खलु सर्वत्रान्वेषककोटौ निविष्टः परमात्मा च अत्वेष्टव्यः। अयमेवोपनिषदां गूढार्थ इति तत्र तत्र प्रकरणपरिशुद्ध्या दर्शयति मध्वाचार्यः। गूढत्वादेव अन्वेष्टव्यः परमात्मा औपनिषदः पुरुषः इत्युच्यते। उपनिषच्छब्दोऽपि खलु रहस्यार्थकः उपनिषत्कृत्य'' इत्यादिप्रयोगेषु

**अत्र निदर्शनानि**

1) बृहदारण्यके अन्तर्यामिब्राह्मणे याज्ञवल्क्येन आरुणिं प्रति पृथिव्याद्यव्यक्तान्तेषु तत्वेषु अन्तः स्थित्वा यमनकर्तार मन्तर्यामिणं प्रति एष ते आत्मा अन्तर्यामी अमृत इति वारं वारं आघोष्यते। इमामेव श्रुतिं विषयीकृत्य प्रवृत्ते सौत्रे अन्तर्याम्यधिकरणे पृथिव्यादिजडतत्वानामेव अन्तर्यामिनियाम्यं इति शङ्कावारणाय जीवात्मनोऽपि स्वान्तःस्थेन नियन्त्रा परमात्मना आत्मशब्द मुख्याभिधेयेन नियाम्यत्वं स्पष्टमुद्दीर्यते, य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति, एष ते आत्मा अन्तर्यामी अमृत इति। अत्र वाक्यविन्यासस्वारस्यबलादेव जीवात्मनः अन्तर्यामिणो आत्मशब्दमुख्याभिधेयात् अन्यत्वं करतलामलकायते - अङ्गीकृतं चैतत् शांकरभाष्येपि एष ते आत्मा अन्तर्याम्यमृत इति च आत्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते तस्मात् परमात्मैव अन्तर्यामी इति वददि्भः।

2) मुण्डके - यस्मिन् द्यौः पृथिवीचान्तरिक्षम् ओतं मनः प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानं अन्यावाचो विमुञ्चथ'' इति आत्मनः परमवेद्यत्वं बोध्यते। एकशब्दस्य मुख्यार्थत्वात्। इमामेव श्रुतिं विषयीकृत्य प्रवृत्ते सौत्रे द्युभ्वाद्यधिकरणे, अत्र परमवेद्यत्वेन निर्दिष्टः आत्मा किं प्रधानं, प्रत्यगात्मा परमात्मा वेति संशय्य उभावपि आत्मशब्दबलान्निषिध्य परमात्मैव सिद्धान्तितम्। सूत्रकारेण च स्वशब्दात् आत्मशब्दात् इति आत्मशब्दप्रयोग एव हेतूकृतः अत्रापि शांकरभाष्ये आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते, नार्थान्तरपरिग्रहे (1.3.1) इत्यभ्युपगतम्।

3) यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते इति निरुक्तिरपि कर्मवश्यस्य संसरतः सुखदुःखादिभाजः न युज्यते तद्वारणाय संसारस्य मिथ्यात्वकल्पने, बहु कल्पनापत्तिः

4) आत्मा वा इदमेक एवाग्र आसीत् नान्यात्किंचन मिषत्'' इत्यैतरेयोपनिषदि सृष्टेः पूर्वं स्वे महिम्नि प्रतिष्ठितस्य परमात्मनः निर्देशानन्तरं जगत्प्रवृत्तेः जीवादीनां प्रादुर्भावश्च कथ्यते। अत्र आत्मशब्दः परस्यैव युज्यते।

एवमात्मशब्दस्य निर्णायकसूत्रकारेणैव निर्णीतार्थकत्वात् उपरिष्टादपि चतुर्थाध्याये ''आत्मेतितूपगच्छन्ति ग्राहयन्ति च'' इति सूत्रेणापि परमात्मानमेच ऋषयः एष ते आत्मा अन्तर्याम्यमृत इति उपदिशन्ति ग्राहयन्ति च इत्येव सूत्रार्थो वेदितव्यः नान्यथा। तथात्वे पूर्वं द्युभ्वादिनये श्रौतात्मशब्दबलेन प्राणभृतं जीवं निवार्य, पुनरस्मिन् सूत्रे परंब्रह्म स्वात्मत्वेन उपास्य इति ग्राहयन्ति इति प्रत्यवस्थाने सूत्रकारस्य पूर्वापरविरोधः स्यादेव - तदुक्तम्

आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत्।
स्वशब्दात् प्राणभृच्चैव नोक्त इत्येव वेदराट्॥
यद्यात्मशब्दो जीवेऽपि कथं स विनिवारयेत्॥

अत्रापि शांकरभाष्ये आत्मेति तू इति सूत्रस्य विषयवाक्यत्वेन एषते आत्मा अन्तर्याम्यमृत इति वाक्यस्यापि गृहीतत्वात् तस्य च स्वयमेव अन्तर्याम्यधिकरणभाष्ये - आत्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते (1.2.28) अंगीकृतत्वात्, इह तु ब्रह्मणः आत्मत्वेनोपदेशो नाम आततत्वाच्च मातृत्वादात्मा'' इत्यादिना स्वामित्वेन उपास्यत्वमित्येव श्लिष्टतरम्। स्वामित्वंच ''आत्मा अन्तर्यामी अमृतः इति श्रौतप्रतिज्ञयैव सिध्यति

अतः परविद्यात्वादुपनिषदां साक्षादेव मुख्यतः परब्रह्ममहिमाप्रकाशकत्वमेव युक्तम्। तथैव च तेषां व्याख्यानं कर्तव्यं, ना कुसृष्ट्या तत्तदपरविद्याविषयत्वेन, क्वचित् प्रतीकोपासनात्वेन, क्वचित् क्रममुक्तमर्थत्वेन वा इति स्फुटम्। जडानां प्रतीकानां ब्रह्मत्वेनोपसनमसदुपासनं स्यात् आर्षसम्प्रदायविरुद्धं च - तथा ह्यारण्यकम् - एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते, एतं महाव्रते छन्दोगाः एतमग्नावेतमादित्ये सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षते इति सप्तम्यन्तैः

अतएव मध्वाचार्यैःउपनिषत्सु पठ्यमाना : पंचाग्निविद्या, उपकोसलविद्या, उद्गीथविद्या भार्गवीवारुणीविद्या इत्याद्याः सर्वाअपि साक्षात् ब्रह्मविद्यात्वेनैव व्याख्याताः तत्र पदार्थान्तः - स्थित्वा तत्तच्छक्ति प्रबोधकत्वेन विस्तृतमहिम्नः एवोपासनम्। तथाहि भार्गवीवारुणी विद्यायां अधीहि ब्रह्म इति प्रार्थनानुसारेण अन्नमयप्राणमयादीनां ब्रह्मत्वेनोपदेशे तत्रत्य मयटः विकारार्थत्वात् ब्रह्मत्वानुपपत्तिं परिहरन् सूत्रकारः आनन्दमयः पूर्णनान्द इति मयटः प्राचुर्यार्थत्वमाह। तर्हि अन्नमयादीनामपि ब्रह्त्वप्रसङ्गः इति केषाञ्चिदाघोषं ''अन्नादीनां च प्राचुर्यमेव'' इति पंचनामपि ब्रह्मत्वाङीकारेण परिध्वा। महर्रान्तचार्याः अन्नं त्विह (अन्नं ब्रह्मेत्युपासीत इत्यत्र) न प्राकृतान्नं, श्रुत्या विवक्षितम् अद्यतेऽत्तिच भूतानि तस्मादन्नं तदुच्यत इति तत्रैव अन्यथा व्याख्यातम् तथाच उपजीव्यत्वमेव अद्यत्वं, अत्तृत्वं च सर्वसंहारकत्वात् स यद्यदेवासृजत तत्तदत्तुमाधीयत इति श्रुतेः इत्यादिना समग्रा विद्या ब्रह्मविद्या एवेति साधु समर्थितं मध्वाचार्यैः।

एवं तावत् उपनिषद्व्याख्यानाय प्रवृत्तैः जागरूकैर्भाव्यम्। उपनिषछब्द एव रहस्यार्थे रूढः उपनिषत्कृत्य इति प्रयोगे। गह्ने ब्रह्मणि उपनिषण्णत्वात् उपनिषत् अतएव तत्प्रतिपाद्यः, औपनिषदः पुरुषः''। अत एवोच्यते मध्वाचार्येण ''उपनिषत्त्वाच्च न यत्किंचिदुच्यत इति वक्तुं युक्तम् अभगद्विषयस्य निन्दितत्वात्। तस्मात् उपनिषत्सु नान्यदुच्यते॥

एतदेव द्रढयन् माण्डूक्ये श्रूयमाणं, सोयमात्मा चतुष्पाद् इत्यादिकं परमात्मन एव जीवानां जाग्रत्स्वप्न सुषुप्त्याद्यवस्थाप्रेरकत्वेन तदन्तर्यामिण एव चतूरूपत्वं विवक्षितम् इति सयुक्तिकं सप्रमाणं च न्यरूपि। तथा च विश्वादयः परमात्मरूपाण्येव, स्थूलभुक् इत्यादिव्यपदेशश्च अन्तर्णीत व्युत्पत्त्या अवगन्तव्यः। सुषुप्तस्थानः प्राज्ञ इत्युक्तः अन्यत्र वृहदारण्यके "एवमे वायं शरीर आत्मा प्राज्ञेनात्मना सपरित्यक्तः न बाह्यं किंचनवेद नान्तरम्' इति शारीरात् प्रत्यगात्मनः भिन्नत्वेन व्यपदिष्टः अतः अत्रापि प्राज्ञस्य परमात्मत्वात् विश्वादयोऽपि परमात्मरूपाण्येव प्रत्येतव्यानि एष सर्वेश्वरः एष सर्वज्ञः एषोऽन्तर्यामी एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् (मा. 6) इति माण्डूक्य एव अन्तर्यामिण स्पष्टं निर्दिष्टत्वात् अनधीतमाध्वग्रन्था अनास्वादित तट्टीकारसा बहव आधुनिका मन्यन्ते उपनिषदां व्याख्याने मध्वाचार्येण न कापि निष्कृष्टा पद्धतिः नापि सर्वसंग्राहकं मूलसूत्रात्मकं तत्त्वं व्यवस्थापितं यद्वर्त्मना सर्वे अवान्तरविचाराः समन्वीयेरन् इति

नैतत्साधु स्वभावतः अतिमितवचनोऽयमाचार्यः प्रक्रियाजालैः न रमते। व्यासोपज्ञब्रह्ममीमांसाङ्गभूत-ब्रह्मत-कार्ख्यतर्कशास्त्रमुपजीव्य प्रमाणप्रमेयव्यवस्थामङ्गीकृत्य तल्लक्षणादिकं च संगृह्य प्रमाणानां स्वतः प्रामाण्यं, उपजीव्यप्रमाणस्य सर्वत्र प्राबल्यं, परीक्षितोपजीव्यप्रत्यक्षप्रमाणविरोधे अभेदागमस्यापि अर्थान्तारे सावकाशत्वं स्वीकृत्य अभेदभेदागमयोरुभयोरपि तत्त्वावेदकत्वं बहुमन्यते।

अत्र न कापि अश्लिष्टता। शास्त्रार्थसंग्राहकनियमाश्च तत्र तत्र यथावसरं विवृता एव यथा - सर्वं ब्रह्मेत्युच्यते सर्वसत्ता प्रवृत्तिनिमितत्वात् न तु सर्वस्वरूपतः इति गीताभाष्ये तथा -

"स्वातंत्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि।
सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः" ॥

इत्यनुव्याख्यायाम्। अयं च न्यायः एकमेवाद्वितीयं तत्त्वमसि, परेऽव्यये सर्व एकीभवन्ति - इत्यादि श्रुत्यर्थनिर्णये ऽवकाशं लभते। तत्वमसीत्यत्रापि व्याकरणाविरोधेन उभयथापि पदच्छेदस्य संभवात् शकुनिसूत्र, लवणोदकादिभेदपरदृष्टान्तानुगुण्येन अतत्वमसि इत्यपि छेदः अनुमतः। तत्वमसीत्येव पाठेऽपि तत्पदस्य पूर्वप्रतिज्ञातम् ऐतदात्म्यमिदं सर्वम् इत्यर्थस्य परामर्शकत्वेन, लिंगसाम्याच्च हे श्वतकेतो यस्मादिदं चेतनाचेतनात्मकं विश्वम् ऐतदात्म्यं अर्थात् आत्मशब्दमुख्यवाच्यपरमात्मतन्त्रं तदधीनं, तन्मूलं तदायतनं तत्प्रतिष्ठंच तस्मात्तदधीनविश्वान्तःपातित्वमपि तत्प्रसादजमेव अतः सर्वान्वेदानधीत्यापि वेदप्रतिपाद्यपरमात्म-माहात्म्यानभिज्ञः स्तब्धस्त्वं जानीहि स्वात्मनः भगवदधीनत्वम् इत्युपदेशसारः।

तदेतत् सर्वं क्रोडीकृत्य टीकाकारो जयतीर्थमुनिः अद्वैतभाष्योक्तोपनिषदर्थसमन्वयप्रकारस्थाने यथाचार्याभिप्रायं स्वसिद्धान्तेन उपनिषत्सु विद्यमानानां बहुविधविचारधाराणां सुसंगतं महासमन्वयं अङ्गाङ्गिभावं च श्रवणमधुरया प्रसन्नगम्भीरया गिरान्यायसुधाग्रन्थे विशदयति तद्यथा।

सर्वाण्यपि हि वेदान्तवाक्यानि असंख्येयकल्याणगुणाकरं सकलदोषगन्धविधुरं एकरूपमेव परं ब्रह्म (नारायणाख्यं) प्रतिपादयन्ति। तत्र कानिचित् 1) सर्वज्ञत्व - सर्वेश्वरत्व सर्वान्तर्यामित्व सौन्दर्यौदार्यादि गुणविशिष्टतया 2) कानिचित् अपहतपाप्मत्व निर्दुःखत्व - भौतिक देहरहितत्वादिदोषाभावविशिष्टतया, 3)

कानिचित् अतिगहनताज्ञापनाय अवाङ्मानसगोचरत्वाकारेण 4) कानिचित् सर्वपरित्यागेन तस्यैवोपादानाय अद्वितीयत्वेन, 5) कानिचित् सर्वसत्ताप्रतीति प्रवृत्तिनिमित्तताप्रतिपत्त्यर्थं, सर्वात्मकत्वेन, इत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति । ततो व्याकुलबुद्धयो गुरुसंप्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधाना वेदं च्छिन्दन्ति ।" इति

माध्वाकरेषु एवंविधा अवश्यंज्ञेया परापरतत्वविचारसम्बन्धिनः इतरेषामविदिताः अंशाः सुबहवः सन्ति बोधप्रदाः । अत इतःपरमपि वा आधुनिकाः तत्वजिज्ञासवः ग्रन्थानां रचयितारः विमर्शकुशला विद्वांसः तेषु औदासीन्यं परित्यज्य तदध्ययनाध्यापनार्थं विश्वविद्यालयेषु केन्द्रविद्यापीठेषु च अवकाशं प्रकल्प्य स्वयमपि भारतीयतत्वज्ञानप्रसारे सिंहभागभाजो भूत्वा कृतकृत्याः स्युः इत्याशास्य विरमामि ।

# अलङ्कारशास्त्रे मीमांसाप्रभावः

डा. सन्निधानं सुदर्शन शर्मा

नानादर्शनासारसमुन्मेषितस्वरूपं नवरसरुचिरं नवनवोन्मेषशालिशेमुषीविलासविलसितं साहित्यं नाम। सुष्ठूक्तं काव्यं मीमांसमानेन राजशेखरेण - "पञ्चमी साहित्यविद्या इति यायावरीयः, सा हि चतसृणामपि विद्यानां निस्यन्दः"[1] इति। व्युत्पादयन्ति केचन यत् "सहितानां नानाशास्त्राणां भावः साहित्यम्" इत्यपि। प्रसिध्दमेव साहित्यस्याधमर्ण्यं नानाशास्त्राणां विषये। तथैव साहित्यस्य नानाशास्त्रोपकारकत्वमपि। सत्यम् - स्फोटवादः ध्वनिसिद्धान्तस्य मूलमिति। इत्थं साहित्यस्य कृते व्याकरणस्योपकारकत्वं सुप्रसिध्दम्। परन्तु, सन्ति कानिचिच्छास्त्राणि यानि नितान्तमुपकुर्वन्ति साहित्यशास्त्रम्, परन्तु गूढम्, अनवाप्य प्रसिध्दिम्। तेषां मध्येऽग्रगण्यं मीमांसाशास्त्रम् पत्रेऽस्मिन् मीमांसास्पर्शः अलङ्कारशास्त्रग्रन्थेषूपात्तेषु तत्तत्समयेषु कथं ससर्पेति विषयः परामृश्यते। आपाततः परिशीलनेनैव साहित्ये बहुत्र मीमांसाप्रभावः परिदृश्यते। स्थालीपुलाकन्यायेन केचन एव विषया अत्रोपस्थाप्यन्ते।

अस्ति सुदीर्घो विवादो दार्शनिकानां मध्ये यच्छक्तिग्रहः जातौ वा, व्यक्तौ वा, जातिविशिष्टव्यक्तौ वेति। "आकृतिस्तु क्रियार्थत्वात्"[2] इति सूत्र मुनिना जैमिनिना, भाष्यकृता शबरस्वामिना, वार्तिककृता कुमारिलभट्टेन च यत्प्रपञ्चितं सिद्धान्तितं च - "गवादिशब्दानां जातावेव शक्तिः ; यदि व्यक्तौ शक्तिरङ्गीक्रियते तर्हि व्यक्तीनामानन्त्यादनन्तशक्तिपरिकल्पनापत्तिः, जातिविशिष्टव्यक्तौ शक्त्यङ्गीकारेऽपि वैशिष्ट्यप्रयुक्तं गौरवमस्त्येव, अतः लाघवात् जातौ शक्तिरङ्गीकार्या, व्यक्तिस्तु आक्षेपाल्लभ्यते"[3] इति तदेवालङ्कारिकैरपि यथातथमनुसृतम्। मम्मट आह - "सङ्केतित श्चतुर्भेदो जात्यादिर्जातिरे व वा"[4] इति। किञ्च,

"यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिमित्तयोग्या व्यक्तिरेव तथाप्यानन्त्याद्व्यभिचाराच्च तत्र सङ्केतः कर्तुं न युज्यते......सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तम्"[5] इत्यालङ्कारिकसिद्धान्तः मीमांसोपजीव्य एव।

सर्वेप्यार्थाः वृत्त्यैव बोध्यन्ते। पदार्थः अभिधावृत्तिबोध्यः। तथैव वाक्यार्थस्यापि बोधाय काचन वृत्तिरपेक्षिता; सैव तात्पर्यवृतिः। तद्बोध्योऽर्थस्तात्पर्यार्थः। मीमांसकाः तात्पर्यमङ्गीकुर्वन्ति। मम्मटविश्वनाथादय आलङ्कारिका अप्यत्र सम्मतिं प्रादर्शयन्। मम्मट आह -

"स्यांद्वाचाको लाक्षणिकश्शब्दोऽत्र व्यञ्जकस्त्रिधा।
वाच्यादयस्तदर्थाः स्युस्तात्पर्यार्थोऽपि केषुचित्"[6]

इति। विवृतञ्च - आकाङ्क्षायोग्यतासन्निधिवशात् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थस्समुल्लसतीत्यभिहितान्वय- वादिनां मतम्। वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः।"[7] विश्वनाथोऽपि अमुमेव पन्थानमाश्रित्य तात्पर्यं न्यरूपयत्। "तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने"[8] इत्यादिना।यद्यपि मम्मटादिभिः तात्पर्यवृत्तेस्तदर्थस्य च सत्ताऽङ्गीक्रियते तथाऽपि तावता

---

1. काव्यमीमांसा पृ.8
2. मीमांसासूत्रम् 1-3-33
3. येन विना यन्नोपपद्यते तत्तेनाक्षिप्यत इति न्यायोऽत्रानुसन्धेयः
4. काव्यप्रकाशः पृ.11.
5. पूर्वत्र पृ. 11,12,13
6. पूर्वत्र पृ. 8,9
7. पूर्वत्र पृ. 9
8. साहित्यदर्पणः पृ.81

व्यञ्जनायाः व्यङ्ग्यार्थस्य च गतार्थत्वं तु न ।[9] परन्तु, आसन् केचन आलङ्कारिकाः ये तात्पर्येणैव व्यङ्ग्यायार्थस्यापि प्रतीतिमभ्युपगच्छन्ति । भट्टलोल्लट-मुकुळभट्ट-धनञ्जय प्रभृतयः अस्यां कोटौ आपतन्ति । ''सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः'', ''यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्'' इत्यादीनि वाक्यानि तैः प्रदर्शितानि । तदभिप्रायाणां सङ्ग्रहः बहुष्वालङ्कारिकग्रन्थानां व्यञ्जनानिरूपणप्रकरणेषु (पूर्वपक्षकोटौ) द्रष्टव्यः । एवञ्च प्राचीनालङ्कारिकाः सर्वथा व्यञ्जनास्थानेऽपि तात्पर्यमङ्गीकुर्वन्ति स्मेति, क्रमशः ध्वनिप्रस्थानप्रभावेण तत्प्राधान्यं शनैश्शनैर्न्यूनीबभूवेति च वक्तुं शक्यते । ध्वनिव्यतिरेकिणः अर्वाचीनकालेऽपि तात्पर्येणैव प्रतीयमानार्थमपि निर्वहन्तीत्येतदेवात्र प्रमाणम् । उदाहरणं तु दशरूपकं, सावलोकम् ।[10]

मीमांसकसम्मता गौणी वृत्तिरपि आलङ्कारिकैरङ्गीकृता ।
किन्तु लक्षणायामन्तर्भाविता ।[11] अत्रालङ्कारिकाणां मध्ये विवाद एव नस्ति ।

मीमांसासिद्धान्तान् प्रमाणानि वाऽऽदाय साहित्ये केचन अलङ्काराः विनिर्मिताः । अधुना सङ्ग्रहेण ते प्रस्तूयन्ते ।

''विधिरत्यन्तमप्राप्तौ'' । आपदेव आह ''सच अप्राप्तमर्थं विधत्ते''[12] इति । ''स हि चेतनवत्प्रवर्तनात्मकः''[13] इति श्रीमात्पार्थसारथिमिश्रमहोदयः । अप्राप्तस्यापूर्वस्यांशस्य विधायको विधिरिति फलितम् । उदाहरणम् ''व्रीहीन् प्रोक्षति'' इति । तत्र व्रीहीणां संस्कारकर्मणः प्रक्षाळनस्य, विना विधिवाक्यम् प्रमाणान्तरेण कथमपि प्राप्तिरस्ति ।[14] ''यजेत स्वर्गकामः'' इत्यादीन्यपि वाक्यान्यत्रोदाहरणानि भवन्ति । यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण प्राप्तम्; किन्त्वनेनैव विधिना ।[15]

अयं विधिः साहित्येऽलङ्काररूपतां जग्राह । शोभाकरमित्रः तमित्थं लक्षितवान् - ''अप्राप्त प्राप्तिमात्र पर्यवसितो विधिः ।''[16] असम्भाव्य हेतु फलप्रेषणं विधिरिति च । स एव वृत्तौ विवृण्वन् - ''अज्ञातज्ञापनं विधिः''[17] इत्युवाच ।

श्लो. पृथ्वि स्थिरा भव भुजङ्गम धारयैनां त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तन्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम् ॥

अस्मिन् पद्ये पृथिव्यादीनां प्रेष्यत्वमुपवर्णितम् । अप्राप्तस्य स्थैर्यादिकस्य प्रापणं फलम् । अतोऽयं विध्यलङ्कारः । श्रीकृष्णोऽपि ''सा विध्यलङ्कृतिर्यत्र सिध्दमेव विधीयते''[18] इति विध्यलङ्कारं लक्षयामास । अप्पय्यदीक्षिता अपि तं ''सिध्दस्यैव विधानं यत्तमाहुर्विध्यलङ्कृतिम्''[19] इति लक्षयित्वा ''पञ्चमोदञ्चने काले कोकिलः कोकिलो ऽभवत्'' इत्युदाजहुः । अत्र प्रथमकोकिल शब्देन प्राप्तं कोकिलत्वमनूद्य द्वितीयेन

---

9. द्रष्टव्यमः - काव्यप्रकाशे पञ्चमोल्लासः, साहित्यदर्पणे पञ्चमपरिच्छेदश्च ।
10. दशरूपकम् IV-37. ''अतो न रसादीनां काव्येन सह व्यङ्ग्यव्यञ्जकभावः'' । धनिकः ।
11. काव्यप्रकाशः पृ.१७. ''गौणीवृत्तिरपि लक्षणा प्रभेद एव । सम्बन्धानुपपत्तिमूलकत्वात्'' विद्यानाथः प्रतापरुद्रीये पृ.१९
12. मीमांसान्यायप्रकाशः पृ.५. तथा पृ. ११२,१
13. न्यायरत्नमाला पृ. ११४
14. विधिरसायनस्य उपोद्घाते सुब्रह्मण्य शास्त्रिणः पृ. ८.
15. सिध्दान्तलेशसङ्ग्रहः पृ. ५
16. अलङ्काररत्नाकरः पृ. १४२
17. पूर्वत्र पृ. १४३
18. अलङ्कारमणिहारः (परकालस्वामिनाम्) पृ. ६२
19. कुवलयानन्दः पृ. २६५

सकलजनहृद्यपञ्चमस्वरशालीनत्वं विधीयते यथाऽग्निहोत्रं जुहोति इति होमे प्राप्ते दध्ना जुहोतीति दधिरूपगुणो विधीयते।

''नियमःपाक्षिके सति'' इति वार्तिकमनुसृत्यापदेवः ''पक्षे अप्राप्तस्य तु यो विधिः सः नियमविधिः''[19] इति नियमविधेर्लक्षणं ददौ। दीक्षितेन्द्रा अपि ''पक्षप्रात्पस्य अप्राप्तांश परिपूरणफलकः''[20] इति जगदुः। सुब्रह्मण्यशास्त्रिणः ''पक्षे प्राप्तस्याप्राप्तंशपरिपूरणफलको विधिर्नियमविधिः''[21] इति दीक्षितवचनमनूचुः। सर्वैरपिदत्तमुदाहरणं ''व्रीहीनवहन्ति'' इति। पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां वैतुष्यं नखविदलनादिना यदि साध्यते तदा पक्षेऽप्राप्तस्य अवहननस्य नियमः अनेन वाक्येन विधीयते।

सोऽयं नियमविधिः शोभाकरमित्रेणालङ्काररूपतां प्रापितः। ''आप्राप्तांशप्रापणरूप''[22] मित्यादिना लक्षितश्च। यथा -

किसमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।
किमाराध्यं पुण्यं किमभिलषणीयञ्च करुणा
यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति॥

अत्र सेव्यमानत्वं द्युसरित्तट इव प्रदेशान्तरेऽपि प्राप्तम्। एवञ्च तटान्तरे सेव्यामाने सति द्युसरित्तटेऽप्रात्प सेव्यमानत्वं नियमेन विधीयते।

''तत्रचान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते। ''उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसङ्ख्या'' इत्यापदेवः। अप्पय्यदीक्षिता अपि एवमेव शेषशेषिभेदाभ्यां परिङ्ख्यां न्यरूपयन्।[23] पञ्चेतरपञ्चनखभक्षणस्य पञ्चपञ्चनखभक्षणस्य च युगपत्प्राप्तौ ''पञ्चपञ्चनखाभक्ष्या'' इति वाक्यं आद्यस्य निवर्तनाय। सा परिसङ्ख्या साहित्येऽलङ्काररूपेण वर्ण्यते। विद्यानाथः तमित्थं लक्षयति।

एकस्य वस्तुनः प्राप्तापावनेकत्रैकदा यदि।
एकत्र नियमस्सा हि परिसङ्ख्या निगद्यते।[24]

मम्मटोऽपि तथैव प्राहः-

किञ्चित् पृष्टमपृष्टं वा कथितं यत्प्रकल्प्यते।
तादृगन्य व्यपोहाय परिसङ्ख्या तु सा समृता॥[25] इति।

उदाहरणम्ः-

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वयसि॥

---

20. सिध्दान्तलेशसङ्ग्रहः पृ.5 21. विधिरसायनस्योपोद्घाते पृ.8. 22. अलङ्काररत्नाकरः पृ.143
23. सिध्दान्लेशसङ्ग्रहः पृ.6 24. प्रतापरूद्रयशोभूषणम् पृ550, द्रष्टव्यम् - अलङ्कारसर्वस्वम् पृ.180,181
25. काव्यप्रकाशः पृ.277; द्रष्टव्यम् - एकावळी पृ.420,21,22.

अत्र कौटिल्यादेरितराधिकरणत्वव्यपोहो व्यज्यत इति परिसङ्ख्या।

मीमांसकैः अर्थापत्तिरिति किञ्चित्प्रमाणमङ्गीक्रियते। उदाहरन्ति च - ''पीनो देवदत्तः दिवा न भुङ्क्ते'' इति।

इदं प्रमाणं साहित्येऽलङ्कार रूपेण वर्ण्यते। विद्यानाथ आह -

एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यदापतेत्।
कैमुत्यान्यायतस्सा स्यादर्थापत्तिरलङ्क्रिया॥[26]

यत्र कस्यचिदर्थस्यत्तौनिष्पत्तौ तत्समानन्यायात् कैमुत्यन्यायेनर्थान्तरमापतति सोऽर्थापत्तिरलङ्कारः। यथा :-

समन्तादुद्वेलै र्विविधहयधाटी कलकलैः
जगत्यां क्रामन्नप्यजनि विधुरस्सेवणपतिः।
मनाक्क्रोधोदञ्चद्भ्रुकुटिकुटिले रूद्रनृपते।
नृपाणामन्येषां विफलितरुषां कैव गणना॥

अत्र सेवणवृत्तन्तात् नृपान्तरवृत्तान्तः आपततीत्यर्थापत्तिः।

मीमांसायां श्रुतिलिङ्गादिप्रमाणषट्के प्रकरणमन्यतमम्। ''उभयाकाङ्क्षा प्रकरणाम्''[27] । दर्शपूर्णमासप्रधानस्योपकारकाकाङ्क्षा। प्रयाजादीनाञ्चोपकार्याकाङ्क्षा। तथाचोभयकाङ्क्ष्यास्सत्वात् प्रकरणात् प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। सङ्करालङ्कारः इदमेव प्रमाणमाधारीकृत्य प्रवर्तते। तदुक्तं मम्मटेन - ''अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः''[28] इति। अनासादित स्वतन्त्रभावानां अलङ्कारणां यत्र उपकार्योपकारकत्वं तत्र सङ्करः। यथाः-

आते सीमन्तरत्ने मरकतिनिहृते हेमताटङ्कपत्रे
लुत्पायां मेखालायां झटिति मणितुलाकोटियुग्मे गृहीते।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति॥

अत्र भ्रान्तिमत्तद्गुणालङ्कारयोरङ्गाङ्गिभावः परस्परापेक्षायास्सत्वात्। तेनात्र सङ्करालङ्कारः।[29] आनन्दवर्धनोऽपि अलङ्कारयोः परस्पराकाङ्क्षायां वर्तमानायां सङ्करालङ्कारमङ्गीकरोति।[30]

इत्थं सङ्केतग्रहविषये, शब्दवृत्तिविचारे, अलङ्कारनिरूपणे च मीमांसाप्रभावः कथमासीदित्ययं विषयः सङ्क्षेपेणोपन्यस्तः। अस्मादनुशीलनादिदं निष्यन्दते - (१) इतोऽपि परिशीलनेन मीमांसायाः उपकारकत्वमितोऽपि स्पष्टीभवेत्। (२) ''वाच्यादयस्तदर्थाःस्युः तात्पर्यार्थोऽपि केषुचित्'' इत्युक्त्वा मम्मटः ''सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते'' इति वाक्यमपि तत्र समयोजयत्। अनेन यथा वाच्यादीनां तथा

26. प्रतापरूद्रयशोभूषणम् पृ. 548,549
27. मीमांसान्यायप्रकाशः पृ.81
28. काव्यप्रकाशः पृ.299
29. पूर्वत्र पृ. 300
30. ध्वन्यालोकः (३३ उद्योतः) पृ.212.

तात्पर्यस्यापि व्यञ्जकत्वं मम्मटेनाभ्युपगतमिति मन्तव्यम् । किन्तु वाच्यादिनां (वाच्य-लक्ष्य-व्यङ्ग्यानां) त्रयाणामेव उदाहरणानि दत्तानि; न तु तात्पर्यस्य। तात्पर्यार्थस्यापि क्वचिद्व्यञ्जकत्वं स्यान्नु ? यथा महावाक्यं - रामवत् प्रवर्तितव्यं न रावणवदिति । अनेन दृष्टिकोणेन कुन्तकोक्तानां वाक्य-प्रकरण-प्रबन्धवक्रताना-मप्यनुशीलनमावश्यकम्। (३) मीमांसापरिज्ञानेन मुकुलभट्ट भट्टनायक-धनञ्जयादीनां वचनानि सम्यक् प्रत्येतुं शक्यन्ते। (४) मीमांसान्यायान् प्रमाणानि चादाय इतोऽपि नूतनाः अलङ्काराः। उद्भावयितुं शक्याः इति शम्।

**उपयुक्तग्रन्थसूची**


1. अलङ्कारमणिहारः - श्रीकृषणः Government of Maharaja of Mysore - 1917
2. अलङ्काररत्नाकरः - शीभाकरमित्रः Oriental Book Agency, Poona 1942
3. काव्यप्रकाशः - मम्मटः- चौखम्बा संस्कृत सिरीज् आफीस, Varanasi 1967
4. काव्यमीमांसा - राजशेखरः-चैखम्बा विद्याभवन्, वाराणसी 1982
5. दशरूपकम् - धनञ्जयः- रामजीउपाध्याय, सागर मध्यप्रदेशः
6. ध्वन्यालोकः- आनन्दवर्धनः चैखम्बा ओरियन्यलिया, वाराणसी
7. न्यायरत्नमाला - पार्चसारथिमिश्रः - Motilal Banarasi Dass, New Delhi, 1972
8. मीमांसान्यायप्रकाशः - आपदेवः - Chowkkamba Skt.Service Office, Varnasi
9. प्रतापरुद्रीयम् - विद्यानाथः Krishnadass Academy, Varanasi 1981
10. कुवालयानन्दः - अप्पयदीक्षितः चैखम्बा विद्याभवन् Varanasi 1983
11. विधिरसायनम् -अप्पयदीक्षितः Department of Education, Government of India, 1967
12. साहित्यदर्पण : - विश्वनाथ Chowkhansa Vidyabhavan, Varanasi 1967
13. सिध्दान्तलेशसङ्ग्रहः अ.दीक्षितः - दीक्षितेन्द्र ग्रन्थप्रकाशनसमितिः, सिकिन्द्राबाद् 1973

# कालिदासो महाकविः ।

- डा. उ. शङ्करभट्टः ॥

**१. प्रस्तावना -**

विश्वविख्याते संस्कृतवाङ्मये भासकालिदासप्रभृतय अनेके कवयः अनवद्यानि काव्यानि विलिख्य संस्कृतसाहित्यस्य गरिमाणं प्राख्यापयन्निति विदितमेव सर्वेषां संस्कृतसाहित्याभिनिविष्टचेतसां विपश्चिताम् ।

उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥ (भा. काव्या. I.६)

इत्येतदालंकारिकवाचोयुक्त्यनुसारेण काव्यमयवपुषा विभ्राजमानानां तेषां कवीनामन्यतमस्य

पुरा कवीनां गणनाप्रसङ्गे
कनिष्टिकाधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावा -
दनामिका सार्थवती बभूव ॥

इत्येतामार्योक्तिमनुरुध्य संस्कृतकविगणनावसरे कनिष्ठिकया सर्वप्रथमतया परिगण्यमानस्य कालिदासस्य अनितरसाधारणप्रतिभाविशेषेण निष्पन्नेषु काव्येष्वभिव्यज्यमानं प्रतिभाविशेषं तदाधारं कालिदासस्य महाकवित्वं च परिशीलयितुं प्रवर्तते भाषणमिदम् ।

**२. कालिदासकृतयः -**

कालिदाससंज्ञाश्रवणमात्रेण सर्वस्यापि संस्कृतज्ञस्य संस्कृताभिमानिनो वा मनसि आलंकारिकाग्रेसरेण ध्वनिसिद्धान्तप्रतिपादकेन तत्रभवता आनन्दवर्धनेन महाकविपदमधिष्ठापितः भारतीयविमर्शकैः सामान्येन कालिदासकृतिपरिशीलने कृतभूरिश्रमैः भारतीयैरेवैतच्छतकप्रथितैस्तत्रभवद्भिः डा. वि.मिराशीमहोदयैः (कालिदास संज्ञके स्वविमर्शग्रन्थे) विशिष्य ऋतुसंहार - मालविकाग्निमित्र - कुमारसंभव - विक्रमोर्वशीय - मेघदूत - कुन्तलेश्वरदौत्य - अभिज्ञान शाकुन्तल - रघुवंश - संज्ञकानां काव्यानामारचयितृत्वेनाभ्युपगतः कालिदास एव स्फुरति नान्यः कश्चित् । ये चान्ये गवेषकाग्रेसरेण तत्रभवता Theoder AUFRECHT महाभागेन Catalogus Catalogorum संज्ञके संस्कृतग्रन्थतत्कर्तृलघुपरिचयकारिणि ग्रन्थविशेषे श्रुतबोधप्रभृतीनां सप्तविंशतिग्रन्थानां कर्तारः सप्त कालिदाससंज्ञकाः परिगण्यन्ते तेषां नैकोऽपि कालिदाससंज्ञाश्रवणे कस्यचित् सुधियः स्मृतिपथमायाति । कवितावैखरीं प्रतिपाद्यवस्तु कृतिस्वरूपं च निर्णयप्रमाणत्वेनाभ्युपगम्य ऋतुसंहारादीना-मुपरिनिर्दिष्टानामभिन्नकर्तृकत्वं भारतीया विमर्शका अङ्गीकुर्वन्तीत्येतदत्राविस्मरणीयं तत्त्वमास्ते ।

संस्कृतसाहित्यचरित्रकारैरनेकैः क्रिस्तूत्तरपञ्चमशतकभवत्वेन निर्णीतस्य महाकविकालिदासस्य प्रागुक्तानामष्टानां कृतीनां षष्ठं कुन्तलेश्वरदौत्यं नैतावता केनापि कुत्रापि मुद्रापितममुद्रापितं वा अक्षिसात्कृतमास्ते, श्रूयते परमित्येवोच्यते सर्वैः। तथा चाद्य षष्ठं तत् कुन्तलेश्वरदौत्यं विना अवशिष्टानि सप्तैव काव्यानि महाकविकालिदासविरचितानि, तत्र च प्रथमं ऋतुसंहारं ऋतुवर्णनमात्रपरं सत् कालिदासस्य प्रथमकृतित्वेन परिगण्यमानं न तथा विद्वदादरपात्रमास्ते यथा अन्यानि षट् विद्वदादरपात्राणि वर्तन्ते। तथा च कुमारसंभव - मेघदूत - रघुवंशसंज्ञकं श्रव्यकाव्यत्रयं, मालविकाग्निमित्र - विक्रमोर्वशीय - अभिज्ञानशाकुन्तलसंज्ञकं दृश्यकाव्यत्रयं च सामान्यतो महाकविकालिदासकृतित्वेन संस्कृतसाहित्यसंसारे प्रथते इति विदांकुर्वन्तु सहृदयाः।

महाकविकालिदासकृतित्वेन निर्विवादं विमर्शनिपुणाभ्युपगतं प्रथितं श्रव्यत्रयं दृश्यत्रयं च यदा वयं सचेतसः सन्तः परिशीलयामस्तदा कालिदासकवेरनितरसाधारणः प्रतिभाविशेषः स्फुटीभवति, कालिदासस्य महाकविपदाधिष्ठापनं चोपपद्यते।

**३. कविकाव्यमूल्याङ्कनम् -**

कविकाव्यविमर्शमार्गे सुप्रथितमेतत् तत्त्वं यत् काव्यमीमांसाविचक्षणाः आलंकारिकाः कवीनां काव्यग्रथनकौशलं तद्द्वारा अभिव्यञ्जितस्य प्रतीयमानार्थस्य उत्कर्षापकर्षौ चाधृत्य कवीनां काव्यानां च मूल्याङ्कनं कुर्वन्तीति। तदेतत् तत्त्वं ध्वनिमार्गप्रदर्शकेन तत्रभवता आनन्दवर्धनेन

सरस्वती स्वादु तदर्थवस्तु
निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति
परिस्फुरन्तं प्रतिभाविशेषम्॥

तत् वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां भारती
अलोकसामान्यं प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति
येनास्मिन् अतिविचित्रकविपरम्परावाहिनि संसारे
कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते (ध्व I.6 & पं 1-3)

**इत्येतदादिना**

व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवित्व
लाभो महाकवीनां, न वाच्यवाचकरचनामात्रेण। (id. I.8 & पं-2&3)

इत्येतदन्तेन च ग्रन्थसंदर्भेणोद्घोषितमास्ते।

तत्त्वमेतन्मनसिकृत्य कुमारसंभवादीनां काव्यानां ग्रथनक्रमस्य अभिव्यज्यमानार्थगौरवस्य च विवेचनं कुर्वन्तः कविकाव्यप्रख्यापकाः सहृदयाः कालिदासं महाकविपदभूषणमभ्युपगच्छन्ति।

**तदेतदत्र**

अनन्तशास्त्रं बहु वेदितव्य -
मल्पश्च कालो बहवश्च विघ्नाः।

यत् सारभूतं तदुपासितव्यं
हंसो यथा क्षीरमिहाम्बुमिश्रम् ॥

इत्येतत्सुभाषितमनुस्मृत्य स्थालीपुलाकन्यायेन किंचित् प्रस्तूयते ।

**४. कालिदासस्य काव्यग्रथनकौशलम् -**

वाच्यानां वाचकानां च यदौचित्येन योजनम् ।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः ॥

वाच्यानामितिवृत्तविशेषाणां वाचकानां च तद्विषयाणां रसादि - विषयेणौचित्येन यद्योजनमेतन्महाकवेर्मुख्यं कर्म । अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम् । (id. III. 32 & पं 1-4)

इत्येतदानन्दवर्धनोपस्थापितमहाकविनिकषानुगुणतया काव्येषु प्रतिपादनीयानामर्थानामभिव्यञ्जने समर्थानां शब्दानामर्थानां प्रयोगे कालिदासो निपुणो वर्तते । तथा हि -

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत -
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ (कु. V.71)

इत्यत्र पार्वत्याः शिवप्राप्तिविषयकाभिनिवेशदार्ढ्यं परीक्षितुं पार्वतीं तपसो निवर्तयितुं प्रयतमानस्य कपटवटोः शिवस्य वाक्ये शिवपरतया कपालिशब्दं प्रयुञ्जानस्य कालिदासस्य व्यञ्जकप्रयोगनैपुण्यं काव्यमीमांसकाः मुक्तकण्ठं प्रशंसन्ति । यथा -

वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे
तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौ -
चित्येनोपपद्यत एव विभागव्यवस्था ॥

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम्? (काव्य. V pp.239, 240)

**इत्याहाचार्यमम्मटः ।**

अस्यायमभिप्रायः - उदाहृते काव्ये यदि 'कपालिनः' इत्यस्य स्थाने तत्पर्यायवाचकं 'पिनाकिनः' इति पदं प्रयुक्तमभविष्यत् तर्हि तेनोक्तेन पिनाकसंज्ञकदिव्यधनुर्धरत्वेन शिवस्य दिव्यधनुर्धरत्वं, तेन अखण्डैश्वर्यवत्त्वं, तेन च स्पृहणीयत्वमभिव्यक्तं सत् काव्यमेतत् पार्वत्यास्तपसो निवर्तने अप्रयोजकं भवेत् । 'कपालिनः' इत्येतत् शिववाचकं पदं प्रयुक्तं चेत् तेनोक्तेन नरकपालरूपभिक्षापात्रवत्त्वेन शिवस्य अपेक्षितोपकरणहीनत्वं, तेन

दरिद्रत्वकुत्सितत्वे, ताभ्यां परिहरणीयत्वं चाभिव्यक्तं सत् काव्यमिदं पार्वत्यास्तपसो निवर्तने प्रयोजकं स्यादित्याकलय्य पिनाकिशब्दमपहाय कपालिशब्दं निवेशितवतः कालिदासस्य काव्यग्रथनकौशलमनितर-साधारणमिति काव्यमीमांसकाः प्रशंसन्तीति।

अत्रालंकारिकवरेण्यस्य कुन्तकाचार्यस्य

शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥

***********

साहित्यमनयोः शोभाकारितां प्रति काप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः॥ (वक्रो. I. 9 & 17.)

इत्येतत् कारिकाद्वयं परामर्शमर्हति।

एवमेव

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः॥ (कु. V. 24)

इत्यत्र तपस्यन्त्याः पार्वत्याः वर्णने कालिदासेन प्रयुक्ता शब्दार्थसामग्री काव्यमीमांसकैः प्रशंस्यमाना महीयते। काव्येऽस्मिन् वाच्यातिशायिनं व्यङ्ग्यं पार्वत्याः अविहतसमाधिं, सौन्दर्यातिशयं चाभिव्यञ्जयितुं प्रयुक्ता शब्दार्थसामग्री सुसमर्था राजते। काव्यमेतत् प्रशंसतस्तत्रभवतः अप्पय्यदीक्षितस्य

अत्र तपस्यन्त्या देव्या देहोपरि निपततां
प्रथमवृष्टिबिन्दूनां क्रियास्वभाववर्णनेन देव्याः
समाध्युचितावस्थानाभिव्यक्तिद्वारा चिरनिदाघ -
तप्तदेहोपरि निपतनेन सुखपारवश्यसंभ्रमहेतौ
प्रथमवृष्टावप्यविहता समाध्यवस्था व्यज्यते।

************

किं चैभिरेव विशेषणैर्देव्या लोकोत्तरं सौन्दर्यमभि -
व्यज्यते - 'स्थिता' इत्यनेन पक्ष्मणामविरलतायाः, 'क्षण' -
मित्यनेन तेषां मसृणतायाः, पक्ष्मपतनशिथिलवेगै -
रुदबिन्दुभिस्ताडनोक्त्या अधरस्यातिसौकुमार्यस्य,
पक्ष्माधरपतनादिभिः शिथिलवेगानां तेषां स्तनोत्सेधे
चूर्णीभाववर्णनेन तयोरतिकाठिन्यस्य, उरोविष्टम्भेऽपि
वलीषु तेषां स्खलनोक्त्या वलीनां विस्पष्टतायाः,

सर्वैबिन्दूनां नाभावेव प्रवेशकथनेन नाभेरतिगभीर -
तायाश्चाभिव्यञ्जनात् । एवं च वाच्यातिशायि व्यङ्ग्य -
मत्रेति ध्वनेरुदाहरणमिदम् । (चि. pp. 1, 2)

इत्येतानि वाक्यान्यत्र स्मृतिपथमानेतव्यानि सन्ति । तथा चैतद्वक्तव्यं यत् कालिदासो व्यञ्जकशब्दार्थप्रयोगे अनितरसाधारणप्रतिभावानिति ।

## ५. कालिदासस्य व्यङ्ग्यार्थप्रतिपादनसामर्थ्यम् -

काव्यमीमांसकाग्रेसरेण प्रथितयशसा आनन्दवर्धनेन
काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः (Ed I.1a)

इति ध्वनिशब्देन परिकीर्तितस्य, ध्वन्यालोकव्याख्यात्रा तत्रभवता लोचनकारेण अभिनवगुप्ताचार्यपादेन 'ध्वनतीति ध्वनिः', 'ध्वन्यते इति ध्वनिः', 'ध्वननं ध्वनिः' - इत्येतद्व्युत्पत्तित्रयप्रदर्शनपुरःसरं स्पष्टीकृतार्थेन ध्वनिशब्देन द्वितीयया कर्मव्युत्पत्त्या उपगन्तव्यस्य ध्वन्यमानस्य रसवस्त्वलंकाररूपस्य व्यङ्ग्यापरपर्यायस्य प्रतीयमानार्थस्य काव्यात्मनः काव्येषु समावेशने कालिदासो महीयते ।

श्रृङ्गार एव मधुरः परः प्रह्लादनो रसः । (id. II. 7 ab)

इत्येतदानन्दवर्धनसिद्धान्तानुरोधेन सहृदयहृदयावर्जकस्य श्रृङ्गाररसस्याभिव्यञ्जकानां विभावानुभावव्यभिचारिणां काव्येषु समुपस्थापने समुचितशब्दार्थप्रयोगे, तद्द्वारा श्रृङ्गाररसस्याभिव्यञ्जने च कालिदासः प्रथते । यथा -

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ (अ II-9)

पयोधरैर्भीमगभीरनिः स्वनै -
स्तडिद्भिरुद्वेजितचेतसो भृशम् ।
कृतापराधानपि योषितः प्रियान्
परिष्वजन्ते शयने निरन्तरम् ॥ (ऋ. II-11)

स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण
मौर्वीं द्वितीयामिव कार्मुकस्य ॥(कु. III-54)

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादव्यपेक्षाच्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ (मा. III-20)

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ (मे. II-19)

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
श्रृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः? ॥ (वि. I-10)

नृपं तमावर्तमनोज्ञनाभिः
सा व्यत्यगादन्यवधूर्भवित्री।
महीधरं मार्गवशादुपेतं
स्रोतोवहा सागरगामिनीव ॥ (र. VI-52)

कालिदासो न केवलं श्रृङ्गारस्य यावदन्येषां च हास्यादीनां रसानां काव्येष्वभिव्यञ्जने सामर्थ्यं प्रदर्शयति। यद्यपि कालिदासः श्रृङ्गाररसमेव प्रायः काव्येष्वङ्गितया समावेशितवानिति आचक्षते काव्यतत्त्वविदस्तथापि कालिदासो रसान्तराणां यथास्थानमङ्गतया अङ्गितया वा समावेशने अन्येभ्यो न हीयते। दिङ्मात्रमत्रोदाह्रियते-

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्? ॥ (र. VIII. 67)

तपःपरामर्शविवृद्धमन्यो - र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य।
स्फुरन्नुदर्चिः सहसा तृतीया- दक्ष्णः कृशानुः किल निष्पपात ॥ (कु. III. 71)

अमोघं संदधे चास्मै धनुष्येकधनुर्धरः।
ब्राह्ममस्त्रं प्रियाशोक-
शल्यनिष्कर्षणौषधम् ॥ (र. XII. 97)

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ (अ. I. 7)

ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाच्छविः।
ताडका चलकपालकुण्डला कालिकेव निबिडा बलाकिनी ॥ (र. XI. 15)

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत्।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित् क्षणमपि न पार्श्वे रथजवात् ॥ (अ. I. 9)

वल्मीकाग्रनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापिशकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ (id. VII. 11)

काव्येष्वेतेषु क्रमशः करुण - रौद्र - वीर - भयानक - बीभत्स - अद्भुतशान्तरसानामभिव्यञ्जने समुचिततया प्रयुक्ता व्यञ्जकसामग्री कालिदासस्य काव्यघटनानुकूलशब्दार्थोपस्थितिरूपायाः प्रतिभायाः वैशिष्ट्यमभिव्यनक्ति।

कालिदासः काव्येषु रसानुगुणव्यञ्जकानामेव न यावत्

वस्त्वलंकारध्वनी तु सर्वथा रसं प्रति
पर्यवस्यतः .......... । (अभि. लो. - आ.ध्व. I. 5)

इत्येतदभिनवगुप्तवचनानुसारेण रसपर्यवसायिवस्त्वलंकारयोरप्यनुगुणानां व्यञ्जकानां समुचिततया आयोजने सिद्धहस्तो विद्यते । अत्रापि दिङ्मात्रमुदाह्रियते -

संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ (र. VI. 67)

इत्यत्र इन्दुमत्या उपेक्षितानां राजकुमाराणां वैवर्ण्यवर्णनेन तद्विषादातिशयरूपं वस्तु व्यज्यते - इन्दुमत्या तिरस्कृता राजकुमाराः अतिशयेन विषण्णा अभवन्निति ।

मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसंपदां
सरोजसंधानमिवाकरोदपाम् ॥ (कु. V. 27)

इत्यत्र उत्प्रेक्षालंकारेण वाच्येन पद्मान्तरं तुहिनेनोपहन्यते, पार्वतीमुखपद्मं तु न तथेति व्यतिरेकालंकाररूपोऽर्थोऽभिव्यज्यते । काव्ययोरनयोः क्रमशो व्यज्यमानयोर्वस्त्वलंकाररूपयोरर्थयोः रसपर्यवसायिनोरभिव्यञ्जने कविना प्रयुक्ता व्यञ्जकसामग्री सहृदयैः सुतरां प्रशंस्यते ।

**६. रसपरिपोषे कालिदासस्य सावधानता -**

काव्ये प्रतिपादनीयस्य रसस्य परिपोषणे कालिदासो भूयसा सावधानो दृश्यते; क्वचित् पुनरनवहितचेता इव भासते । तथा हि - कालिदासो महाभारतप्रसिद्धं शकुन्तलोपाख्यानमाधृत्य अभिज्ञानशाकुन्तलं दृश्यकाव्यं लिखितुं प्रवृत्तः इतिवृत्ते संगतमनौचित्यं नायिकानायकयोरपकर्षमावहत् रसापकर्षकं भवेदिति मनसिकृत्य संभाव्यमानापकर्षपरिहाराय तत्र सखीद्वयवृत्तान्तं दुर्वासःशापवृत्तान्तं च समावेशितवान् । रघूणामन्वयं वक्तुं रघुवंशकाव्यमारचयितुं प्रवृत्तश्च पुनरितिहासानिर्दिष्टं राज्ञामजादीनां विवाहादिवर्णनं कृतवान् । कालिदासस्य रसपरिपोषणतत्परतामेतां काव्यतत्त्वज्ञाः प्रशंसन्ति । अत्र

इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम्।
उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः॥

***************

इतिवृत्तवशायातां कथंचिद्रसाननुगुणां स्थितिं त्यक्त्वा पुनरुत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयो विधेयः - यथा कालिदासप्रबन्धेषु ।...तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत् तदेमां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्। न हि कवेरितिवृत्तमात्रनिर्वहणेन किंचित् प्रयोजनम्, इतिहासादेव तत्सिद्धेः। (आ.ध्व. III. 11 & pp. 335,6)

इत्येतत् ध्वन्यालोककारवचनं

यत् स्यादनुचितं किंचिन्नायकस्य रसस्य वा।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्॥ (विश्व. सा. VI. 50)

इत्येतत् साहित्यदर्पणकारवचनं च स्मरणीयमास्ते।

इत्थं नायिकानायकरसानामुत्कर्षं सर्वथा कामयमानोऽपि कालिदासः कुमारसंभवे शिवपार्वत्योः दिव्यनायकयोर्विषये अदिव्यनायकयोरिव रतिमुपपादयन्, तत्रैव रतिविलापे करुणरसं पुनः पुनर्दीपयन्, विच्छिन्नं च करुणरसं मधुसंनिधाने पुनर्दीपयन् प्रतिपाद्यस्य रसस्य सम्यङ्निर्वहणे अनवहितमना भासते । कालिदासस्यैतदनवधानं सत्यमित्यभ्युपगच्छन्तोऽपि काव्यतत्त्वज्ञास्तदनवधानं कविशक्तितिरोभूतं मन्यमाना दोषत्वेन नाभ्युपगच्छन्ति। अत्रेत्थमाह तत्रभवानानन्दवर्धनः -

द्विविधो हि दोषः - कवेरव्युत्पत्तिकृतोऽशक्तिकृत-
श्च। तत्राव्युत्पत्तिकृतो दोषः शक्तितिरस्कृतत्वात्
कदाचिन्न लक्ष्यते। यस्त्वशक्तिकृतो दोषः स
झटिति प्रतीयते। परिकरश्लोकश्चात्र -

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते॥

तथा हि - महाकवीनामप्युत्तमदेवताविषयप्रसिद्ध-
संभोगश्रृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृत-
त्वात् ग्राम्यत्वेन न प्रतिभासते। यथा - कुमार -
संभवे देवीसंभोगवर्णनम्।

*********

यत्त्वेवंविधे विषये महाकवीनाप्यसमीक्ष्यकारिता
लक्ष्ये दृश्यते स दोष एव। स तु शक्तितिर -
स्कृतत्वात् तेषां न लक्ष्यत इत्युक्तमेव। (ध्व. III. pp. 316, 7 & 333)

इति।

तथा च

सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषो-
द्घोषणमात्मन एव दूषणं भवति। (id. II. p. 233)

इत्येतदानन्दवर्धनसिद्धान्तमभ्युपगच्छन्तः सहृदयाः रसाद्युपनिबन्धे कालिदासस्य क्वाचित्कमनवधानम-विगणयन्तः काव्येषु व्यङ्ग्यार्थोपनिबन्धे अप्रतिमप्रतिभावान् कालिदास इति साभिमानमङ्गीकुर्वन्ति।

**७. कालिदासस्य प्रतीयमानातिरिक्तार्थोपनिबन्धनसामर्थ्यम् -**

कालिदासः काव्येषु प्रतीयमानार्थातिरिक्तं वाच्यार्थं सुसमीक्ष्य

आलोकार्थी यथा दीपशिखायां यत्नवान् जनः।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः॥ (id. I. 9)

इत्येतद्ध्वनिकारवचनानुगुणतया प्रतीयमानार्थोपायत्वेन योजयति। वाच्यार्थपरिपोषाय कालिदासः काव्येषु पदे पदे

बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः॥ (अ. I. 2 cd)

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्॥ (कु. II. 55 cd)

कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु॥ (मे. I. 5d)

प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः॥ (र. I. 79 cd)

इत्येवमादीन् त्रिकालाबाधितार्थान् सूक्तिविशेषान् समावेशयति; उपमादीन् वाच्यालंकाराश्च यथाप्रदेशं विनिवेशयति।

कालिदासः काव्येषु उपमालंकारसंयोजने महीयते। वर्णनीयानां पदार्थानां देशकालव्यक्तिविशेषानुरूपाणि उपमानान्युपस्थापयतः कालिदासस्य उपमालंकारः काव्यरसिकैः 'उपमा कालिदासस्ये'ति भृशं प्रशंस्यते, कालिदासश्च 'दीपशिखाकालिदासः' इति प्रथते। तथा च उपमायाः कालिदासस्य चास्ति साधारणो भूषणभूष्यभावः। कालिदासस्य उपमात्र दिङ्मात्रमुदाह्रियते-

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥ (अ. I. 30)

तां हंसमालाः शरदीव गङ्गां महौषधिं नक्तमिवात्मभासः।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः॥ (कु. I. 30)

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ॥ (र. XII. 5)

शास्त्रप्रसिद्धान् लोकप्रसिद्धांश्च तत्त्वविशेषान् काव्येषूपवर्णयन् कालिदासः कविकुले महीयते। 'वनौकसोऽपि सन्तो लौकिकज्ञा वयम्' (अ. IV. 16 (पं.2) इत्युक्तवतः काश्यपस्य मुखात् कालिदासेन निःसारिता गृहिणीधर्माः

राजधर्माश्च सहृदयैः सशिरःकम्पं प्रशंस्यन्ते । कुमारसंभवे स्वयंभूस्तोत्रे अन्यत्र च यथायोगं दार्शनिकसिद्धान्तानुपस्थापयति कालिदासः। काव्यान्तरेष्वप्येवमेव। तथा च दार्शनिकतत्त्वविद् वर्तते कालिदासः।

तपोवनादिवर्णनप्रसङ्गे 'मानवानां तरुगुल्मादीनां प्राकृतिकपदार्थानां च वर्तते घनीयान् संबन्ध' इति सनिदर्शनं स्वकाव्येषूपवर्णयन् कालिदासः अद्यतनवन्यमृगसंरक्षणादिकार्यक्रमविशेषाणामुपदेशक इव भासते। तथा च कालिदासः अनितरसाधारणमार्गेण सहृदयहृदयावर्जकानि काव्यानि विलिख्य अन्येभ्यः संस्कृतकविभ्यो महीयानिति परिगण्यते, कालिदासकृतयश्च सर्वथा भारतीयसंस्कृतवाङ्मयस्य, भारतीयानां, भारतस्य चानल्पाय श्रेयसे कल्पन्ते। प्रसङ्गेऽस्मिन् कालिदासकृतीरधिकृत्य दार्शनिकाग्रेसराणां भूतपूर्वभारतराष्ट्रपतीनां कीर्तिशेषाणां डा. सर्वेपल्लिराधाकृष्णन् महाभागानाम्

Kalidasas works perserve for us moments of beatuy, incidents of courage, acts of sacrifice, and flecting moods of human heart. [General Introduction - Meghaduta. P. 27 - Ed. S. K. DE)

इत्येतानि प्रशंसावाक्यानि स्मृतिपथमुपनेयानि सहृदयानाम्।

## ८. उपसंहारः-

तदिदमत्रोपसंह्रियते यत् कालिदासः सन्मार्गालोकनपराणि काव्यमीमांसकप्रशंसितार्थप्रतिपादकानि (वसन्तादिषड्ऋतुवर्णनपरं ऋतुसंहारमन्तरेण) प्रथितानि कुमारसंभव - मेघदूत - रघुवंशसंज्ञकानि श्रव्यकाव्यानि, मालविकाग्निमित्र- विक्रमोर्वशीय - अभिज्ञानशाकुन्तलसंज्ञकानि दृश्यकाव्यनि चानितरसाधारणप्रतिभाबलेन विलिख्य तेषु काव्येषु वाच्यवाचकव्यङ्ग्यव्यञ्जकानि स्थालीपुलाकन्यायेनात्र प्रदर्शितेन क्रमेण सम्यक् प्रयुज्य कविकाव्यमूल्याङ्कननिदानं रसवस्त्वलंकारभेदभिन्नं काव्यात्मत्वेन काव्यमीमांसकाभ्युपगतं प्रतीयमानं यथायोगं समायोज्य महाकविपदमधिष्ठाय संस्कृतवाङ्मयस्य गौरवं प्रतिष्ठाप्य संस्कृतकविकुलाग्रणीर्विराजते । महाकविकालिदासस्य प्रतिभाविशेषः काव्यवैशिष्ट्यं चात्र अरुन्धतीदर्शनन्यायेनैव प्रतिपादितं न विस्तरेण यथाप्रतिज्ञमित्यलमतिप्रसङ्गेन।

स्फुरत्प्रतीयमानार्थैरनल्पैः काव्यसंगतैः।
पद्यरत्नैरिह ख्यातः कालिदासो महाकविः ॥

इति शम्॥

# विक्रमोर्वशीये कश्चिद्विमर्शः

प्रो. बटुकनाथ शास्त्री खिस्ते

कविकुलगुरोः कालिदासस्य तिसृषु नाट्यरचनासु विक्रमोर्वशीयं नाम त्रोटकमन्यतममिति विदितं विदुषाम्। तत्र नाट्योपयुक्तेषु उपरूपकेषु त्रोटकं परिगण्यते। यद्यपि संस्कृतवाङ्मये न भूयसां त्रोटकानामुपलब्धिः तथापि कालिदासस्यैतया रचनया त्रोटकनिर्मितिरपि लब्धास्पदा समुत्कर्षं च भजते।

साहित्यपदर्पणे ''स्तम्भितरम्भं'' नाम अन्यदपि त्रोटकमुल्लिखितं दृश्यते, परं नाद्ययावदिदं दृष्टिगोचरतामयासीत्। 'लक्ष्यानुसारेण लक्षणानि प्रणीयन्ते इति नियममनुसरद्भिः प्राचीनैरपि तथाविधविषयवस्तुसङ्ग्राहकाणि लक्षणानि व्यरच्यन्त। तथा हि त्रोटकलक्षणं साहित्यदर्पणे -

''सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।
त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम्॥''

इति। प्रत्यङ्कसविदूषकत्वादेव शृङ्गारोऽङ्गीति दर्पणकारोक्तिः। परं विचार्यमाणे प्रकृते त्रोटके शृङ्गारवीरयो रसयोः समानभावेन प्रसरः कविना कल्पितः सहृदयैरनुभूयते। मन्ये केवलशृङ्गारप्राधान्ये तत्र लोकोपदेशकारित्वं न स्यादिति कवेरुभयत्र संरम्भः।

अत्र कथानकस्य किमपि वैशिष्ट्यं जागर्ति। श्रुतेरेव सन्दर्भात् महाकविना वस्तु परिगृहीतम्। प्राञ्चः कवयो नानाशास्त्रेभ्यः काव्यवस्तूनि गृह्णन्ति स्मेति राजशेखरेण काव्यमीमांसायां प्रादर्शि। तत्रापि श्रुत्यर्थग्रहणे कवेः प्रवृत्तिः प्रशस्यैव। शतपथ ब्राह्मणस्य वाक्यमिदं - ''उर्वशी ह्यप्सराः पुरूरवसमैडं चकमे'' इति। इदमेव प्रतीकमुपादाय पुरस्तात् केनापि कविना स्वरचनायां निबद्धं यथा-

''चन्द्राद् बुधः समभवद्भगवान्नरेन्द्र
माद्यं पुरूरवसमैलमसावसूत।

तं चाप्सराः स्मरवती चकमे किमन्य
दत्रोर्वशी स्मितवशीकृतशक्रचेताः॥

''इति॥ काव्यार्थ योनयः श्रुतिस्मृत्याद्याः द्वादशेति प्राञ्चः। राजशेखरस्तु कंश्चन ''उचितसंयोगदिविषयान्'' संयोज्य षोडसंख्यामभिधत्ते।

श्रुतिभ्यः कवीनामर्थवचनं परम्परातः प्रवृत्तमस्तीति तत्र वचनमिदम् -

''नमोऽस्तु तस्यै श्रुतये यां दुहन्ति पदे पदे।
ऋषयः शास्त्रकाराश्च कवयश्च यथामति॥''

इदमेकं प्रथमं वैशिष्ट्यं यत् श्रौतसन्दर्भमूलं नाटकीयं कथावस्तु कविना प्रस्तूयते। अत्र दिव्यमानुषयोः सङ्गमेन कथावस्तु दिव्यमानुषमिति शक्यते वक्तुम्।

कालिदासस्य सर्वाण्यपि पात्राणि उदात्तचरितानि भवन्ति। तदनुसारमत्रापि नायकस्य नायिकायाश्च स्वरूपं समुज्वलमभिनन्दनीयं च वर्तते । रघुवंशमहाकाव्ये सूर्यवंशीयानां ऐक्ष्वाकाणां वर्णनं सम्पाद्य ततः परं सोमवंशीयानामपि करणीयमिति धिया तेन कविना संमवंश्यानामेकः पुरूरवाः पुरस्कृत इति प्रतीयते । त्रोटकस्यान्तिमे भागे वैतालिक द्वारा शुभाशंसन प्रसङ्गे श्लोकोऽयमुदीर्यते

"अमरमुनिरिवात्रिर्ब्रह्मणोऽत्रेरि वेन्दुः
बुध इव शिशिरांशो र्बोधनस्येव देवः ।
भव पितुरनुरूपस्त्वं गुणैर्लोककान्तै
रतिशयिनि समस्ता वंश एवाशिषस्ते ॥"

इयं च शुभप्रशस्तिः पुरूरवसः पुत्रस्य आयुषो विषये ।

किञ्च तृतीयाङ्के राज्ञ्या क्रियमाणे रोहिणीचन्द्रपूजनप्रसङ्गे राजा विशेषतो वर्णयति चन्द्रमसं यथा-

"रविमावसते सतां क्रियायै
सुधया तर्पयते सुरान् पितृंश्च ।
तमसां निशि मूर्छतां निहन्त्रे ।
हरचूडानिहितात्मने नमस्ते ॥

अत्र महाकविः भङ्गयन्तरेण राज्ञो महाकुल प्रसूतत्वं ततश्चोत्तमनायकत्वं प्रतिष्ठापयति । अयं च राजा सर्वदा महेन्द्रस्य साहाय्यं कुर्वाणो देवलोकेष्वपि अबाधितगतिर्निरूपितः । तादृशस्य च वीरस्य दिव्याङ्गनासम्बन्धोऽपि नानुचित इति कवेराशयः । अयं च पुरुरवा धीरोदात्त लक्षणोपेतो धार्मिकः परमोदारश्च दर्शितः कविना ।

एवं नायिका पक्षेऽपि किमपि विशिष्टं विचारणीयं वर्तते । साहित्यशास्त्रे नायिका तावत् त्रिविधेति प्रसिद्धिर्यथा - स्वीया परकीया सामान्या चेति । तत्राद्यं भेदद्वयं विहाय तृतीयैव नायिका देवाङ्गना अप्सरःकुलसम्भूता ऊर्वशी परिगृहीताऽस्मिन् रूपके । सामान्या इति नामनिर्वचने सर्वभोग्येत्यर्थ आपाततः प्रतीयते एव । तद्दोषपरिहाराय प्रथमत एव सावधानः कविस्तस्या अलौकिकमुत्कर्षं साधयितुं दैत्यकृतापहरणप्रसङ्गे सूत्रधारद्वारा पद्यमवतारयति-

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री ।
कैलासनाथमुपसृत्य निवर्तमाना ।
वन्दीकृता विबुधशत्रुभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ॥

नरनारायणावतारस्य भगवत ऊरुदेशादुत्पन्नेति तस्याः श्लाध्यजन्मत्वमुपपाद्य सर्वभोग्यत्वदोषं कविः परिमार्जयति।

एवमग्रेऽपि गन्धर्वराजस्य चित्ररथस्य वचनेऽपि "पुरा नारायणेनेयमतिसृष्टा मरुत्वते ।
दैत्यहस्तादपाच्छिद्य सुहृदा सम्प्रति त्वया ॥"

इति पुनरपि सूचयता कविना 'द्विर्बद्धं सुबद्धं भवतीति न्यायेन नायिकाया उत्कर्षः साध्यते । ततश्च साहित्य शास्त्रकारैः विचार्यमाणः प्रकृतिविपर्ययदोषोऽप्यत्र स्थानं न लभते । किञ्च दिव्याङ्गनारूपत्वात्तस्याः

पुरुषान्तरसम्बन्धेऽपि न चरित्रभङ्गदोष उद्भावनीय इत्याशयः । सा च महेन्द्राददरमवाप्यैव पुरूरवसः सान्निध्यमुपैतीति तस्या विनीतात्वमप्युपपादितं कविना ।

कथाश्रयभूतयोः प्रधानपात्रयोः स्वरूपसम्पादनं प्रथमतः कवेः कौशलं तच्च सम्यगत्र साधितमाभाति । एवं नारीचरित्रचित्रणे कुशलोऽयं कविः विवाहिताया राज्ञो देव्या अपि परमोदात्तं परिचयमुपपादयति । तथा हि सा चन्द्रोदय पूजनप्रसङ्गे सुस्पुष्टमाख्याति-

''एषाऽहं देवतामिथुनं रोहिणीमृगलाच्छनम् साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि - 'अद्यप्रभृति यां स्त्रियं आर्यपुत्रः प्रार्थयते या च आर्यपुत्रस्य समागमप्रणयिनी तथा सह मया प्रीतिबन्धेन वर्तितव्यम्' इति ।

पश्यत - कियदौदार्यं देव्या महानुभावत्वञ्च । किञ्च कविकल्पनाप्रसूतत्वादिदमलौकिकमिति न मन्तव्यम्। यतो राज्ञां बहुविवाहप्रथा चिरन्तनी राजापि देव्यामुर्वश्याञ्च समानमादरमुपदर्शयति । मलयपवन वर्णनव्याजेन तदेतद्दाक्षिण्यं स्फुटीकृतं नायकेन यथा -

निषिञ्चन् माधवीं लक्ष्मीं लतां कौन्तीं च लासयन् । स्नेहदाक्षिण्ययोर्योगात् कामीव प्रतिभाति मे ।। पुरूरवसा कृतं देव्याः स्वरूपवर्णनमपि स्वाभाविकमादरद्योतकं च यथा-

सितांशुका मङ्गलमात्रभूषणा
पवित्रदूर्वाङ्कुरलाञ्छितालका ।
व्रतापदेशोज्झितगर्ववृत्तिना ।
मयि प्रसन्ना वपुषैव लक्ष्यते ।।

एतेन नायकस्य स्वाभाविकं चरितं विशेषतः कविना समुपस्थाप्यते ।

कुमारवनं प्रविष्टाया उर्वश्या लतात्वेन रूपपरिवर्तनं तस्या अन्वेषणे राज्ञो व्याकुलता, पदे पदे लतापादप पशुपक्षिणां सन्दर्भे तदन्वेषणप्रयासश्च भगवतो रामस्य सीताविरह प्रसङ्गं स्मारयति । तथा हि रघुवंशे -

इमां तटाशोकलतां च तन्वीं
स्तनाभिरामस्तबकावनम्राम् ।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः
सौमित्रिणा साश्रुरहं निषिद्धः ।। इत्यादि ।।

कालिदासकृतिषु रामायणस्य प्रभाव उपजीव्यतया वा सर्वथा सङ्गच्छते । परं तमेव अर्थं नूतनया शैल्या प्रस्तौतीत विशेषः ।

रामायणे हनुमत्प्रदत्ता मुद्रिकैव जानक्या विश्वास मजनयत् । तथैव शाकुन्तलेऽपि राज्ञा प्रदत्ता मुद्रिकैव नायकयोः सङ्गमे साहाय्यमाचरति । विक्रमोर्वशीयेऽपि राजपुत्रस्य बाणेन विहगादाक्षिप्तः सङ्गमनीयमणिः । तथा च राज्ञ उक्तिः-

''रत्नमिति न मे तस्मिन् मणौ प्रियत्वं विहङ्गमाक्षिप्ते । प्रियया तेनास्ति सखे सङ्गमनीयेन सङ्गमितः ।। उर्वश्या दिव्यानुभवः पुत्रस्य शीघ्रमेव बुद्धिः कार्यक्षमता च दर्शितेति न विरुध्यते तच्च विदूषकेण समाधीयते यथा-

'मा भवान् मानुषीधर्मं दिव्यासु सम्भाषयतु । प्रभावनिगूढानि तासां चरितानि' इति । पुत्रदर्शनान्त एव उर्वश्याः शाप आसीत् । ततश्च सा दिव्यलोकं गतेति मूलकथा, परं कविना सुखान्तमेव संविधानकं दर्शयितुं पुनरपि सा राज्ञः सविधे स्थितिमाप्तुं योग्येति नारदोक्त्या समर्थितम् । यथा-

'इयं च उर्वशी यावदायुस्तव सहधर्मचारिणी भवतु'

इत्यस्मिन् रूपके महाकविना उदात्त- चरितानि पात्राणि प्रतिपादयता शृङ्गारवीरयो रसयोः सामञ्जस्यमपि प्रादर्शि।

चतुर्थाङ्कके राज्ञो विरहावस्थायां नानविधानि चर्चरी-खुरक खण्डिकाप्रभृतीनि नाट्यगीतानि प्रदर्शितानि यानि नान्यत्रोपलभ्यन्ते ।

केषञ्चिन्मते प्रक्षिप्तोऽयमंशः । परमहं मन्ये नाट्याङ्गप्रदर्शनं कवेरभीष्टमेवासीत् ।

महाकविर्न केवलं वैभवमात्रं प्रशंसति किन्तु श्रीसरस्वत्योः सहभावं भावयते । तच्च भरतवाक्येन स्फुटीक्रियते।

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् । सङ्गतं श्रीसरस्वत्योः भूतयेऽस्तु सतां सदा ।।

एवमत्र संक्षेपेण संविधानकमात्रे काचन विचारदृष्टिरुपन्यस्ता । अत्र प्रबन्धे प्रतिपदं गुणालङ्कारध्वनि प्रभृतीनां विवेचनाय स्वतन्त्रं निबन्धान्तरमपेक्ष्यते । इह तु एतावन्मात्रं विवेचितम् । इति ।।

# ध्वनिविषये महिमभट्टमतविमर्शः

प्रो. वैकुण्ठपुरं विश्वनाथशास्त्री

काव्यवाङ्मये आलंकारिकसंमते मते अर्थास्त्रिविधाः - वाच्यः, लक्ष्यः, व्यङ्ग्यश्चेति। अर्थप्रतिपादकाः शब्दा अपि त्रिविधाः - वाचकः, लाक्षणिकः, व्यञ्जकश्चेति। शब्दार्थयोः संबन्धोऽपि त्रिविधः - शक्तिः, लक्षणा, व्यञ्जना चेति। शक्तिर्नाम - अस्मात्पदादयमर्थो बोद्धव्य इतीच्छारूपः संकेतः। पदेन शक्तिज्ञानरूपसहकारवशेन प्रतीयमानोऽर्थः वाच्यार्थः। यथा -

जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ

इत्यत्र प्रपञ्चकारणीभूतपार्वतीपरमेश्वरकर्मकनमस्कारानुकूलव्यापाराश्रयः कविरित्यर्थो वाच्यार्थः।

लक्षणा नाम शक्य संबन्धः, अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा, रूढिप्रयोजनयोरन्यतरञ्च लक्षणाबीजम्। यथा-

धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः॥

महर्षेः व्यासस्य पद्यमिदम्। अत्र समित्पदशक्यार्थस्य काष्ठस्य श्रीपदार्थे संपदि अन्वयासंभवात् समित्पदं लक्षणयोद्दीपनक्षमा इत्यर्थं बोधयति। तथा च धृत्यादयः सप्त गुणाः पुरुषस्य संपदुद्दीपनक्षमा इत्यर्थः।

पदेन व्यञ्जनाख्यवृत्तिज्ञानसहकारेण प्रतीयमानोऽर्थः व्यङ्ग्यार्थः, तस्य प्राधान्ये ध्वनिरिति व्यवहारः। ध्वनेर्लक्षणं श्रीमदानन्दवर्धनाचार्यैः ध्वन्यालोकग्रन्थे एवमुक्तम्-

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥

इति। उपसर्जनीकृतस्वार्थाविति विशेषणस्य अर्थशब्दयोर्विभज्य अन्वयः। उपसर्जनीकृतस्वार्थावित्यत्र स्वश्च अर्थश्च स्वार्थौ। उपसर्जनीकृतौ स्वार्थौ याभ्यां तौ इति विग्रहः। स्वपदं 'स्वो ज्ञातावात्मनि'' इति कोशादात्मपरम्। तथा च' उपसर्जनीकृतस्वः गुणीकृतात्मा अर्थः, उपसर्जनीकृतार्थः गुणीभूताभिधेयः शब्दश्च तमर्थं चमत्कारजनकमर्थं यत्र काव्ये व्यङ्क्तः द्योतयतः स काव्यविशेषो ध्वनिरित्यर्थः।

एवं च शब्दार्थावप्रधानीभूतौ सन्तौ, स्वापेक्षया प्रधानं चमत्कारजनकमर्थान्तरं यत्र द्योतयतः तत्काव्यं ध्वनिरित्यर्थः।

अत्र कारिकायां कश्चनाक्षेपः परिस्फुरति - तथा हि - अर्थः शब्दो वा इति वाशब्देन शब्दार्थयोर्विकल्पः प्रतीयते। व्यङ्क्त इति द्विवचनेन तयोः साहित्यं प्रतीयते इति परस्परविरोध इति। अस्याक्षेपस्य समाधानं लोचने श्रीमदभिनवगुप्तपादैरेवमुक्तम् - अविवक्षितवाच्यध्वनौ 'सुवर्णपुष्पां पृथिवी' मित्यादौ 'सुवर्णपुष्पां' इति शब्द एव

व्यञ्जकस्तथापि अर्थस्यापि सहकारिता भवत्येव। अन्यथा अज्ञातार्थोऽपि शब्दो व्यञ्जकः स्यात्, तथा 'शिखरिणि क्वनु नाम' इत्यादिविवक्षितान्यपरवाच्यध्वनौ अर्थस्य व्यञ्जकत्वे शब्दस्यापि सहकारित्वं भवत्येव। विशिष्टशब्दप्रतिपाद्यतां विना, अर्थस्याव्यञ्जकत्वात् इति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननव्यापार इति द्विवचनोपपत्तिः। अर्थः शब्दो वेति विकल्पाभिधानं प्राधान्याभिप्रायेणेति।

अस्यां कारिकायां काव्यविशेषो ध्वनिरित्युक्तम् लोचने तु वाचकः शब्दः, वाच्योऽर्थः, व्यङ्ग्यं व्यञ्जनाव्यापारः काव्यमिति पञ्चकं ध्वनिः, ध्वनतीति ध्वनिरिति व्युत्पत्त्या शब्दार्थयोः, ध्वन्यत इति ध्वनिरिति व्युत्पत्त्या व्यङ्ग्यस्य, ध्वननं ध्वनिरिति व्युत्पत्त्या व्यञ्जनाव्यापारस्य एतच्चतुष्टयसमुदायरूपत्वेन काव्यस्य च ध्वनिरिति व्यवहारः, कारिकया तु प्राधान्येन काव्यरूपः समुदाय एव मुख्यतया ध्वनिरिति प्रतिपादितमित्युक्तम्।

अत्र लक्षणे सूरिभिः कथित इति भागो न लक्षणान्तर्गतः किं तु ध्वनिव्यवहारस्य प्रामाणिकमूलप्रदर्शनार्थः। तदुक्तं वैयाकरणप्रशंसासहितं वृत्तिग्रन्थे - 'सूरिभिः कथित इति विद्वदुपज्ञेयमुक्तिः। न तु यथा कथंचित् प्रवृत्तेति प्रतिपाद्यते, प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानां ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति, तथैवान्यैस्तन्मतानुसारिभिः काव्यतत्त्वार्थदर्शिभिः सूरिभिः काव्यमितिव्यपदेश्यः व्यञ्जकत्वसाम्यात् ध्वनिरित्युक्तः' इति। अस्याभिप्रायः - देवदत्त इत्यादौ आशुविनाशिनां क्रमिकाणां वर्णानां मेलनासंभवात् पदार्थप्रतीतिर्वर्णेभ्यो न संभवतीति, पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितान्तिमवर्णानुभवेन स्फोटो व्यज्यते, स्फोटेनार्थप्रतीतिरिति एवं च स्फोटव्यञ्जकानां वर्णानां वैयाकरणैर्ध्वनिरिति व्यवहारात् काव्यतत्त्वविद्भिः चमत्कारजनकार्थव्यञ्जकस्य शब्दार्थयुगलस्य काव्यस्य व्यञ्जकत्वसाम्यात् ध्वनिरिति व्यवहारः कृतः। ध्वनिकाव्यस्योदाहारणम्-

भम धम्मिअ वीसत्थो....
भ्रमधार्मिक विश्रब्धः स शुनकोऽद्यमारितस्तेन।
गोदानदी कच्छकुञ्जवासिना दृप्तसिंहेन॥

हालकविकृतायां गाथासप्तशत्यां पद्यमिदम्। स्वसंकेतस्थानभूते गोदाकूलनिकुञ्जे पुष्पावचयार्थं यान्तमभिसारविघ्नकारिणं कंचन धार्मिकं भीषयितुं कस्याश्चिदभिसारिण्या उक्तिरियम्। अत्र मद्गृहसमीपे भ्रम इति भ्रमणं वाच्यार्थः। गोदातीरवर्तिसिंहेन अत्र तव त्रासकारी शुनको हत इत्यनेन गोदातीरे सिंहसत्वात् तत्र मा भ्रमेति वस्तुध्वनिः इत्यानन्दवर्धनाचार्याः।

### ध्वनिविषये व्यक्तिविवेककाराणां महिमभट्टानां मतम्।

अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्'इति प्रतिज्ञाय सर्वेषां ध्वनीनामनुमानेऽन्तर्भावं साधयन्ति व्यक्तिविवेककारा महिमभट्टाः। तेषां मतमित्थम् -

सर्व एव शब्दजन्यो व्यवहारः प्रायेण साध्यसाधनभावगर्भतया, अनुमानरूपोऽभ्युपगन्तव्यः। साध्यमनुमेयं साधनमनुमापको हेतुरित्यर्थः॥ तथा हि - शाब्दव्यवहारः परप्रवृत्तिनिवृत्तिफलकः। युक्तिमनवगच्छन् कश्चिद्विपश्चित् नहि प्रवर्तते निवर्तते वा। युक्तिरनुमानरूपैव॥ सः साध्यसाधनभावः शब्दः आर्थश्चेति द्विविधः॥

शाब्दो यथा - प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः ॥

रघुवंशे दिलीपवर्णनमिदं पद्यम्। अत्र स इति तत्पदार्थः दिलीपः पक्षः, प्रजापितृत्वं साध्यम्। अनुमानप्रयोगस्तु दिलीपः प्रजानां पिता, विनयाधानात् रक्षणात्, भरणात्।रक्षणं भयहेतुभ्यः त्राणम्। भरणमन्नवस्त्रादिना पोषणम्। अत्र हेतुवाचकपदेभ्यः पञ्चमीविभक्तिसत्वेन साधनभावः शाब्दः।

आर्थो यथा - द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरस्तु मृष्यते।
न महानपि भूतिमिच्छता फलसंपत्प्रवणः परिक्षयः॥

किरातार्जुनीये युधिष्ठिरं प्रति भीमसेनस्योक्तिरियम्। शत्रूणामभ्युदयपरिक्षय यो विंषये नीतिरत्र प्रदर्श्यते। वर्तमानकालिकशत्रूणामभ्युदयः महानपि यदि अस्वंततर अतिशयेनारमणीयपरिणामवान् तदा मर्षणीयः उपेक्षणीयः, तथा वर्तमानकालिकः परिक्षयः यदि उत्तरत्र फलसंपदुन्मुखः तदा न मर्षणीयः, परिक्षयकालेऽपि शत्रुः निग्राह्य एव इत्यर्थः। अत्रानुमानप्रयोगः - शत्रूणामुदयः उपेक्षणीयः, अतिशयेनारमणीयपरिणामत्वात्, तथा शत्रूणां परिक्षयः, नोपेक्षणीयः, फलसंपत्प्रवणत्वात् इति। अत्र हेतुपदोत्तरं पञ्चमीविभक्तेरभावात् साध्यसाधन भावः आर्थः - इदं हेतुगर्भविशेषणमिति व्यवह्रियते।

रसविषयकानुमानं यथा -

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान'' ॥

कुमारसंभवे सप्तमसर्गे पार्वत्याः विवाहात्पूर्वमलंकारविधानवर्णनमिदस्। काचित् सखी पार्वत्याश्चरणावलक्तेन रञ्जयित्वा परिहासपूर्वकमाशीर्वादं चकार। कीदृश आशीर्वाद इति चेत् अनेन पादेन पत्युः शिरश्चन्द्रकलां स्पृशेति- 'अस्याभिप्रायः इत्थम्' प्रणयकुपितां त्वामनुनेतुं तव पत्युः शिवस्य तव पादपतने सति तस्य शिरसि स्थितां चन्द्रकलामनेन पादेन स्पृशेति। एवमुक्ता पार्वती स्वकरस्थितेन माल्येन तां सखीं निर्वचनं जघान। अत्र विशिष्टाशीर्वचनं विभावः, निर्वचनहननमनुभावः, ताभ्यां पार्वत्यां व्यभिचारिभाव संपदनुमीयते। अनुमान प्रयोगः- पार्वती कौतुकौत्सुक्यप्रहर्षलज्जादिव्यभिचारिभाववती, विशिष्टाशीर्वादश्रवणसहितनिर्वचनमाल्यहननत्वात् इति। एवमनुमितैः व्यभिचारिभावैः पुनः स्थयिभावस्य रतेरनुमानं-यथा पार्वतीपरमेश्वरविषयकरतिमती कौतुकादिव्यभिचारिभाववत्वात् इति। अत इदमनुमितानुमानमित्युच्यते।

वाच्यप्रतीयमानयोरानन्दवर्धनाचार्यसंमतः, व्यङ्ग्यव्यञ्जकभावः मुख्यवृत्त्या नैव संभवति व्यक्तिलक्षण-स्यानुपपत्तेः। तथा हि - सत असत एव वार्थस्याप्रकाशमानस्य संबन्धस्मरणानपेक्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरभिव्यक्तिरिति तल्लक्षणमाचक्षते तत्र सतोऽभिव्यक्तिस्त्रिविधा कारणात्मनि कार्यस्य शक्तिरूपेणावस्थानात् तिरोभूतस्येन्द्रियगोचरत्वापत्तिलक्षणाविर्भावः एका। यथा - कारणात्मनि क्षीरादौ शक्तिरूपेणावस्थितस्य दध्यादे रिन्द्रियगोचरत्वापत्तिः।

अविर्भूतस्य कस्माच्चित्प्रतिबन्धादप्रकाशमानस्य प्रकाशकेन सहैव प्रकाशो द्वितीया। यथा - पूर्वसिद्धस्यैव घटादेरन्धकारेणा - प्रकाशमानस्य दीपेन सहैव प्रकाशः। यथोक्तं -

स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्।

अनुभूतपूर्वस्य, संस्कारात्मानान्तर्विपरिवर्तिनः कस्माच्चिदव्यभिचारिणोऽर्थान्तरात्तत्प्रतिपादकाद्वा संस्कार प्रबोधमात्रं तृतीया। यथा धूमादग्नेः। यथा वा घटादिशब्दात् घटादेः।

व्यङ्ग्यार्थे प्रथमं लक्षणं तावन्नसंभवति। दध्यादेरिव सर्वस्यापि व्यङ्ग्मयस्यार्थस्येन्द्रियविषयापत्तिप्रसंगात्। द्वितीयमपि न संभवति दीपेन घटादेरिव, अयमीदृशः इति इदं तथा प्रतीतेरभावात्। तृतीयस्य प्रकारस्य लक्षणं तु अनुमानस्यैव संगच्छते। न व्यक्तेः। तदुक्तं - त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमानमिति। अस्यार्थः-त्रीणिरूपाणि यस्य तत्रिरूपं, तादृशाल्लिंगाद्धेतोः बलात् - अनुमेये ज्ञानं, साध्य विषयकं ज्ञानं यत्तदनुमानमिति ॥ अत्रानुमान पदस्यानुमितिरित्यर्थः, रूपक्षयं च, पक्षसत्वं सपक्षसत्वं, विपक्षव्यावृत्तत्वं च, पक्षो नाम सन्दिग्धसाध्यवान्। यथा वन्हौ साध्ये पर्वतः, तत्र धूमस्य हेतोः पर्वतवृत्तित्वं वर्तते। सपक्षो नाम निश्चितसाध्यवान् यथा वह्नौ साध्ये महानसम्। तत्र धूमस्य वृत्तित्वं वर्तते। विपक्षो नाम निश्चितसाध्याभाववान्। यथा वह्नौ साध्ये ह्रदः तत्र धूमो नास्ति। अतो यत्र यत्र धूमस्तत्र तत्र वह्निरितिव्याप्तिबलात् पर्वतो वह्निमान् धूमादित्यनुमितिर्भवति।

एवं वाच्यप्रतीयमानयोर्व्यङ्ग्यव्यञ्जकभावासंभवात् लिङ्गलिङ्गिभावसंभवाच्च सर्वस्यैव ध्वनेरनुमानान्तर्भावः संभवति। केवलं नयाभिज्ञतया तत्र लक्षयत्यविचक्षणो लोकः।

अत्राक्षेपः - ननु यदि सर्वः शब्दजन्यव्यवहारः साध्यसाधनभावगर्भ इत्यङ्गीक्रियते, तदा तत्र साध्यसाधनयोर्नियमेन यथोपादानं, तथा दृष्टान्तस्याप्युपादानं स्यात्। दृष्टान्तस्यापि व्याप्तिसाधनप्रमाणोदाहरणवाक्यघटकतया अवश्यमपेक्षणीयत्वात् इति चेत् न, काव्ये प्रसिद्धसामर्थ्यस्य साधनस्योपादानादेव दृष्टान्तापेक्षायाः प्रतिक्षेपात्। तदुक्तं प्राचीनैः - तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः। ख्याप्येते विदुषां वाच्यो हेतुरेवच केवलः - इति। एवं च काव्ये व्यङ्ग्यव्यञ्जकभावस्यासंभवात्। 'यत्रार्थः शब्दो वा' इत्यादि ध्वनिलक्षणे दोषदुष्टपदव्युदासेन, परिशुद्धो ध्वनिलक्षणवाक्यस्यायमर्थोऽवतिष्ठते।

'वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।
संबन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥ इति।

एवं च ध्वन्युदाहरणत्वेन प्रसिद्धे ध्वन्यालोकोक्ते- 'भ्रमधार्मिक विस्रब्धः' इति पद्येऽपि गोदावरीतीरे मा भ्रम इत्यर्थप्रतीतिरनुमितिरूपैव। न व्यङ्ग्यरूपा इति व्यक्तिविवेककारणां मतम्। तेषामयमाशयः - अत्र द्वावर्थौ वाच्यप्रतीयमानौ विधिनिषेधात्मकौ क्रमेण प्रतीतिपथमवतरतः, तत्र मद्गृहसमीपे भ्रम इति भ्रमणविधिरूपो वाच्यार्थः साध्यः, तस्य साधनं गोदावरीतीरवृत्तिसिंहेन शुनकमारणम्। तथा च शुनकनिवृत्तिहेतुकेन गृहसमीपविहितभ्रमणेन, एवं व्याप्तिः सिद्धा भवति। यद्यद्भीरुभ्रमणं तत्तद्भयकारणाभावज्ञानपूर्वकम् इति। गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेनेत्यनेन श्वमारणकारणदृप्तसिंहस्य भयकारणस्य गोदावरी तीरे उपलब्धिरिति व्यापकविरूद्धोपलब्धिः। भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः व्यापकविरुद्धोपलब्धिः भयकारणसिंहोपलब्धिः। तथाच व्यापकविरुद्धसिंहोपलब्ध्या, व्यापकस्य भयकारणाभावज्ञानस्य निवृत्तिः। व्यापकस्य निवृत्तौ व्यापकाभावात् व्याप्याभाव इति नियमेन व्याप्यस्य भीरुभ्रमणस्य निवृत्तिः यथा 'नात्र तुषारस्पर्शो वह्नेः' इत्यत्र

तुषारस्पर्शाभावोनुमेय एव न व्यङ्ग्यः एवं प्रकृतेऽपि । तथा चानुमानप्रयोगः- गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्वादिति । एवं च 'भ्रमधार्मिक विस्रब्ध' इति पद्ये भ्रमणनिषेधप्रतीतिरनुमितिरूपैव, न व्यङ्ग्येति व्यक्तिविवेककाराणां महिमभट्टानां मतम् ।

इदं मतं काव्यप्रकाशकारमम्मटभट्टादयः दूषयन्ति । तथा हि - पूर्वोक्तानुमानप्रयोगे हेतुः दुष्टः । व्यभिचारः, विरोधः ,असिद्धिरिति त्रयो दोषाः संभवन्ति । व्यभिचारो नाम हेतुनिष्ठसाध्याभाववद् वृत्तित्वम् । प्रकृते प्रभोर्निर्देशेन, अनुल्लंङ्घनीयाराजाज्ञारूपेण राजभृत्यः भीरुरपि भयकारणसिंहादिमद्देशे भ्रमति । एवं गुरोर्निर्देशन गुरुभक्तः शिष्यः सिंहादिमद्देशेपि भ्रमति । तथा निधिलाभलोभेनापि सिंहादि मद्देशे भ्रमति । अतो यत्र यत्र सिंहवत्वं तत्र तत्र भ्रमणायोग्यत्वमिति व्याप्तेरभावात् व्यभिचरितो हेतुः ।

किं च यदि सामान्यरुपेण भ्रमणायोग्यत्वं साध्यते तदा विरोधोऽपि दोषः । साध्याभावव्याप्तो हेतुर्विरुद्धः । धार्मिकोऽयमशुचिशुनकस्पर्शपापात् बिभ्यदपि, वीरस्वभावतया सिंहान्न बिभेति, किं तु कुतूहलेन मृगयाशीलो वीरः सिंहवद्देशं गच्छति । तथाच गोदावरीतीरं वीरभ्रमणयोग्यं सिंहवत्वात् इति हेतुना साध्याभावस्यैव साधनाद्विरुद्धसाध्याभावव्याप्तो हेतुर्विरूद्धः । एवं भयकारणसिंहादिमद्देशेपि भीरोरपि भ्रमणसमर्थनेन, यद्यद्भीरूभ्रमणं तत्तद्भीयकारणनिवृत्तिज्ञानपूर्वकमिति व्यतिरेकव्याप्तिरप्यसिद्धेति सिद्धम् ।

एवं स्वरूपासिद्धिरपि तृतीयो दोषः । स्वरूपासिद्धिर्नाम हेत्वभाववत्पक्षकत्वम् । प्रकृते गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निर्धारितः, किंतु गोदावरीकच्छकुञ्जवासिना इति नायिकावचनेन शब्दप्रमाणेनेति वक्तव्यम् । वाक्यं तु सर्वं न प्रमाणं किं तु आप्तवाक्यं शब्दः प्रमाणम् इति नियमेन आप्तवाक्यमेव प्रमाणम् । आप्तस्तु यथार्थवक्ता । प्रकृते वाक्य प्रयोक्तृनायिकायामाप्तत्वस्यानिर्धारितत्वात्तदीयं वचनं न प्रमाणम्। ननु, आप्तत्वनिर्णया भावेऽपि आप्तत्वसंशयः संभवतीति चेत् - तदा संदिग्धासिद्धर्भवति तावताप्यनुमितिर्नभवति। अनुमितिं प्रति पक्षे हेतुमत्तानिश्चयरूपपक्षधर्मतानिर्णयस्यैव कारणत्वेन पक्षधर्मतासंशयेन अनुमितेरनुत्पत्तिः । ननु एतादृशस्थले व्यक्तिवादिनां व्यङ्ग्यार्थप्रतीतिः कथमिति चेत् व्यक्तिवादिनां मते व्यङ्ग्यार्थप्रतीतिं प्रति व्याप्तिनिर्णयस्य कारणत्वं नाङ्गीक्रियते । किंतु एवंविधादर्थादेवंविधोऽर्थः संभाव्यत इति संभावनामात्रादेव वक्तृबोद्धव्यादि वैशिष्ट्यबलेन नियतार्थप्रतीतिर्भवति ।

एवं च सामाजिकानां व्यभिचारस्फूर्तिमतामपि पक्षधर्मतानिर्णये असत्यपि संभावितादप्यर्थात् व्यङ्ग्यार्थप्रतीतिरिति सिद्धम् ।

ध्वन्यालोकप्रदर्शितेषु कुत्रचित् ध्वन्युदाहरणेषु द्वितीयार्थप्रतीतिविषये महिमभट्टानां दूषणसरणिः - तथा हि-

आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥

इति कारिकया ध्वन्यालोके शब्दशक्तिमूलालंकारध्वनिः निरूपितः यस्मिन् काव्ये अलंकारः शब्देन, अभिधयानुक्तः आक्षिप्त एव शब्दसामर्थ्यात्प्रकाशते स शब्दशक्तिमूलालंकारध्वनिरित्यर्थः । उदाहरणम्

दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यन्हि संहारभाजः।
दीप्ताशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु॥

इदं मयूरकविविरचितसूर्यशतकस्थं पद्यं सूर्यस्तुतिपरम्। अत्र पद्ये पयःपदस्य जलं क्षीरमिति, संहारपदस्य, उपसंहारः एकत्र ढोकनमिति, गाव इत्यस्य किरणाः धेनवः इति च अर्थद्वयम्। अत्र सूर्यकिरणरूपार्थः प्रकृतः, धेनुरूपार्थः अप्रकृत इत्यर्थद्वयं प्रतीयते। तत्र सूर्यकिरणपक्षे समुचितसमये पूर्वमाकृष्टैः पश्चाद्वर्षाकाले विसृष्टैः पयोभिः जलैः प्रजानां दत्तानन्दाः पूर्वान्हे सर्वदिक्षु विप्रकीर्णाः दिवसावसाने, उपसंहारभाजः नानाविधदुःखकारणीभूत-संसारभयरूपसमुद्रोत्तरणे नौकारूपाः सूर्यकिरणाः पवित्राणां भवतामधिकां प्रीतिमुत्पादयन्तु इत्यर्थः।

धेनुपक्षे तु दोहनकाले विसृष्टैः क्षीरैः दत्तानन्दाः प्रातः काले तृणादिभक्षणाय नानादिक्षुगताः सायंकाले स्वस्वनिलयमागताः सर्वदेवतारूपत्वेन पूज्याः संसारदुःखनिवारका धेनवो भवतां प्रीतिमुत्पदयन्तु इत्यर्थः।

अत्रानन्दवर्धनाचार्यैः - 'अस्मिन्नुदाहरणे शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्या-संबद्धार्थाभिधायित्वं मा प्रसांक्षीदित्यप्राकरणिकप्राकारणीकार्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यात्' इत्युक्तम्। अत्र सामर्थ्यादितिपदस्य ध्वननव्यापारादित्यर्थः लोचनकारैरुक्तः। अस्यायमभिप्रायः 'दत्तानन्द' इति पद्ये सूर्यवर्णनपरे गवादिपदैः श्लेषबलेनाप्रकृतधेनुसम्बद्धार्थः प्रतीयते। तत्र प्रकृताप्रकृतार्थयोः संबन्धाभावे श्लोकस्यासंबद्धार्थाभिधायित्वरूपदोषो भवति। अतः सूर्यकिरणा धेनव इवेति प्रकृताप्रकृतयोरुपमानोपमेयभावः कल्पनीयः। श्लोके इवशब्दस्याभावात् व्यञ्जनयैव सादृश्यं प्रतीयते इत्यङ्गीकरणीयम्। अतोऽत्रोपमालंकारध्वनिः गवादिशब्दानां परिवर्तनासहत्वात् शब्दशक्तिमूलालंकारध्वनि व्यपदेशः इति।

**अस्मिन्नुदाहरणे महिमभट्टानां दूषणप्रकारः -**

अत्र गोशब्दस्याप्राकराणिकधेनुरूपार्थान्तरप्रतिभोत्पत्तौ न किञ्चिन्निबन्धनमस्ति। नानार्थको गोशब्द एव निबन्धनमिति वक्तुं न युज्यते। धेनुव्यतिरिक्ते अनभिमते व्रजादावप्यर्थान्तरे प्रतीतिजननप्रसंगात्। तस्यानेकार्थत्वाविशेषेण नियमहेतोरभावात्। ननु विशेषणजातमेव नियमहेतुर्भवति, विशेषणं यदर्थानुगुणं भवति, तत्रैव प्रतीतिमुपजनयतीति चेत् विशेषणादपि प्रकरणाद्यभावे धेन्वनुगुणार्थप्रतीतिनिर्निबन्धना आकस्मिक्येव स्यात्। धेनुरूपार्थबोधकविशेष्यवाचकगोपदमेव नियामकमिति चेत् तदा, विशेषणानां नियतार्थप्रतीत्या नियतविशेष्यप्रतीतिः, नियतविशेष्यप्रतीत्या, विशेषणानां नियतार्थबोधकत्वमित्यन्योन्याश्रयदोषप्रसंगः। ननु अवनिसलिलादिकमन्योन्यानुग्राहि मिलितं यथाङ्कुरादिं जनयति तथा विशेष्यविशेषणोभयमन्योन्यानुग्राहि मिलितमर्थान्तरप्रतिभां जनयतीति चेत्, न, यतो जडपदार्थविषय एवायंस्वाभाविको जन्यजनकभावः। न तु वाच्यवाचकभाव विषयः। तत्र प्रतिपत्तृपरामर्शापेक्षापरतन्त्रः। वाच्यार्थविषये तु वाचकः शब्द एव तत्संस्कारप्रबोधनिबन्धनम् अर्थान्तरे त्वन्यदेवापेक्षणीयम्। न पुनरेक एवोभयत्रापि हेतुः एकहेतुत्वे क्रमनियमानुपपत्तेः। अतो भिन्नहेतुत्वमवगन्तव्यम्। शब्दस्यानेकार्थतावगमात्रमूलोऽयमद्यापि कवीनाम-र्थान्तरप्रतीतिभ्रम इति व्यर्थः शब्दशक्ति परिकल्पनप्रयासः। एवं चात्रार्थान्तरप्रतीतिरेव न समस्तीति तयोरुपमानोयमेयभावप्रकल्पनं निर्मूलमेव।

उपपत्तिशून्यएवायं गतानुगतिकया अनेकार्थशब्दप्रयोगविप्रलब्धव्याख्यातृपरम्परामाप्रवर्तितः शब्दशक्तिमूलानुस्वानरूपार्थान्तरप्रतीतिपक्ष इति।

एवं ध्वन्यालोकोक्तमुदाहरणान्तरं - हर्षचरिते हर्षवर्धनं प्रति सेनापतेः सिंहनादस्य वचनम् 'वृक्षेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः' इति। हर्षवर्धनस्य पिता प्रभाकरवर्धनो दिवं गतः, ज्येष्ठभ्राता राज्यवर्धनो गौडाधिपेन मिथ्योपचारोपचितविश्वासः स्वभवन एव व्यापादितः। एवं महाप्रलये, महस्योत्सवस्य, आसमन्तात् प्रलयो नाशो यत्र तादृश शोककारणे वृत्ते धरण्या राज्यधुराया धारणायाश्वासनाय त्वं शेषः शिष्यमाणः इतीयतापूर्णे प्रकृतार्थे कल्पावसाने भूभारोद्वहनायैको नागराज एवेत्यर्थान्तरम् - इति लोचनकाराः।

महिमभट्टास्तु -

'न ह्येतद्वाक्यमर्थान्तरमनिबन्धनं प्रकाशयितुं क्षमम्' इत्याहुः।

अस्मिन् विषये रसगङ्गाधरादिग्रन्थकाराणां मतम् - अर्थान्तरविषयेऽपि स एव शब्दः संस्कारप्रबोधनिबन्धनम्। उभयत्राप्येकस्यैव हेतुत्वे, अर्थयोः क्रमनियमानुपपत्तिरित्याक्षेपस्य परिहारः इत्थम् नानार्थशब्दस्य सर्वेष्वर्थेषु संकेतग्रहस्य तुल्यत्वात् श्रुतमात्र एव तस्मिन् सकलानामर्थानामुपस्थितौ शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति संदेहे प्रकरणबलात् प्रकृतोऽर्थः झटिति बुद्धिस्थो भवतीति तस्यैवार्थस्य प्रथममन्वयबुद्धिः जायते। अनन्तरमपरार्थोपस्थापकसामग्रयाः पदज्ञानस्य सत्वेन तदुपस्थितिरप्युचिता। प्रकरणज्ञानस्य परार्थोपस्थितिप्रतिबन्धकत्वकल्पनमनुभवविरुद्धम्। तथाहि पयो रमणीय मित्यादि वाक्यमाकर्णितवद्भिः प्रकरणाभिज्ञैरप्रकरणज्ञाः वक्तुस्तात्पर्यं बोध्यन्ते। पयःपदस्य क्षीरे तात्पर्यं न तु जले इति। अतः प्रकरणज्ञानवतामपि अर्थद्वयोपस्थितिरनुभवसिद्धा। तथाच प्रकरणमहिम्ना प्रकृतार्थस्य प्रथमं बोधः। अनन्तरमर्थसौन्दर्यबलात् विशेषणानामप्रकृतार्थेनान्वये चमत्कृतेरनुसंधानात्तदन्वयतात्पर्यग्रहेण द्वितीयार्थबोध इति तस्य निर्निबन्धत्वं नास्ति। एतादृशेषु उदाहरणेषु द्वितीयार्थो नास्त्येवेति महिमभट्टेन यदुक्तं तदनुभवसिद्धस्यापलाप इति साहित्यदर्पणकाराः।
शब्दशक्तिमूलपदप्रकाश्यध्वनेरुदाहरणं

प्रातुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि।
पथि प्रसन्नम्बुधरस्तडागः कूपोऽथवा किं न जडः कृतोऽहम्॥

दानोत्सुकस्य दारिद्र्येण दातुमशक्तस्य आत्मनिन्देयम् - धनैर्याचकस्य मनोरथं प्रातुं-प्रा-पूरणे इति धातुः। पूरयितुं दैवेन यदि न सृष्टः नामेत्यभ्युपगमे। मार्गे निर्मलजलपूर्णः तटाकः, अथवा कूपो वा किं, कस्मात् न कृतः। दैवेन न सृष्टः तदा जडः किं कर्तव्यतामूढः अहम्, अत्र जडपदस्य कुत्रान्वय इति विषये, आनन्दवर्धनाचार्यैरेवमुक्तम् अत्र जड इति पदं निर्विण्णेन वक्त्रा आत्मसमानाधिकरणतया प्रयुक्तमनुरणनरूपतया कूपसमानाधिकरणतां स्वशक्त्या प्रतिपद्यते इति।

जडपदं प्रथमं वक्तरि समन्वेति पश्चात् कूपेप्यन्वेति; जडोऽहं जडःकूपो विधिना किं न कृत इत्यर्थः। कूपपक्षे जडपदस्य शिशिरो जड इति कोशात् शीतल इति वाच्यार्थः। निर्वेदसंतापरहितशीतलजलयोगितया परोपकारसमर्थ इति व्यङ्ग्यार्थः। अतः पदप्रकाश्यध्वनिरित्यानन्दवर्धनाचार्याभिप्रायः।

**महिमभट्टाभिप्रायस्तु -**

अत्र जड इत्येतत्पदं कूपसमानाधिकरणतयैव प्रयुक्तम् । नात्मसमानाधिकरणतया । आत्मनो जडत्वाशंसास्पदत्वेनेष्टत्वात् । इत्थमेव वाच्यस्य चारुत्वोपपत्तेः किमनेन - परदुःखभाजाहतचैतन्येन कृत्यं जड कूप एव कस्मान्न कृत इत्यर्थोऽत्र विवक्षितः इति अतोऽनुदाहरणमेतत् इति ।

अत्रेदं वक्तुं शक्यम् - जड इति पदं निर्विण्णेन वक्त्राऽऽत्मसमानाधिकरणतया प्रयुक्तं इत्युक्तमानन्दवर्धनाचार्यैः । तस्यायमभिप्रायः लोके निर्विण्णः पुरुषः प्रायः स्वयमेव स्वात्मानं तिरस्करोति । अतः प्रकृते दारिद्र्यनिर्विण्णेन वक्त्रा आत्मतिरस्कारद्योतकं जडपदमात्मसमानाधिकरणतया प्रयुक्तं संगतं भवति इति ॥

**शब्दस्याभिधातिरिक्तशक्त्यन्तर निराकरणम् -**

व्यक्तिविवेककाराः शब्दस्याभिधातिरिक्तव्यापारान्तरकल्पनं नाङ्गीकुर्वन्ति । तथा हि अनेकशक्ति-समाश्रयत्वात् व्यापारान्तरकल्पनमर्थस्यैवोपपद्यते न शब्दस्य तस्याभिधामात्राश्रयत्वात् । एकाश्रयाः शक्तयोऽन्योन्यानपेक्षप्रवृत्तयः, पौर्वापर्यनियमरहिताः युगपदेव स्वार्थकारिण्यो दृश्यन्ते । यथा अग्नेः दाहकत्व प्रकाशकत्वादयः शब्दाश्रयाः शक्तयस्तथा नाभ्युपगम्यन्ते । नियमेनाभिधाशक्तिपूर्वकत्वेन इतरशक्तिप्रवृत्तेर्दर्शनात् । अतो भिन्नाश्रया एव ताः शक्तयः न तु शब्दैकसमाश्रयाः । योऽसौ भिन्न आश्रयः, स अर्थ एवेति, तद्व्यापारस्यानु-मानान्तर्भावोऽभ्युपगन्तव्यः । तथा च लक्षणया अपि अनुमानेऽन्तर्भावः । तथा हि 'गौर्वाहीक' इत्यादौ आपाततः गोवाहीकयोर्भिन्नयोरभेदः प्रतीयते । स च बाधित इति वाहीके गोत्वमारोपितमिति वक्तव्यम् । न हि अनुन्मत्तः कश्चित् किंचित् साधर्म्यमनुत्पश्यन् तत्त्वमारोपयतीति परिशीलितवक्तृस्वरूपः प्रतिपत्ता तत्त्वारोपनिमित्तं सादृश्यमात्रमेव प्रतिपत्तुमर्हति ॥

गोत्वारोपेण वाहीके तत्साम्यमनुमीयते इति संग्रहः । तथाच वाहीकः गोसदृशः गोत्वारोपविषयत्वात् इत्यनुमानप्रयोगः । एवंचानुमानेनैव वाहीके सादृश्यज्ञानात् गोपदे गोसदृशे लक्षणानांगीकरणीया । एवं पत्युः शिरश्चन्द्रकलामित्यादावनुमानेन रसप्रतीतेरुपपादनात् व्यञ्जनापि नांगीकरणीया । अतः शब्दस्याभिधारूप एक एव व्यापार इति महिमभट्टमतम् ।

ध्वन्यालोककारकाव्यप्रकाशकारादीनां सिद्धान्तानुसारेण शब्दस्याभिधातिरिक्त व्यञ्जनाख्यवृत्तिस्वीकार आवश्यकः अन्यथा तत्र तत्र काव्यविशेषेषु विवक्षितार्थप्रतीतिर्नभवति । तथा हि -

' या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।'

अत्र गीतापद्ये निशा-जागरणशब्दयोर्मुख्योर्थः न विवक्षितः । निशायां जागरितव्यम् अहनि रात्रिवदाचरितव्यमित्यनेन, उपदेश्यं प्रति न कश्चिदुपदेशः सिध्यति; मुनेरपि न कश्चिदतिशयः सिध्यति अत्र निशादिपदानां लक्षणामङ्गीकृत्यैवमर्थो वर्णनीयः । सर्वभूतानामज्ञानां सर्वप्राणिनां या तत्त्वदृष्टिः निशेव निशा तद्बुद्धीनामगोचरत्वात् तस्यां संयमी जागर्ति, कथमियं प्राप्येति अप्रमत्तो भवति । यस्यां मिथ्यादृष्टौ सर्वभूतानि जाग्रति अतिशयेन सुप्रबुद्धानि सा मुने रात्रिरप्रबोधविषय इति लक्ष्यार्थः । मुनेः तत्वज्ञानावहितत्वं अतत्वपराङ्मुखत्वं च व्यञ्जनया प्रतिपाद्यते ।

एवं चात्र विवक्षितार्थप्रतिपत्त्यर्थं लक्षणा व्यञ्जना च अवश्यमंगीकरणीयो । महिमभट्टैस्तु वाक्यस्योपचारतोऽर्थान्तरप्रकाशनं यथा इत्युक्त्वा या निशेति पद्यमुदाहृत्य ध्वन्यालोकोक्तमेवार्थमनूद्य 'अन्ते तिरस्कृतवाच्यस्यास्य गमकत्वमित्युक्तम्। तत्र गमकत्वमित्यस्यानुमापकत्वमिति तेषामाशयः। परं तु अत्र व्याप्यस्य हेतोरभावात् तैरप्रदर्शितत्वाच्चानुमितिर्नयुक्ता किं तु व्यञ्जकत्वमेव युक्तम्।

एवमभिधातिरिक्तव्यञ्जनाया आवश्यकत्वे उदाहरणम् -

'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्' इति काव्यप्रकाशोक्तं शब्दशक्तिमूलपद-प्रकाश्यवस्तुध्वनेरुदाहरणम्।

हे नरेन्द्र त्वं यस्मै कुप्यसि तं शनिग्रहः अशनिः वज्रं चातिशयेन निहन्ति इति वाच्यार्थः । व्यङ्ग्यपक्षे अशनिपदस्य न शनिरशनिरिति विग्रहेण नञः असुर इत्यादाविव, विरोध्यर्थकत्वात् शनिविरोधिरूपार्थावगतौ विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः इति वस्तु व्यज्यते इति शब्दशक्तिमूलवस्तुध्वनिः ।

अर्थस्यानुमेयत्वशब्दबोध्यत्वनिर्णयः -

महिमभट्टैः शब्दस्याभिधातिरिक्तव्यापारानंगीकारात् गौर्वाहीक इत्यादौ गोसाम्यस्यानुमेयत्वमंगीक्रियते । आनन्दवर्धनाचार्यादिभिस्तु शब्दस्य, लक्षणा व्यञ्जनावृत्तिस्वीकारात् शब्दबोध्यत्वमंगीक्रियते । किमत्रयुक्तमिति जिज्ञासूनां संदेहे - श्रीनीलकण्ठपण्डितविरचितायां प्रकाशिकाख्यायां तर्कसंग्रहदीपिकाव्याख्यायां निर्णायकः कश्चिन्मार्गः प्रदर्शितः । तत्र लक्षणावृत्तिनिरूपणप्रसंगे व्यञ्जनावृत्तेरतिरिक्तत्वमाशङ्कितम्।

व्यञ्जनायास्तत्रोक्तमुदाहरणं -

गच्छगाच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानिति ॥

प्रवासोन्मुखं कान्तं प्रति तद्वियोगासहिष्णोः प्रेयस्या उक्तिः - हे कान्त, त्वं प्रवासं गच्छसि चेत् गच्छ । ते मार्गाः शिवाः सन्तु । त्वं यत्र देशे गतस्तत्रैव देशे मम जन्म भूयादिति वाच्यार्थः । व्यङ्ग्यार्थस्तु प्रवासाधिकरणदेशे स्वजन्माशंसनेन, जन्मनश्च मरणोत्तरकालिकत्वेन तव गमनोत्तरं मम त्वद्वियोगासहिष्णुतया मरणं भविष्यति । अतस्त्वया न गन्तव्यमिति ॥ अयमर्थः अभिधया लक्षणया वा न प्रतीयते । अतो व्यञ्जनावृत्तिरंगीकरणीयेति शंका - तत्परिहारस्तु अनुमानेनैवास्यार्थस्य सिद्धेर्व्यञ्जना नांगीकरणीयेति । अनुमानप्रयोगस्तु 'इयं, मदीयगमनोत्तर कालिकमरणवती, विशिष्टशब्दप्रयोक्तृत्वात् इति । अथवा इयमुक्तिः न गन्तव्यमित्यर्थतात्पर्यवती, गमनानन्तरकालिकस्वकीयमरणसूचकत्वात् इति ।

इत्थं नैयामिकमतानुसारेण व्यञ्जनां निराकृत्य, ग्रन्थकारैः स्वाभिप्रायः एवमुद्घोषितः - 'यदि पुनरानुभविकलोकानां स्वरसवाही शब्दादमुमर्थं प्रत्येमि इत्यनुभवः तदावैञ्जनिकी प्रतीतिर्गीर्वाण-गुरुणाप्यशक्यवारणेति व्यञ्जनासिद्धि र्निष्प्रत्यूहैवेति मन्तव्यम् इति ।

तथा च पर्वतो वह्निमानित्यनुमितेरनन्तरं पर्वते वह्निमनुमिनोमीत्यनुव्यवसायो भवति शब्दजन्यज्ञानस्थले तु शब्दात्प्रत्येमीत्यनुव्यवसायो भवति । एवं स्थिते, लक्षणास्थले, लक्ष्यार्थस्य व्यङ्ग्यार्थस्य च प्रतीतिः शब्दादेव भवतीति शाब्दबोधविषयत्वमेव युक्तम् । नानुमेयत्वम् ।

अयमर्थः ध्वन्यालोकेऽपि प्रतिपादितः -

मुख्यां वृत्तिं परित्यज्य गुणवृत्यार्थदर्शनम्
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥

अस्याभिप्रायः - स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे इति न्यायेन, गङ्गातीरे घोष इति वाचकशब्दप्रयोगं विहाय गङ्गायां घोष इत्यवाचकशब्दप्रयोगः घोषे शैत्यपावनत्वादिप्रतीतिरूपफलोद्देशेन क्रियते, तादृशफलबोधने शब्दः स्खलद्गतिः कुण्ठीक्रियमाणावगमनशक्तिर्नैव भवति। उद्दिष्टं फलं बोधयत्येव। तथाच गङ्गायां घोष इत्यत्र गंगातीरे घोष इति तीरप्रतीतिर्लक्षणया शैत्यपावनत्वादिप्रतीति र्व्यञ्जनया। शब्दादमुमर्थं प्रत्येमीति अभिज्ञानां व्यवहारात् तथा च शब्दस्याभिधातिरिक्त लक्षणाव्यञ्जनाख्यव्यापाराङ्गीकरणमावश्यकम् काव्यप्रकाशेप्ययमर्थः स्पष्टमुक्तः।

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते। फले शब्दैकगम्येऽत्रव्यञ्जनान्नापरा क्रिया॥ इति। अस्यार्थः - यस्य शैत्यपावनत्वादेः प्रतीतिं जनयितुं गङ्गातीरे घोष इति वाचकशब्दप्रयोगं विहाय गङ्गायां घोष इतिलाक्षणिकशब्दप्रयोग आश्रीयते, लाक्षणिक शब्दमात्रगम्ये तस्मिन् प्रयोजने व्यञ्जनां विना अन्यो व्यापारो नास्तीत्यर्थः। तथा च शब्दादमुमर्थं प्रत्येमीत्यनुव्यवसायात् शाब्दबोध एव। नानुमितिरिति भावः। अत्र शब्दै-केत्येकशब्देनानुमाननिरासः। व्याप्तिपक्षधर्मतानिर्णयादिरूपसामग्री विरहेणानुमानरूपत्वासंभवादितिभावः-

एवं काव्यप्रकाशे - 'गतोऽस्तमर्कः' इति वाक्यमुदाहृत्य व्यञ्जनावृत्तेरावश्यकत्वमुपपादितम्। तथाहि गतोऽस्तमर्कः इति वाक्ये वाच्यार्थः सर्वान् प्रतिवक्तॄन्प्रति एकरूप एव। व्यंग्यार्थस्तु प्रकरणादिवशेन नानात्वं भजते। सेनापतीन् प्रति, अवस्कन्दनावसर इति, अभिसारिकाः प्रति अभिसरणमुपक्रम्यतामिति, नायिकां प्रति प्राप्तस्ते प्रेयानिति, कर्मकरान्प्रति कर्मकरणान्निवर्तामहे इति, धर्मशीलान्प्रति सांध्यो विधिरुपक्रम्यतामिति। अत्रैते अर्थास्तावत् प्रतीयन्त एव, गतोऽस्तमर्क इति वाक्यघटक पदानामेष्वर्थेषु संकेताभावान्न शक्तिः। मुख्यार्थस्य बाधाभावान्न लक्षणा, अतः व्यञ्जनैव व्यापारः व्याप्तिनिर्णयादेरभावान्नानुमितिः। अतस्तत्र तत्र काव्यविशेषेषु विवक्षितार्थ प्रतिपत्तये व्यञ्जनावृत्तिरवश्यमंगीकरणीयेति ध्वनिवादिनां मतम्॥

# रससूत्रविचारः

व.रा. कल्याणसुन्दर शास्त्री

1) सच्चित्सुखात्मकं शान्तं जगतामेककारणम्।
मामव्यात् मामकं ज्योतिः अन्तरं सर्वदेहिनाम्॥

2) प्रणम्य शिरसा देवौ पितामहमहेश्वरौ।
मुनिं मुनीनां भरतं नाट्यशास्त्रप्रवर्तकम्॥

3) गुप्तपादैःसंप्रणीतां दृष्ट्वाभिनवभारतीम्।
प्राच्यालङ्कारशास्त्राणि चाकलय्यापि कानिचित्॥

4) रसगङ्गाधराख्यांच जगन्नाथकृतिं तथा।
भरद्वाजकुलप्राप्तजन्मा कल्याणसुन्दरः॥

5) पुत्रतामुपयातो यो राजाम्बारामनाथयोः।
वैद्यनाथगुरोश्शिष्यो नानाशास्त्रविशारदः॥

6) जगद्गुरुप्रत्तभाष्य भावज्ञबिरुदाञ्चितः।
पत्या भारतराष्ट्रस्य कृतसम्माननः स्वयम्॥

7) वराहपुरजातोऽसौ सारमाकृष्य सर्वतः।
विचारं रससूत्रस्य कुरुते मतिशुद्धये॥

8) अलङ्कारनिबन्धा हि दृश्यन्ते बहुभिः कृताः
रससूत्रविचारोऽयं न भूयस्सु प्रदृश्यते॥

9) साहित्यदर्पणे काव्यप्रकाशे मम्मटैः कृते।
तथाभिनव भारत्यां गुप्तपादकृतौ तथा॥

10) प्रतापरुद्रदेवस्य यशसोभूषणेऽपिच।
रसगङ्गाधरे चापि विचारोऽयं प्रवर्तितः॥

11) रसगङ्गाधरे काव्यप्रकाशे च विशेषतः।
तत्राप्ययं बहुमुखः रसगङ्गाधरे कृतः॥

### रससूत्रम्

12) योगात् बहुद्रव्ययुतैः व्यञ्जनैर्बहुभिर्यथा।
लोके रसस्य निष्पत्तिरन्नादौ दृश्यते तथा॥

13) विभावैरनुभावैश्च तथैव व्यभिचारिभिः।
संयोगाद्रसनिष्पत्तिरित्याह भरतः स्वयम्॥

14) रससूत्रन्त्वेतदेव शिष्टैर्व्याह्रियतेऽधुना।
बहुभिर्बहुधा चैतत् व्याख्यातं दृश्यतेऽपि च॥

### विभावादिस्वरूपनिरूपणम्

15) रससूत्रनिविष्टत्वात् विशेषप्रतिपत्तये।
विभावादेः त्रयस्याद्य स्वरूपं किञ्चिदुच्यते॥

16) अनुकार्ये हि रामादौ रत्यादेः स्थायिनो ननु।
कारणानीह सीतादीन्याहुर्लोके मनीषिणः॥

17) कटाक्षवीक्षणादीनि कार्याण्याहुस्तथैव च।
सहकारीणि चिन्ताद्यान्यनन्तानि विभागशः॥

18) कारणान्यथ कार्याणि सहकारीणि यानि च।
प्रोक्तानि स्थायिनो लोके तानि चेत्काव्यनाट्ययोः॥

19) विभावा अनुभावश्च कथ्यन्ते व्यभिचारिणः।
अलौकिकास्ते कथ्यन्ते काव्याभिनयबोधिताः॥

20) अलौकिकत्वमेतेषां बह्वाशङ्कानिवारकम्।
साधारण्यं विभावादेरेतेनैव प्रसाध्यते॥

21) रसोद्बोधे विभावाद्याः कारणान्येव ते मताः।
प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते॥

22) ततः सम्मिलितः सर्वो विभावादिः सचेतसाम्।
प्रपाणकरसन्यायात् चर्व्यमाणो रसो भवेत्॥

23) सद्भावश्चेद्विभावादेः द्वयोरेकस्य वा भवेत्।
झटित्यन्यसमाक्षेपे तथा दोषो न विद्यते॥

### विभावभेदः

24) आलम्बनोद्दीपनात्मा विभावः कथ्यते द्विधा।
आलम्बनविभावोऽत्र रसोत्पादनकारणम्॥

25) उद्दीपनविभावस्तु रसोद्दीपनकारणम्।
आलम्बनगुणश्चैव तच्चेष्टा तदलङ्कृतिः॥

### उद्दीपनभेदः

26) तटस्थश्चेति विज्ञेयः चतुर्धोद्दीपनक्रमः।
आलम्बनगुणो रूपयौवनादिरुदाहृतः॥

27) तच्चेष्टा यौवनोद्भूतहावभावादिका मताः ।
नूपुराङ्गदहारादि तदलङ्करणं मतम् ॥

28) मलयानिलचन्द्राद्याः तटस्थाः परिकीर्तिताः ।
कार्यभूतोऽनुभावः स्यात्कटाक्षादिः शरीरजः ॥

29) निर्वेदाद्याः वितर्कान्ताः विज्ञेया व्यभिचारिणः ।
विशेषादाभिमुख्येन चरणात् व्यभिचारिणः ॥

30) त्रयस्त्रिंशदमी भावा रसस्य सहकारिणः ।
रसभेदेन भिद्यन्ते विभावाद्यास्त्रयोप्यमी ॥

31) मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथार्णवे ।
तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि ॥

32) तथा स्थायिनि निर्मग्ना ह्युन्मग्ना व्यभिचारिणः ।
पुष्णन्ति स्थायिनः स्वांश्च तान्नयन्ति रसात्मताम् ॥

33) रतिं देवादिविषयां रसगङ्गाधरे स्वयम् ।
व्यभिचारिषु संयोज्य जगन्नाथस्तु पण्डितः ॥

34) चतुस्त्रिंशदमी भावा इति प्रोवाच मानतः ।
रसभेदेन भेदस्तु विभावादेः प्रदर्श्यते ॥

### रसभेदाद्विभावादिभेदः

34A) ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥

35) विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरर्थविशेषैः हसतीति रसःस्मृतो हासः ॥

36) इष्टजनस्य विनाशात् शापाक्रोशाच्च बन्धनात् व्यसनात् ।
एतैरर्थविशेषैः करुणाख्यरसः समुद्भवति ॥

37) आयुधखड्गाभिभवात् वैकृत भेदाद्विदारणाच्चैव ।
संग्रामसंभवादर्थादिभ्यः संजायते रौद्रः ॥

38) उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात् ।
विविधादर्थविशेषाद्वीररसो नाम संभवति ॥

39) विकृततरसत्वदर्शनसंग्रामाख्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात्कृतकः स भयानको ज्ञेयः ॥

40) अनभिमतदर्शनेन च गन्धरसस्पर्शदोषैश्च ।
उद्वेजकैश्च बहुभिर्बीभत्सरसश्च समुद्भवति ॥

41) यत्वतिशयार्थयुक्तं वाक्यं शिल्पं च कर्म रूपं च।
तत्सम्बद्धैरर्थै रसोऽद्भुतो नाम संभवति ॥

42) उद्दीपनादावप्येवं रूपभेदः समूह्यताम्।
ग्रन्थविस्तरभीत्या तु सर्वं नेह प्रतन्यते ॥

43) भट्टश्रीलोल्लटस्यैवं दण्डिनः शङ्कुकस्य च।
भट्टश्रीनायकस्योपाध्यायस्यापि प्रदर्शिताः ॥

44) पक्षभेदा विमृष्टाश्च गुप्तपादैरनुक्रमात्।
स्वीयाभिनवभाख्यां ते यथेत्युच्यतेऽधुना ॥

**उपपादनरीतिः**

45) पक्षोपपादनं पूर्वं खण्डनं च ततः परम्।
सूत्रार्थवर्णनं चेति क्रमोज्ञेयो बुधैरिह ॥

**भट्टलोल्लटपक्षः**

46) विभावैरनुभावैश्च तथैवं व्यभिचारिभिः।
योगोऽर्थात् स्थायिनः तस्माद्रसनिष्पत्तिरिष्यते ॥

47) अवस्थिताश्चिरं चित्ते सम्बन्धाच्चानुबन्धिभिः।
वर्धिता ये रसात्मानः ते स्मृताः स्थायिनो बुधैः ॥

48) स्थायिन्याश्चित्तवृत्तेश्च समुत्पत्तौ तु कारणम्।
विभावःस्यात् नानुभावाः रसजन्या भवन्ति ये ॥

49) गणना कारणत्वेन रसजानां न युज्यते।
विभावैर्जनितस्थायी ह्यालम्बनसमाह्वयैः ॥

50) उद्दीपनविभावैश्च तथैवोपचितः स्वयम्।
अनुभावादिभिःसम्यक् प्रतीतिविषयः कृतः ॥

51) पुष्टं सहचरैर्भावैः रसो भवति नान्यथा।
रामादावनुकार्येऽसौ मुख्यवृत्या प्रतिष्ठितः ॥

52) अनुसन्धानस्य बलात् अनुकर्तर्यपि स्थितः।
सामाजिकैश्च तत्रैव स्थितोऽसावनुभूयते ॥

53) भट्टस्य लोल्लटस्यैवं पक्षो गुप्तेन वर्णितः।
चिरन्तनानां पक्षोऽपि ह्ययमेवेति वर्णितम् ॥

54) रूपबाहुल्ययोगेन रतिः शृङ्गारतां गता।
अधिरुह्य परां कोटिं कोपो रौद्रात्मतां गतः ॥

55) इतीदं दण्डिनो वाक्यमाचार्यस्य कवेस्तथा।
प्रमाणीकृतमत्रार्थे गुप्तपादेन च स्वयम् ॥

### प्रकारान्तरेण लोल्लयपक्षः

56) भट्टलोल्लटपक्षोऽसावन्यथाप्युपपादितः।
अलङ्कारनिबन्धेषु स प्रकारोऽधुनोच्यते ॥

57) स्थितोऽनुकार्ये रामादौ भातोऽयं परमार्थतः।
सादृश्यस्यानुसन्धानात् नटे चात्रानुकारिणि ॥

58) सामाजिकैस्समारोप्य साक्षादेवानुभूयते।
जनयत्येष आस्वादं रज्जुसर्पो भयं यथा।

59) आरोप्यांशेऽलौकिकोऽयं धर्म्यंशे लौकिकः स्वयम्।
सादृश्यदोषवशतः सम्भवोऽस्य विभाव्यताम् ॥

60) भेदो यद्यपि सादृश्यघटको भवति स्वयम्।
अनुकारविशेषाच्च भेदधीः प्रतिबध्यते ॥

### लोल्लटपक्षखण्डनम्

61) भट्टलोल्लटपक्षोऽत्र संग्रहेण प्रदर्शितः।
निराकरणमार्गोऽद्य संक्षेपेण प्रदर्श्यते ॥

62) सामाजिको हि लोकेऽस्मिन् रसानुभवलिप्सया।
काव्यं श्रोतुं तथा द्रष्टुं नाट्यं चाभिप्रवर्तते ॥

63) तस्मिन् रसस्यानिष्पत्तौ प्रवृत्तिर्विफला भवेत्।
नटस्य रसविज्ञानात् प्रवृत्तिस्सफलेति चेत् ॥

64) शृङ्गारादेर्लौकिकस्य दर्शनादपि सा भवेत्।
किञ्चारोपोऽपि रत्यादेः न चमत्कारकारणम् ॥

65) न लोके चन्दनारोपश्चमत्काराय कल्पते।
किन्तु चन्दनसम्बन्धस्तथा रत्यादिकेष्वपि ॥

66) अनुकाराभिमुख्येन न नटः स्वदते रसम्।
रसास्वादपरत्वे च नटः सामाजिको भवेत् ॥

### प्रकारान्तरेणखण्डनम्

67) श्रीशङ्कुकमुखाद्गुप्तः पक्षमेनमखण्डयत्।
प्रकारः खण्डनस्याथ संक्षेपेण प्रदर्श्यते ॥

68) कारणान्यथ कार्याणि सहकारीणि यानि च।
तैर्विभावानुभावाद्यैः यत्नाप्तैरनुकर्तृणा॥

69) अकृत्रिमतया भातैः कृत्रिमैरपि लिङ्गतः।
अनुकर्तृगतत्वेन मीयमानः परैरिह॥

70) मुख्यरामादिग स्थायिभावानुकरणात्मकः।
अनुकारात्मकत्वेन नामान्तरनिर्देशभाक्॥

71) स्थायिभावो रसत्वेन मन्तव्यो नान्यथा बुधैः।
विभावानां प्रतीतिःस्यात् काव्यशब्दबलादिह॥

72) अनुभावप्रतीतिस्तु भवेत् शिक्षाबलात् तथा।
निजानुभावा ये तु स्युः कृत्रिमास्समुपार्जिताः॥

73) शिक्षावशात् बलात्तेषां प्रतीतिर्व्यभिचारिणाम्।
स्थायी तु नानुसन्धेयो भवेत्काव्यबलादपि॥

74) शब्दा रत्यादयः स्थायिभावानामभिधायकाः।
नतु वाचनिकास्तेषां गमका वाचिकं न वाक्॥

75) वाचा निर्वृत्तमेव स्यात् वाचिकं न हि वाक्स्वयम्।
अङ्गैर्निर्वर्तितं यद्वदाङ्गिकं नाङ्गमेव तत्॥

76) अयमेव ह्याशयःस्यात् भरतस्य मुनेरपि।
अत एव स्थायिपदं रससूत्रे न योजितम्॥

77) अर्थक्रियापि मिथ्यार्थज्ञानाल्लोके प्रदृश्यते।
भयं हि जनयत्येष रज्जुसर्पोऽपि सर्पवत्॥

78) मणिप्रदीपप्रभयोः मणिबुद्ध्याभिधावतोः।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥

79) सुखी नर्तक एवेति न प्रतीतिरियं भवेत्।
न च रामोऽयमेवेति नाप्ययं न सुखीति वा॥

80) न रामःस्यान्न वा वेति न तत्सदृश इत्यपि।
सम्यङ्मिथ्याप्रतीतिभ्यां संशयात्मप्रतीतितः॥

81) सादृश्यात्मप्रतीतेश्च भवतीयं विलक्षणा।
चित्रस्थतुरगे यादृक् प्रतीतिस्तादृगेव सा॥

82) विरुद्धबुद्धिसंभेदादविवेचितसम्प्लवः।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया॥

## प्रकारान्तरेण शङ्कुकपक्षः

83) श्रीशङ्कुकस्य पक्षोऽयमन्यथाप्युपपादितः ।
अलङ्कारनिबन्धेषु स प्रकारोऽधुनोच्यते ॥

84) रामे रामोऽयमित्येषा प्रतीतिस्सम्यगुच्यते ।
रामोऽयमित्यरामे तु सा मिथ्या प्रोच्यते बुधैः ॥

85) रामोऽयं वा नवेत्येषा प्रतीतिस्संशयात्मिका ।
रामेण सदृशो ह्येषः इति सादृश्यधीर्भवेत् ॥

86) आभ्यो विलक्षणा काचित् प्रतीतिरुपजायते ।
नटे रामोऽयमित्येवं चित्रस्थतुरगे यथा ॥

87) अयं तुरग इत्येवं तया च विषयीकृते ।
नटे पक्षे विभावाद्यैः तेनैव प्रकटीकृतैः ॥

88) अकृत्रिमतया भातैः लिङ्गभूतैश्चकृत्रिमैः ।
रामादिगत एवात्र रत्यादिरनुमीयते ॥

89) चमत्कारात्मिका चेयं चर्वणानुमितिर्भवेत् ।
तस्या विषयभूतश्च स्थायी रससमाह्वयः ॥

90) सादृश्यातिशयश्चात्र समारोपनिबन्धनम् ।
नटानुकारनैपुण्यं सादृश्यमितिकारणम् ॥

91) गुरुशिक्षावशात् तद्वत् दृढाभ्यासवशादपि ।
अनुकारे विभावादेः कुशलो हि नटो भवेत् ॥

92) पाठ्ये च पाठके श्रव्ये श्रोतर्येवाखिलं भवेत् ।
कौशलं पाठनेऽन्यत्र श्रवणे साम्यकारणम् ॥

93) प्रसिद्धिश्चाप्यनुमितेः मिथ्याभूतेन हेतुना ।
सिद्धा ह्यनुमितौ वह्नेः बाष्पधूमादिना क्वचित् ॥

94) सामाजिकानामेवेयं चर्वणा संभवेद्यतः ।
तेष्वेवातो रस इति व्याहारः क्रियते बुधैः ॥

95) साक्षात्कारात्मको बोधो भवेद्धेतुश्चमत्कृतौ ।
अन्यथा ह्यनुमेयेऽपि सुखादौ सा भवेत् ध्रुवम् ॥

96) न चासौ दृश्यते लोके इति चेत् संशयो भवेत् ।
अनुमित्यात्मको बोधो नायं लौकिक इष्यते ।

97) अलौकिको ह्ययं बोधो रज्जुसर्पादिन्बोधवत् ।
अतो नास्त्यवकाशोऽत्र संशयस्येति भाव्यताम् ॥

98) यावत् भातं यथा शुक्तौ रूप्यज्ञानं प्रमात्मकम्।
तथा रत्यादिविज्ञानं नटादाविति भावयेत् ॥

99) स्वतः प्रामाण्यवादे हि ज्ञाने भ्रान्त्यात्मकेऽपि च।
बाधावतरणं यावत् तावत् प्रामाण्यमिष्यते ॥

### लोल्लटाभिमतः सूत्रार्थः

100) भट्टलोल्लटपक्षेण सूत्रार्थो वर्ण्यतेऽधुना।
श्रोतृणां सुखबोधाय शुद्धचर्थं च मतेर्मम ॥

101) विभावैरनुभावैश्च तथैव व्यभिचारिभिः।
संयोगादिह सम्बन्धात् रसानां स्थायिनामिह ॥

102) निष्पत्तिः स्यादिहारोपः नटादावनुकर्तरि।
अनुकार्यादिरूपेण गृहीते साम्यरूपतः ॥

103) इति लोल्लटपक्षेण सूत्रार्थः पर्यवस्यति।
हेतुस्स एव चारोपः सामाजिकचमत्कृतौ ॥

104) कार्यकारणभावश्च व्यङ्ग्यव्यञ्जकता तथा।
पोष्यपोषकभावश्च सम्बन्धोऽत्र यथाक्रमम् ॥

### शङ्कुकमतखण्डनम्

105) श्रीशङ्कुकस्य पक्षोऽत्र मया द्वेधा प्रदर्शितः।
निराकरणमार्गोऽद्य संक्षेपेण प्रदर्श्यते ॥

106) ज्ञानमक्षात्मकं लोके कारणं स्याच्चमत्कृतौ।
नैवानुमित्यादिरूपं सुखादौ तददर्शनात् ॥

107) इति सार्वजनीनायाः प्रसिद्धेरतिलङ्घने।
अन्यथा कल्पने चापि प्रमाणं नैव विद्यते ॥

108) सूत्रार्थयोजना चैवमन्यथाप्युपपद्यते।
तस्मात् शङ्कुकपक्षोऽयं नादर्तव्यो बुधैरिति ॥

### प्रकारान्तरेण शङ्कुकमतखण्डनम्

109) उपाध्यायमुखाद्गुप्तः पक्षमेनमखण्डयत्।
प्रकारः खण्डनस्थाय संक्षेपेण प्रदर्श्यते ॥

110) अन्तस्तत्त्वविहीनत्वात् न मर्दं क्षमते मतम्।
इति प्राहुरुपाध्यायाः कारणं तत्र चाब्रुवन्।

111) रसोऽनुकरणात्मेति वचनं किंप्रमाणकम् ।
सामाजिकप्रतीतिर्वा नटाभिप्राय एव वा ॥

112) व्याख्यातृणां मतिर्यद्वा मानं तत्रोच्यते त्वया ।
न किञ्चिदपि वा तत्र मानतां प्रतिपद्यते ॥

113) स्यात्तदेवानुकरणं यन्मानेनोपलभ्यते ।
अक्षसिद्धं पयःपानं पिबत्येवं सुरामिति ॥

114) सुरापानानुकरणं प्रोच्यते विबुधैरिह ।
नटे किमुपलब्धं सदनुकारो भवेद्वद ॥

115) तच्छरीरमलङ्कारो रोमाञ्चो गद्गदं नु वा ।
भुजाक्षेपो विवलनं भ्रुकुटिः कोणवीक्षणम् ॥

116) चित्तवृत्तिस्वरूपायाः रतेर्नैतेषु किञ्चन ।
अनुकारतया भायात् अतथारूपवत्त्वतः ॥

117) भिन्नेन्द्रियग्राह्यतया भिन्नाधिकरणत्वतः ।
अन्योन्यं च रतेरेषां वैलक्षण्योपलम्भनात् ॥

118) मुख्यावलोकने सिद्धे ह्यनुकारः प्रसिद्ध्यति ।
रती रामगता केन वोपलब्धा पुरा वद ॥

119) नटो रामानुकारः स्यादिति यत्प्रोच्यतेऽबुधैः ।
सोऽपि प्रोक्तेन मार्गेण प्रवादः खण्डितोऽधुना ॥

120) सामाजिकप्रतीतेर्या रसेऽनुकरणात्मके ।
मानता वादिना प्रोक्ता पुरा सेयं निराकृता ॥

121) निराकरिष्यते चाद्य नटाभिप्रायमानता ।
या चित्तवृत्तिर्नटगा प्रतिपन्ना सतीच सा ॥

122) रतेःस्यादनुकारोऽसौ शृङ्गारः प्रोच्यते यदि ।
किमात्मिका मीयमाना चित्तवृत्तिरिहेष्यताम् ॥

123) कार्यभूतैःकटाक्षाद्यैः कारणैः प्रमदादिभिः ।
प्रतीता या लिङ्गभूतैः धैर्याद्यैः सहचारिभिः ॥

124) कार्यकारणरूपा च सहचारिस्वरूपिणी ।
लौकिकी चित्तवृत्तिः स्यात्तत्स्वरूपेयमिष्यते ॥

125) इति चेद्धन्त सा तर्हि रतिरेव भवेत् स्वयम् ।
अनुकारो रतेर्यस्तु स एव हि रसस्तव ॥

126) स्ववचः प्रतिपक्षत्वात् वादोऽयं न हि युज्यते।
कृत्रिमस्य विभावादेर्विपरीततया ग्रहः ॥

127) संगच्छेत कथं वा ते रतेस्तेन गतिः कथम्।
अक्रुद्धोऽपि नटो लोके क्रुद्धवद्भासते ननु ॥

128) क्रुद्धानुकार एवाऽसाविति चेत्तन्न शोभनम्।
क्रुद्धसादृश्यमेवात्र नटे सम्प्रतिपद्यते ॥

129) नानुकारो भ्रुकुट्यादिः सादृश्यस्य प्रयोजकः।
गौर्यथा सदृशी भाति गवयेन मुखादिभिः ॥

130) अतोऽनुकारवचनं रिक्तं ते प्रति भाति नः।
रसः स्थाय्यनुकारः स्यात् इति नेदं मुनेर्वचः ॥

131) मुनिना लिङ्गमप्यत्र न किञ्चिदपि सूचितम्।
अतः शङ्कुकपक्षोऽयं नादर्तव्यो बुधैरिति।

**शंकुकाभिमतः सूत्रार्थः**

132) श्रीशङ्कुकस्य पक्षेण सूत्रार्थो वर्ण्यतेऽधुना।
श्रोतृणां सुखबोधाय शुद्ध्यर्थं च मतेर्मम ॥

133) अकृत्रिमतया भातैः कृत्रिमैरपि च स्वतः।
विभावाद्यैः लिङ्गभूतैः रसानां स्थायिनामिह ॥

134) संयोगादिह सम्बन्धात् अनुमाप्यानुमापकात्।
निष्पत्तिः स्यादनुमितिः नटादावनुकर्तरि ॥

**भट्टनायकपक्षः**

135) भट्टनायकपक्षोऽपि निरूप्यात्र निराकृतः।
निरूपणप्रकारोऽथ संग्रहेण प्रकथ्यते ॥

136) रसः प्रतीयते नैव नैव चोत्पद्यते रसः।
संभवादिह दोषाणां न चाभिव्यज्यते तथा ॥

137) प्रतीतिः स्वगतत्वेन परगत्वेन वा भवेत्।
स्वगतत्वेन चेत्सा स्यात् दुःखित्वं करुणे भवेत् ॥

138) सीतादेरविभावत्वात् प्रतीतिरपि दुर्घटा।
स्वकान्तास्मरणस्यापि नैव तत्रास्ति संभवः ॥

139) साधारणीकृतिश्चापि देवतादौ न युज्यते।
समुद्रलङ्घनादेश्च साधारण्यं भवेत्कथम् ॥

140) तथैवानुपलब्धत्वात् रामादेश्च कथं स्मृतिः।
शब्दादितः प्रतीतिश्चेत् न स्यात् अनुभवात्मता॥

141) प्रतीतिर्युज्यते नातोऽनुभवस्मृतिरूपिणी।
उत्पत्तिव्यक्तिपक्षेऽपि तुल्यमेतत्प्रदूषणम्॥

142) दोषाभावादिरूपेण तिष्ठता काव्यवर्त्मनि।
नाट्येऽभिनयरूपेण निजमोहविधायिना॥

143) साधारण्यं विभावादेः कर्तुं शक्तेन च स्वयम्।
अभिधाव्यापृतेः पश्चात् व्यापृतिं कुर्वता स्वयम्॥

144) भाव्यते भावकात्वाख्यव्यापारेण रसः स्वयम्।
विलक्षणेनानुभवस्मृतिसादृश्यवित्तितः॥

145) गुणानुवेध वैचित्र्यादाप्तेन द्रुतिरूपताम्।
विस्तरात्मकतां तद्वद्विकासात्मकतामपि॥

146) विश्रान्तेन निजानन्दप्रकाशाव्ययसंविदि।
भोगेन भुज्यते चासौ ब्रह्मास्वादानुगामिना॥

**प्रकारान्तरेण भट्टनायकपक्षः**

147) भट्टनायकपक्षोऽसावन्यथाप्युपपादितः।
अलङ्कारप्रबन्धेषु स प्रकारोऽधुनोच्यते॥

148) न नटादिगतत्वेन रस उत्पद्यते क्वचित्।
परमार्थतया तेषु विभावादेरसत्वतः॥

149) न चानुमीयते चापि रत्यादेरप्यभावतः।
तदा रामाद्यसत्वेन रत्यादेस्सम्भवः कुतः॥

151) असतश्चाप्यनुमितिः सत्वेन न हि युज्यते।
नटादिनिष्ठया तद्वन्नटेऽनुमितयापि वा॥

152) रत्या सामाजिकेऽसत्या चमत्कारः कुतो भवेत्।
ताटस्थ्येन प्रतीतिर्हि न स्यादास्वादकारणम्॥

153) न परं सुखिनं दृष्ट्वा सुखी भवति कश्चन।
न चैवं दुःखिनं दृष्ट्वा दुःखी भवति कश्चन॥

154) तस्मादवश्यं वक्तव्या रत्यादेरात्मनिष्ठता।
सीतादेरविभावत्वात् दुर्घटा चात्मनिष्ठता॥

155) प्रादुर्भावोऽपि रत्यादेः न विनालम्बनं भवेत्।
सामाजिकगतत्वेन रत्यादिर्व्यज्यते न च॥

156) सिद्धो हि व्यज्यते लोके नासिद्धोऽर्थः कदाचन ।
रसोऽसिद्धस्तदा तस्य कथंव्यक्तिरिहाभवेत् ॥

157) अभिव्यक्तावसिद्धस्याऽतिप्रसंगो भवेद् ध्रुवम् ।
भुक्तिपक्षे कथं भोग इति चेदुच्यते शृणु ॥

158) अलौकिकत्वात् भोगस्य नाऽर्थोऽयं प्रश्नमर्हति ।
तस्मान्न व्यक्तिरुत्पत्तिर्न चैवानुमितिर्न हि ॥

159) कान्तात्वरूपसामान्यंधर्मेण प्रोच्यते यदि ।
आलम्बनत्वं सीतादेः स्वप्नादावपि तद्भवेत् ॥

160) रामाद्यभेदबुद्धिश्च दुर्घटैव निजात्मनि ।
सामाजिकस्य वैधर्म्यविज्ञाने तत्र जाग्रति ॥

161) धीरत्वपार्थिवत्वादेः रामादौ प्रति भासनात् ।
स्वस्मिंस्तद्विपरीतानां धर्माणामेव भासनात् ॥

162) नेयं प्रतीतिः शाब्दी स्यान्न स्मृतिर्नापि मानसी ।
आस्वाद्यत्वादापरोक्ष्याद्वैलक्षण्योपलम्भनात् ॥

163) अभिधा भावना चेति तद्भोगीकृतिरित्यपि ।
शब्दात्मनो हि काव्यस्य व्यापाराः सन्ति हि त्रयः ॥

164) अभिधा द्विविधा प्रोक्ता सान्तरा च निरन्तरा ।
सान्तरैवाभिधा शब्दे लक्षणेत्युच्यते बुधैः ॥

165) अभिधा हि पदार्थानां विशेषण प्रबोधिका ।
भावना तु विशेषाणां साधारण्यकृतिक्षमा ॥

166) विभावादेः स्थायिनश्च साधारण्यं तथा भवेत् ।
साधारण्यं भवेदत्र सामान्यात्मत्वभावनम् ॥

167) व्यापारेण तृतीयेन तद्भोगीकरणात्मना ।
साधारणात्मा रत्यादिः स्थायी समुपभुज्यते ॥

168) भोगश्च संविदात्मायं भोगान्तरविलक्षणः ।
भोगीकृतिर्भावना च नाट्येऽप्यभ्युपगम्यते ॥

### भट्टनायकपक्षखण्डनम्

169) भट्टनायकपक्षोऽयं मया द्वेधा प्रदर्शितः ।
निराकरणमार्गोऽद्य संक्षिप्याथ प्रदर्श्यते ॥

170) अभिधा लक्षणा चेति व्यञ्जनेति च वृत्तयः ।
आलङ्कारिकमूर्धन्यैः तिस्र एव समीरिताः ॥

171) तात्पर्याख्या वृत्तिरपि निर्दिष्टा कापि तद्यथा ।
अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ॥

172) वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया तथा ।
व्यङ्ग्यो व्यञ्जनया ताःस्युः तिस्रः शब्दस्य शक्तयः ॥

173) तत्र संकेतितार्थस्य बोधनादग्रिमाऽभिधा ।
मुख्यार्थबाधे तद्युक्तो यथान्योऽर्थः प्रतीयते ॥

174) रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ।
विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः ॥

175) सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ।
प्रत्यायनं च गमनं ध्वननं चोच्यतेऽपि सा ॥

176) अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।
एकार्थेऽन्यधीहेतुर्व्यञ्जना ह्यभिधाश्रया ॥

177) लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा तु व्यञ्जना लक्षणाश्रया ॥

178) वक्तृबोद्धव्यवाक्यादेः काक्वाश्लेष्टादिकस्य च ।
वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा ॥

179) अभिधादित्रयोपाधिवैशिष्ट्यात् त्रिविधो मतः ।
शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥

180) तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ।
तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे ॥

181) मानेनैवं नये शाब्दे सिद्धं वृत्तिचतुष्टयम् ।
अपूर्वा भावना केयं तद्भोगीकृतिरित्यपि ॥

182) भोगीकृतिर्व्यक्तिरेवेत्युच्यते भवता यदि ।
निष्फला भावना सेयं किमर्थं समुपास्यते ॥

183) साधारण्यं विभावादेरियं सम्पादयेद्यदि ।
चर्वणाख्यो दोष एव तस्य सम्पादने क्षमः ॥

### भट्टनायकाभिमतः द्विप्रकारः सूत्रार्थः

184) भट्टनायकपक्षेण सूत्रार्थो वर्ण्यतेऽधुना ।
श्रोतृणां सुखबोधाय शुद्धयर्थं च मतेर्मम ॥

185) भावनाख्येन काव्यस्य व्यापारेण समीकृतैः ॥
विभावाद्यैर्भोज्यभूतैः रसानां स्थायिनामिह ॥

186) संयोगादिह सम्बन्धात् भोज्यभोजकनामकात् ।
निष्पत्तिरिह भुक्तिःस्यात् इति केचित्प्रचक्षते ॥

187) विभावादेर्विशिष्टस्य सम्यक् साधारणात्मना ।
योगात्तु भावकत्वाख्यव्यापारेण विभावनात् ॥

188) रसस्य भुक्तिर्निष्पत्तिः भोगेन विषयीकृतिः ।
समं रत्यादिरूपस्य निजानन्दात्मसंविदा ॥

**अभिनवगुप्तपक्षः**

189) गुप्तमम्मटपक्षोऽपि शास्त्रकारैः प्रदर्शितः ।
प्रदर्शनप्रकारोऽयं मया संक्षिप्यतेऽधुना ॥

190) विभावांश्चानुभावांश्च तथैव व्यभिचारिणः ।
अर्पितान् स्वस्वरूपेण काव्यैरभिनयैरपि ॥

191) गुणालङ्कारीत्यादियोजनादुपशोभितैः ।
वागङ्गसत्ववेषाद्यैः नानात्वं समुपागतैः ॥

192) प्रविष्टान् हृदयं स्वेषां गृह्णवन्ति प्रथमं त्रयः ।
सामाजिकस्तथा श्रोता पाठकोऽपि तथैव च ॥

193) तांस्तानर्थान् तथैवैते भावयन्ति क्रमेण च ।
तेषां सहृदयत्वेन सम्यक् सहकृतेन च ॥

194) भावनायाः प्रकर्षेण दोषेणैव ततः परम् ।
विभावादिगतत्वेन गृहीतां मुखतः स्वयम् ॥

195) असाधारणतां त्यक्त्वा साधारण्यं विगृह्य च ।
चर्वणाया गोचरतां तान्नयन्ति पुनःपुनः ॥

196) चर्व्यमाणेषु तैरेषु सम्भूय तदनन्तरम् ।
प्रादुर्भवति तत्कालं व्यापारो व्यञ्जनाभिधः ॥

197) मम शत्रोः तटस्थस्य न शत्रोर्न ममेति वा ।
न तटस्थस्य वा चेति सम्बन्धपरिवर्जितैः ॥

198) अलौकिकैर्विभावाद्यैः जातोऽयं चाप्यलौकिकः ।
सामाजिकानां हृदयं पुरा निर्विश्य संस्थितः ॥

199) वासनात्मा च रत्यादिः व्यक्तो भवति वै तदा ।
सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ॥

200) निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः ।
आत्माऽपि च स्थितस्तत्र सच्चिदानन्दलक्षणः ॥

201) अज्ञानेनावृतस्तस्य ह्यानन्दांशोऽवतिष्ठते ।
अज्ञानेन च येनाऽयमानन्दांशस्समावृतः ॥

202) अलौकिकेन चानेन व्यापारेण निवर्तते ।
झटित्येव तदज्ञानं विलम्बो नैव विद्यते ॥

203) अनावृतनिजानन्द आत्मा स्थाय्यपि वै तदा ।
व्यपेतावरणत्वेन मिथःसंगतिमाप्नुतः ॥

204) तदा सामाजिकोऽपि स्वं परिहाय पुरा स्थितं ।
मातृत्वादिपरिच्छेदं निर्विघ्नं स्वदते रसम् ॥

205) अलौकिकैर्विभावाद्यैः एवमास्वाद्यतां गतः ।
सामाजिकैस्स्वाद्यमानः स्थायीभावो रसः स्मृतः ॥

206) परिमित्याऽलौकिकत्वात् सान्तरायतया तथा ।
अनुकार्यस्य रत्यादेः तद्बोधो न रसो भवेत् ॥

207) शिक्षाभ्यासादिमात्रेण राघवादेस्सरूपताम् ।
दर्शयन्नर्तको नैव रसस्यास्वादको भवेत् ॥

### रसास्वादप्रकारः

208) स्फुरन्निवाऽसौ पुरतो हृदयं प्रविशन्निव ।
आलिङ्गन्निव सर्वाङ्गमन्यच्चेव तिरोदधत् ॥

209) वितन्वन्निव चास्वादं ब्रह्मणोऽयमलौकिकः ।
स्थायीभावश्च रत्यादिः स्वाद्यमानो विभासते ॥

### विभावाद्याः साक्षिभास्याः

210) शरावपिहितो दीपः तन्निवृत्तौ यथा स्वयम् ।
प्रकाशते पदार्थांश्च निहितान् स्वस्य सन्निधौ ॥

211) प्रकाशयत्येवमात्मा स्वयं भाति तथैव च ।
सहितांश्च विभावाद्यै रत्यादीन् भासयत्यपि ॥

212) तुरगाद्याः स्वप्नदृष्टाः प्रतिभासशरीरिणः ।
रजताद्या रङ्गदृष्टाः जाग्रत्यपि तथा मताः ॥

213) विभावाद्या अपि तथा सामाजिकमनस्थिताः ।
प्रतिभासशरीराःस्युः चित्तविस्ताररूपतः ॥

214) शुक्तिरूप्यादिवत्तद्वत् स्वप्नदृष्टगजादिवत् ।
साक्षिभास्या विभावाद्या काव्ये नाट्ये च सम्मताः ॥

**विद्यारण्यसंवादः**

215) इमं चार्थं स्पष्टमाह विद्यारण्यमुनिः स्वयम् ।
मनोवृत्यात्मको जीवसंकल्पो भोगसाधनम् ॥

216) ईशनिर्मितमण्यादौ वस्तुन्येकविधे स्थिते ।
भोक्तृधीवृत्तिनानात्वात् तद्भोगो बहुधेष्यते ॥

217) हृष्यत्येको मणिं लब्ध्वा क्रुध्यत्यन्यो ह्यलाभतः ।
पश्यत्येव विरक्तोऽत्र न हृष्यति न कुप्यति ॥

218) प्रियोऽप्रिय उपेक्ष्यश्चेत्याकारा मणिगास्त्रयः ।
सृष्टा जीवैरीशसृष्टं रूपं साधारणं त्रिषु ॥

219) एका मांसमयी योषित् काचिदन्या मनोमयी ।
मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी ॥

220) भ्रान्तिस्वप्नमनोराज्यस्मृतिष्वस्तु मनोमयम् ।
जाग्रन्मानेन मेयस्य न मनोमयतेति चेत् ॥

221) बाढं माने तु मेयेन योगात्स्याद्विषयाकृतिः ।
रूपादीन् व्याप्नुवच्चितं तन्निभं दृश्यते ध्रुवम् ॥

222) व्यञ्जको वा यथालोको व्यङ्ग्यस्याकारतामियात् ।
सर्वार्थव्यञ्जकत्वाद्धीरर्थकारा प्रदृश्यते ॥

223) सत्येवं विषयौ द्वौ स्तः घटौ मृण्मयधीमयौ ।
मृण्मयो मानमेयःस्यात् साक्षिभास्यस्तु धीमयः ॥

**औपचारिकौ रसोत्पत्तिविनाशौ**

224) विभावादेश्चर्वणाया तथा भङ्गस्य वाऽवृतेः ।
उत्पत्तिश्च विनाशश्च रसेऽपीहोपचर्यते ॥

225) कण्ठताल्वादिनिष्ठस्य व्यापारस्य यथैव हि ।
उत्पत्तिश्च विनाशश्च वर्णेष्वारोप्यतेऽबुधैः ॥

226) भावनाया महिम्ना वानन्दरूपा प्रजायते ।
रसाकारा चित्तवृत्तिः समाधाविव योगिनाम् ॥

227) स्थाय्यंशेनानित्य इति नित्यश्चेति चिदंशतः ।
व्यवहारं भजत्येष रसो नास्त्यत्र बाधकम् ॥

228) स्वाद्यमानोऽयमानन्दः ज्ञेयस्सामाजिकैरिह।
अमनोवृत्तिरूपत्वान्नानन्दान्तरसन्निभः॥

229) काव्यार्थभावनाजेयं चर्वणा तु समाधितः।
चिदानन्दमयब्रह्मस्वादरूपाद्विलक्षणा॥

230) ब्रह्मास्वादोऽखण्डरूपः विषयागोचरत्वतः।
चर्वणेयं विभावादिविषयालिङ्गिता यतः॥

231) शब्दव्यापारभाव्यत्वात् शाब्दीयं चर्वणोच्यते।
अपरोक्षसुखालम्बापरोक्षेत्यपि कथ्यते॥

232) इत्थमेवोभयात्मत्वात् तत्त्वं वाक्यजबुद्धिवत्।
चिदं प्रतिभार्थं तु लक्षणा तत्र सेव्यते॥

233) विभावादेर्न कार्योऽसौ तल्लोपे सत्वसंजनात्।
न ज्ञाप्योऽपि पुराऽसिद्धेः सिद्धं ज्ञापनमर्हति॥

234) सविकल्पं न तज्ज्ञानं तथानुभवहानतः।
विभावादिपरिज्ञानात् निर्विकल्पं न चैव हि॥

235) नेदृक् क्वचन दृष्टं चेत् भूषणं नो न दूषणम्।
अत एवालौकिकत्वं सर्वस्याप्युररीकृतम्॥

236) करुणादावपि रसे जायते यत्परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम्॥

237) किं च तेषु यदा दुःखं न कोऽपि स्यात् तदुन्मुखः।
तदा रामायणादीनां भविता दुःखहेतुता॥

238) हेतुत्वं शोकहर्षादेः गतेभ्यो लोकसंश्रयात्।
शोकहर्षादयो लोके जायन्तां नाम लौकिकाः॥

239) अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।
सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः॥

240) अश्रुपातादयक्तद्वत् द्रुतत्वाच्चेतसो मतः।
न जायते तदास्वादः विना रत्यादिवासनम्॥

**गुप्तपादाभिमतः त्रिविधःसूत्रार्थः**

241) गुप्तपादस्य पक्षेण सूत्रार्थो वर्ण्यतेऽधुना।
श्रोतृणां सुखबोधाय शुद्ध्यर्थंच मतेर्मम॥

242) भावनावशतः सभ्यैः साधारण्यमुपागतैः।
विभावैरनुभावैश्च तथैव व्यभिचारिभिः॥

243) संयोगादिह सम्बन्धाद्रसानां स्थायिनामिह।
व्यङ्ग्यव्यञ्जकभावात्तु निष्पत्तिर्व्यक्तिरेव तु॥

244) विभावादेस्तु संयोगान्मिलनाद्वा परस्परम्।
रत्यादेः स्थायिनो व्यक्तिः निष्पत्तिरिह सम्मता॥

245) रसस्य तु विभावाद्यैः संयोगाद्व्यञ्जनादिह ।
रत्यादेः स्थायिनो व्यक्तिः निष्पत्तिरिह सम्मता॥

246) स्थायिभावविशिष्टस्य चिदानन्दात्मनोऽथवा।
निष्पत्तिस्तु भवेदत्र स्वरूपेण प्रकाशनम्॥

**नव्यमतम्**

247) गुप्तमम्मटभट्टाद्यैः पक्षाश्चत्वार ईरिताः।
रसगङ्गाधरे त्वेकादश पक्षाः समीरिताः॥

248) भट्टलोल्लटपक्षश्च पक्षः श्रीशङ्कुकस्य च।
भट्टनायकपक्षश्च समुपस्थाप्य खण्डितः॥

249) विस्तरेण ततश्चान्ते स्वपक्षोऽपि प्रदर्शितः।
स्वीयाभिनवभारत्यां गुप्तपादैरनुक्रमात्॥

250) मुखेऽभिनवगुप्तस्य पक्ष एकः ततः परम्।
पक्षोऽपरस्तथा भट्टनायकस्य ततो ऽपि च॥

251) नव्याभिमतपक्षोऽन्यः तथैकश्च पराहतः।
भट्टस्य लोल्लटस्यैकः ततः श्रीशङ्कुकस्य च॥

252) पक्षः कतिपयोक्तोऽन्यो बहुपक्षस्तथापरः।
अन्ये चेतीतरे चेति केचिदित्यपि चान्ततः॥

253) जगन्नाथेन निर्दिष्टाः त्रयः पक्षाः समासतः।
सम्पद्यन्ते समुच्चित्य पक्षाः ह्येकादश, क्रमात्॥

254) एतावता प्रबन्धेन पक्षाश्चत्वार ईरिताः।
प्रथमश्च द्वितीयश्च पञ्चमः षष्ठ एव च॥

255) तृतीयश्च चतुर्थश्च सप्तमोऽष्टम एव च।
नवमो दशमश्चैकादशमश्चात्र शिष्यते॥

**नव्यमतम्**

256) तेऽपि पक्षा यथायोगं निरूप्यन्ते मयाऽधुना।
नव्यानां तत्र यः पक्षः सोऽधुना कथ्यते मया॥

257) काव्ये तथैव नाट्ये च कविना च नटेन च।
प्रकाशिते विभावादौ व्यञ्जनावशतः पुरा॥

258) रामादौ गृह्यते सभ्यैः सीतादिविषया रतिः।
भावनादोषतस्सभ्ये रामात्वादि प्रकल्प्यते॥

259) कल्पितेन च तेनाऽसौ सभ्यस्संछाद्यते ततः।
छन्ने सामाजिके तस्मिन् अवाच्यो जायते ततः॥

260) सीतादिविषयोऽपूर्वः रत्यादिः कल्पनात्मकः।
अज्ञानेनाच्छादितायां शुक्तौ दोषवशाद्यथा॥

261) अनिर्वाच्यो रूप्यखण्डो जायते कल्पनात्मकः।
साक्षिभास्यः स एवात्र रस इत्युच्यते बुधः॥

262) कार्यो दोषविशेषस्य नाश्यो ऽयं तद्विनाशतः।
लोकोत्तरेणाह्लादेन तथा स्वोत्तरभाविना॥

263) भेदस्याग्रहणाच्चाऽसौ सुखमित्युच्यते जनैः।
रत्यादिना स्वतः पूर्वं तथैवोपस्थितेन वै॥

264) भेदस्याग्रहणाद्व्यङ्ग्यः वर्णनीयश्च कथ्यते।
साधारण्यं विभावादेः दोषात् गुप्तमते स्थितम्॥

265) अनुकार्यभेदबुद्धिः सभ्ये नव्यमते स्थिता।
आहार्या चाभेदबुद्धिः प्रतिबन्धं न चार्हति॥

266) भट्टनायकनिर्दिष्टो दोषोऽतोऽत्र न सम्भवेत्।
इति नव्यस्य पक्षोऽयं संक्षेपेण प्रदर्शितः॥

### नव्याभिमतः सूत्रार्थः

267) नव्यानां मतमालम्ब्य सूत्रार्थो वर्ण्यतेऽधुना।
श्रोतृणां सुखबोधाय शुद्ध्यर्थं च मतेर्मम॥

268) विभावा अनुभावाश्च ये तथा व्यभिचारिणः।
तेषामेवेह संयोगात् दोषाख्याद्भावनात्मनः॥

269) रसस्य रामरत्यादेः अनिर्वाच्यस्य संभवः।
सामाजिके स्यान्निष्पत्तिरिति नव्यमतस्थितिः॥

### 'परे तु' मतम्

270) परेषां संमतत्वेन यस्तु पक्षः प्रदर्शितः।
रसगङ्गाधरग्रन्थे स मया कथ्यते ऽधुना॥

271) काव्ये नाट्ये च कविना नटेन च यथायथम्।
विभावादिष्वर्पिते शब्दैरभिनयेन च॥

272) भावनाख्यस्य दोषस्य महिम्ना प्रेक्षकात्मनि।
सीतालम्बनरत्यादियुक्ताभेदं तथैव च॥

273) रामाभेदं गाहमानः बोधान्तरविलक्षणः।
मानसो जायते बोधः स एव च रसः स्मृतः॥

274) स्वप्नादौ जायमानस्तु बोधो नैतादृशो भवेत्।
काव्यार्थभावनाजन्मा नासौ बोधो यतस्ततः॥

275) अलौकिकोऽसौ रत्यादेः साक्षात्कारो यतो मतः।
अतो विषयसद्भावोऽपेक्ष्यते नेह कश्चन॥

**पराभिमतः सूत्रार्थः**

276) परे तु मतमालम्ब्य सूत्रार्थो वर्ण्यतेऽधुना।
श्रोतृणां सुखबोधाय मतेर्मम विशुद्धये॥

277) विभावा अनुभावाश्च ये चैव व्यगिचारिणः।
संयोगादिह तज्ज्ञानात् विशिष्टज्ञानरूपिणः॥

278) रसस्येह च निष्पत्तिरुत्पत्तिरभिधीयते।
परिस्थितिरियं पक्षे निर्दिष्टे तु परे त्विति॥

**कतिपयमतम्**

279) रसः समुदिताः प्रोक्ताः विभावाद्यास्त्रयोऽप्यमी।
इति किञ्चिन्मतमपि जगन्नाथेन दर्शितम्॥

**कतिपयाभिमतः सूत्रार्थः**

280) पक्षं कतिपयैरुक्तं समालम्ब्याधुना स्फुटम्।
बोद्धृणां बोधसिद्ध्यर्थं सूत्रार्थो वर्ण्यतेऽधुना॥
281) विभावस्यानुभावस्य तथैव व्यभिचारिणः।
संयोगात् मेलनादेव सामाजिकहृदि स्फुटम्॥
282) व्याहारो रसशब्देन रसनिष्पत्तिरुच्यते।
इत्येवमेव पक्षेऽत्र सूत्रार्थः पर्यवस्यति॥

**बहुमतः पक्षः**

283) मतं बहुमतं किञ्चित् जगन्नाथेन वर्णितम्।
रसगङ्गाधरग्रन्थे स्वरूपं तस्य कथ्यते॥

284) विभावो वानुभावो वा व्यभिचारी तथैव वा।
य एव भाव्यते तत्र स एव रस उच्यते ॥

**बहुमताभिमतः सूत्रार्थः**

285) पक्षं बहुमतं प्रोक्तं समालम्ब्याष्टमं मया।
श्रोतृणां सुखबोधार्थं सूत्रार्थो वर्ण्यतेऽधुना ॥

286) सम्यग्योगाच्चमत्काराद्विभावाद्येषु च त्रिषु।
उत्पत्तिरिह निष्पत्ती रसस्येति परिस्थितिः ॥

**अन्य इत्यादि मतत्रयम्**

287) रसो विभाव एव स्यात् भाव्यमानोऽथ तादृशः।
अनुभावस्तथैवेति व्यभिचार्येव चेति च ॥

288) इत्थं मतत्रयमपि जगन्नाथेन वर्णितम्।
सूत्रार्थानुगतिस्त्वेषु पक्षेषु न हि विद्यते ॥

289) अन्येऽपि पक्षाश्चत्वारः मधुसूदनदर्शिताः।
दृश्यन्ते मधुसूदन्यां चमत्कारविधायिनः ॥

290) रसो नानारसतया व्याख्यातोऽपि मनीषिभिः।
ह्लादात्मा भाति लोकेऽस्मिन्नावहन् रमणीयताम् ॥

291) गुप्तमम्मटभट्टाद्यैः यस्तु पक्षः समादृतः।
स एवैतेषु पक्षेषु भाति नो हृदयङ्गमः ॥

292) रससूत्रविचारोऽयं यथामति कृतो मया।
प्रीयतां भरतस्तेन पितामहमहेश्वरौ ॥

# ''योगावस्थातो रसावस्थाया: साम्य-वैषम्य-विमर्श:''

- शिवजी उपाध्याय:

शब्दार्थरूपवदलङ्कृतिरीतिवृत्ति निर्दुष्टजुष्टगुणसङ्घटनैर्विभाव्यम्।
श्रव्यं च दृश्यमुभयं कमनीयकाव्यं येनात्मनोल्लसति तं रसमानतोऽस्मि॥

काव्यसौन्दर्यबोधकत्वेन शब्दार्थयोः सहभावः समपेक्ष्यते। काव्यगतं सौन्दर्यञ्च रसगुणालङ्कारादिभिः कामनीयकजनकैरुपपद्यते। यद्यपि ''सौन्दर्यमलङ्कार'' इति वामनोक्तालङ्कार- लक्षणमेव सौन्दर्यघटकमुक्तं, परं चमत्कारातिशयव्यञ्जकत्वेन सौन्दर्यपदं व्यापकमर्थमनुसम्बध्नाति। तादृशचमत्कारातिशयाभिव्यञ्जकं सौन्दर्यं शब्दार्थयोः सहभावरूपं साहित्यमनुसरति। काव्यशास्त्रमेव साहित्यशब्देन व्यपदिश्यते। प्राक्काले काव्यशास्त्रमिदं काव्यालङ्कार इति व्यवह्रियमाणमभूत्, तदानीं निखिलाचार्यप्रणीतग्रन्थानां 'काव्यालङ्कार' इत्येव नाम प्रसिद्धिमापत्। पश्चात्कालक्रमेणालङ्कारशास्त्रमिति नामकरणं समजायत। अत्र शासनात् शास्त्रमिति व्युत्पत्तेरनुपपत्त्या शंसनात् शास्त्रमिति व्युत्पत्तिः संगच्छते। शासनात् शास्त्रमिति तु धर्मशास्त्रादिष्वेवोपयुज्यते। तत्र भामहाद्याचार्यैः 'काव्यालङ्कार' इति स्वग्रन्थभिधानरूपेण प्रयुक्तम्। अनन्तरं प्रतापरुद्रीयटीकायां तदेवालङ्कारशास्त्रमभिहितम्। पश्चादेकादशशताब्द्यां भोजदेवेन सरस्वतीकण्ठाभरणे स्वग्रन्थे काव्यशास्त्रमिति नाम संज्ञितम्। ततश्चतुर्दशशताब्द्यां विश्वनाथः काव्यशास्त्रस्य कृते साहित्यमिति प्रायुङ्क्त। यद्यप्यलङ्कारसर्वस्वकारो रुय्यकोऽपि एकादशशताब्द्यां साहित्यमीमांसाख्ये स्वग्रन्थे साहित्यामित्याख्यातवान्। तथापि तदप्रसिद्धेः तत्प्रयोगश्रेयोभाजनता तस्य नाभ्युपेयते। ''शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद् द्विधा'' इति भामहोक्तकाव्यलक्षणानुसारं शब्दार्थयोः साहित्यं काव्यमिति साहित्यपदं प्रागेवोपलभ्यते। नवमशताब्द्यां राजशेखरेणाऽपि काव्यमीमांसायां ''पञ्चमी साहित्यविद्या इति यायावरीयः'' इत्युक्त्वा साहित्यं वेदाङ्गत्वेन विशेषितम्। अतश्च विश्वनाथ एवास्यादिप्रवर्तक इति नैतिह्यसिद्धं भवति। अथापि साहित्यं शास्त्रत्वेन दृढीकृत्योच्चैः पदमारोपितं तेनेति तदीयं तदर्थमवदानमूरीकर्तव्यमेव।

अस्य साहित्यशास्त्रस्य कृते प्राचीनतमकाले 'क्रियाकल्प' इति पदप्रयोगो वात्स्यायनकामसूत्रे ललितविस्तराख्ये बौद्धग्रन्थे च समुपलभ्यते। तदर्थस्य तट्टीकाकृता काव्यकरणविधिः काव्यालङ्कारश्चेति विहितः। वाल्मीकिरामयणे उत्तरकाण्डे लवकुश गीतश्रावणावसरे रामसभायां वैयाकरणनैगमादिभिः सह 'क्रियाकल्पविदः काव्यविदश्चे' ति प्राप्यते। वस्तुतस्तु काव्यबीजं वेद एवोपलभ्यते - ''पश्य देवस्य काव्यं न ममार न जीर्यति'' इति श्रुतेः। काव्यतत्त्वानां सर्वत्र वेदमन्त्रेषु बहुशोपलब्धेश्च शब्दार्थयोः सहभावरूपस्य साहित्यस्यानादित्वमेव प्रतितिष्ठति।

अथ किं नाम साहित्यमित्यपेक्षायां सहितयोः शब्दार्थयोः भावः साहित्यमित्युच्यते। हितं सौहित्यं वा सम्पादयत्साहित्यं काव्यमिति व्यपदिश्यते। अनयोः शब्दार्थयोः सामञ्जस्येनान्यूनत्वेन अनतिरिक्तत्वेन च शोभाशालित्वमुद्दश्य मनोहारिणी कांचन संस्थितिः साहित्यमित्युदीर्यते। तथाहि -

साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः ॥(वक्रोक्तिजीवितम्)

साहित्यं कदाप्रभृति वाङ्मयाधिकृतत्वेन काव्यजगति व्यपदेशमभजदिति तदीयमैतिह्यगतं तत्त्वं साहित्यपर्यालोचनप्रकरणे निरूपयिष्यते। सम्प्रति साहित्यान्तर्गस्य रसस्य दिगुन्मीलनं क्रियते -

अथ कोऽयं रस इति विवेचनीयो विषयः। "रसो वैसः" रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति श्रुतेः श्रौतकालादेव रसः परमात्मस्वरूपतया वाङ्मयात्मत्वमभिप्रपेदे। ततः पश्चाद् "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति भरतमुनिप्रणीतं रससूत्रं काव्यजगति प्राधान्येन पदमधत्त। तदेव सूत्रं व्याख्यातृणां नैकेषामाचार्याणां विविधविधप्रतिपादनशैलीभङ्गीविशेषेण विस्तरेण व्यापकतामवापत्। अधुनाऽपि कोऽयं रस इति प्रश्नः सहृदयानां मनीषिणां विवेचनविषयतां प्रतिपद्यते। फलतः स्वातन्त्र्येण रसमेवविषयीकृत्य नैकमतसम्भृतविचाराः ग्रन्थाश्च प्रादुरभूवन् प्रादुर्भवन्ति भविष्यन्ति च। अनेकास्तदीया व्याख्याः प्रस्तुताः। प्राचुर्येण पुराकालादद्यावधि कृतेऽपि बहुशो विचारे तद्गतं रहस्यं तत्त्वतः पूर्णतया समुन्मीलितं नाभूदिति परमात्मवत्तदीयं व्यापकत्वं सुतरानुमातुं शक्यते। निगूढं रहस्यं हि कुतूहलजनकं भवति, तेन प्रवृत्तिः समुदेति, प्रवृत्त्या च फलनिष्पत्तिरिति मान्यः क्रमः। साम्प्रतिके वैज्ञानिके युगे साहित्यातिरिक्तक्षेत्रान्तर्गतानां मानवानां कृते नास्ति रसो जिज्ञासाविषयीभूतः। तथापि तेषामुत्कण्ठाप्रयोजकस्त्वसौ वरीवर्त्येव। काव्यमधीत्य नाटकञ्चावलोक्य रसानुभूतौ मनागान्तर्यं न जायते। समेषां वा रसानुभूतिर्भवत्येव। अथ का सा रसानुभूतिः? कथं च निष्पद्यते? कोत्र हेतुः? कः क्रमः? इत्यादयोऽनेके प्रश्ना उद्भवन्ति। एकैकशो रसस्वरूपविवेचनपूर्वकं रसनिष्पत्तिप्रक्रिया मनोवैज्ञानिकदृशा विचार्यते - कोऽयं रस इत्येषा जिज्ञासा काव्यशास्त्रेतिहासवत् प्राक्तन विद्यते। नाट्यशास्त्रस्य षष्ठाध्याये रसविषयकप्रश्नः समभ्युदितः - "अत्राह रस इति कः"? तथोत्तरितम् - "पदार्थ इत्युच्यते। पदार्थ इत्यस्य तात्पर्यं वस्तुविशेषे नास्त्यपि तु वाक्यार्थ एव संश्लिष्यति।

इममेवार्थमभिनवगुप्तपादाचार्यः परिपुष्णाति -
"आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते" (अभिनवभारती पृ. २२६६)

रसेन काव्यार्थभावनाया जायमानत्वाद् रसः काव्यार्थम् एवेति मन्तव्यम्। स एव पदार्थव्यपदेशभाग् भवति। यथोक्तम् "काव्यार्थान् भावयन्तीति तत्काव्यार्थो रसः" तस्मादास्वाद्यत्वात् पदार्थः काव्यार्थो वा रसः। अत्र नाट्यशास्त्रोक्तिरेव प्रमाणम्। यतश्च काव्यात् काव्यार्थस्यैवास्वादो जायते। काव्यार्थ एवास्वादः, ततः स एव रसः। भावत्वेन भावाश्चापि आङ्गिकवाचिकमानसिककृताभ्यासाभिनयद्वारा काव्यार्थभावनां जनयन्तोऽन्वर्थतां प्रतिपद्यन्ते।[1]

आस्वादो रस आस्वाद्योवेति जिज्ञासायां निष्कर्षतया रस आस्वाद एवेति स्वीकर्तव्यम्।[2] यतो हि रसस्यास्वाद्यत्वे विषयनिष्ठमनुभवविरुद्धं प्रसज्यते। सर्वानुभवसिद्धतया तस्य विषयत्वेन व्यक्तिनिष्ठत्वं समुचितम्। अत्र नास्ति कस्यापि विसंवादः। वस्तुतो रसः कस्यापि बाह्यविषयस्य गुणानां प्रत्यक्षात्मकं ज्ञानंनाङ्गीक्रियते।

1. वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः। (ना.शा.अ. ६)
2. रस इति कः पदार्थ उच्यते आस्वाद्यत्वात्। (ना.शा.अ. ६)

तथात्वे सत्येव तस्य विषयनिष्ठत्वं युज्यते। आपामरतिर्यगादिजीवानामिन्द्रियार्थसन्निकर्षजन्यज्ञानानुभवविषयीभूतो रसो नास्तीति कृत्वा तस्य विषयनिष्ठत्वं सर्वथा परास्तम्। केवलं केषांञ्चित्सहृदयानां तदास्वादो जायते। किञ्च विषयनिष्ठानुभवो देशकालपात्रव्यक्तिभेदात् सामान्यतया विभिन्नप्रकारकः, विशेषतश्च सुखदुःखमोहात्मको भवति। रसात्मकोऽनुभवश्च केवलमानन्दात्मको विशिष्य पुण्यशालिनामेव सञ्जायते - ''पुण्यवन्तः प्रमिवन्ति योगिवद् रससन्ततिम्'' इत्युक्तेः। यतः प्राक्तनेदानीन्तनोभयविधवासनावासितान्तःकरणानामेव सहृदयानां रसात्मकोऽनुभवः सम्भवति उभयोरेकतरस्याभावे तदास्वादो नोपजायते। तस्मात्सहृदयानां हृदयेषु वासनात्मतया स्थितानां मनोभावानां स्थाय्यादिपदवाच्यानामनुभवात्मको बोधो रस इत्युक्तं भवति।[3]

ननु नाट्यशास्त्रे रस आस्वाद्य इत्युक्तम्। रस आस्वाद्यते इति कर्मवाच्यप्रयोगाद् आस्वाद्यविषयत्वेन रसस्यास्वाद्यत्वं सद्ध्यति तर्हि - आस्वादो रस इति वचनं परस्परविरुद्धं प्रतिभातीति चेन्नैवम्। यतोहि सहृदयानां सामाजिकानां मनोगताः स्थायिरूपेण विद्यमाना रत्यादिभाववासनात्मकानुभवविषयीभूताः रसत्वमभ्युपगच्छन्ति, तस्माद् ''रस आस्वाद्यते'' इत्याद्युक्तिरौपचारिकप्रयोग एवेतिमन्तव्यम्। उक्तञ्च श्रीविश्वनाथेन - ''रस आस्वाद्यते इति प्रयोगस्तु ओदनं पचतीतिवदौपचारिक एव अतश्च रसो वा रसात्मकोऽनुभवो वास्वाद एव नत्वास्वाद्यः।

भरतमुनिप्रणीतं नाट्यशास्त्रं हि रसविषयकशास्त्रीयविवेचनायाः प्रथमो ग्रन्थ उपलभ्यते। तत्र तत्र रसानुभवः साक्षात्कारात्मकः स्वीकृतः। इन्द्रियसन्निकर्षजन्यज्ञानानुभवस्तदर्थो नोपयुज्यते रत्यादयो भावा मनोगताः स्थायित्वेन तिष्ठन्ति। तेषां मानसिकः समुद्भव 'उद्रेक' इत्युच्यते। तेनानुभवविषयतामुपगच्छन्ति। तेषामुद्रेको द्विविधः सम्भवति। एकतो दैनन्दिनव्यवहारे प्रत्यक्षमुपस्थितेषु विषयेषु, अपरतश्च काव्यवर्णिते नाटकाभिनये वा तेषु साक्षात्कृतेषु सत्सु। काव्ये नाट्येवा यदा तदुद्भेदो भवति तदा ते साक्षान्मनसैवानुभवविषया भवन्ति। जाते हि तस्मिन्मानसिके प्रत्यक्षे सहृदयानां सामाजिकानां समुद्भिन्ना रत्यादिस्थायिनो भावा विगलितवेद्यान्तरस्पर्शसंश्लिष्टेन चेतसाऽऽस्वादनात्मकानुभवविषयतां प्रतिपद्यमाना रसत्वमभ्युदगच्छन्ति। १ अयमेव रसानुभव प्रकारः साहित्यशास्त्रपरम्परायां समादृतः। निष्कर्षतयेदं प्रतीयते यत् सहृदयजनमनोभावानुभव एव रसः। काव्यवर्णनै दृश्यैश्च तेषां भावानामुद्रेको जायते। तदुद्रेकवशात्तेऽनुभवविषयतां भजन्ते। अयमेवानुभवो मनसाऽऽस्वादनमित्युच्यते। अत एव रसो नास्ति विषयनिष्ठोऽपितु विषयिनिष्ठ एव। तस्यास्वादविषयकधर्माभावेनास्वादनकर्तुः सहृदयसामाजिकस्य विषयिणो धर्मस्वरूपत्वात्। स्वगतधर्मानुभवस्य च व्यक्तिनिष्ठतैवोचिता न तु विषयनिष्ठतोपपद्यते तस्येति। अत एव रसोऽयं रसास्वादनक्षमसहृदयानुभवप्रमाणक, आत्मानन्दसमुद्भवः साक्षादास्वाद[1] इत्युक्तम्।

धनञ्जयोक्त्या हि बाला यथा मृण्मयैर्हस्त्यश्वादिभिः क्रीडन्तोऽवास्तविकानपि तान् वास्तविकानिति मत्त्वा सोत्साहमानन्दमनु भवन्ति, तथैव काव्यनाट्यवर्णनागतैः पात्रैरवास्तविकैरपि समुद्भाविता भावा सामाजिकानामनुभवविषयतां गता आह्लादं जनयन्ति।[2]

---

3. यथोक्तं धर्मदत्तेन - सवासनानां सभ्यानां रसस्यानुभवोभवेत्। निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः॥

1. रसः स एव स्वाद्यत्वाद रसिकस्यैव वर्तनात्।

2. स्वादः काव्यार्थसंभेदादात्मानन्द समुद्भवः।

यथाह - क्रीडतां मृण्मयैर्यद्वद् बालानां द्विरदादिभिः।
स्वोत्साहः स्वदते तद्वच्छ्रो तृणामर्जुनादिभिः ॥ (द.रु.अ. ४१४१)

उत्साहादिभावानामनुभव एवात्र 'स्वदते' इति क्रिययोक्तः । अनुभवोऽयमास्वादनात्मक एव । उक्तञ्च भट्टनायकेन "काव्येनरसा भाव्यन्ते" । एतदुक्तेर्विश्लेषणं कुर्वता ऽऽ चार्याभिनवगुप्तपादेन प्रत्यपादि यत् काव्येन रस इत्युच्यते तत्र विभावादिजनितचर्वणात्मकास्वादरूपप्रत्ययगोचरतापादनमेव यदि भावनं तदभ्युपगम्यत एव"।

काव्यार्थस्यास्वादनात्मकोऽनुभवो रस इत्युक्तेस्तात्पर्यं यत्काप्यार्थ एव व्यञ्जनाव्यापारविषयीभूतो व्यज्यमान आस्वादनात्मकानुभवः सम्पद्यमानो रसत्वेन पर्यवस्यति[3] । एवं हि रसास्वदो नाम बौद्धिकप्रक्रियाजन्यज्ञानस्य तथा मानसिकप्रक्रियाजन्यानुभवस्य च समवायात्मको बोद्धव्यः । अत एव स एव काव्याधिकारी यो हि विमलप्रतिभोच्छलत्स्सच्छविशदस्वान्तः सहृदयः ।

काव्यात्मकवाक्यश्रवणानन्तरमेव वाक्यार्थबोधसमकालं समुद्भूतेन मानसिकबोधेन काव्यविषयाः साक्षात्क्रियमाणाः स्वानुभव प्रत्यक्षीकारक्रियामुपगच्छन्ति। एष एव "सहृदय संवादः, स्वबुद्धिगतविषयानुभवः," काव्यार्थ संभेदादात्मानन्दसमुद्भवः स्वादश्च प्रोच्यते। तद्भाजश्च सहृदया भवन्तीति [1] ।

उपर्युक्तविवेचनेनेदं स्पष्टं प्रतीयते यद् रसानुभूतिर्मानसप्रत्यक्षविषयात्मिकेति । अपि च मनोविकाराणां तत्तदवस्थायाः स्वात्मानुभवो वेति वक्तुं युज्यते। कश्चिदपि बाह्यो विषय इन्द्रियसन्निकर्षमुपगतो मनो नूनमाकर्षति। तत्परिणामतश्च तत्तन्मनो विकाराणामनुभूतिः सञ्जायते । एते एव मनोविकाराः योगशास्त्रे चित्तवृत्तिरूपेण निरूपिताः सन्ति । यतश्च तासां विकृतिरूपाणां चित्तवृत्तीनां निरोधो योगः । तथाहि पतञ्जलिः - "योगश्चित्तवृत्तिनिरोधः" (यो.सू. १.१.२.) योगशास्त्रे च विविधानां वृत्तीनां सूक्ष्मातिसूक्ष्ममनुसन्धानं सन्दृश्यते । रसनिष्पत्तिप्रकारे योगे चोभयत्र चित्तं नामान्तःकरणात्मिकाबुद्धिरित्येव मन्यते । नतुचितिशक्तिः स्वात्मा वेति। यतो हि योगे वा काव्ये वा याऽनुभूतिः सा निश्चयात्मिकैव भवति। इयमेवानुभूतिरध्यवसाय इत्युच्यते। अर्थात् बुद्धेश्चित्तस्य वा निश्चयात्मिका वृत्तिरेवाध्यवसायः। ज्ञानञ्च तद्गतो धर्मः। सैव ज्ञानात्मिका प्रक्रिया, तत्रैव परिणामो विकारो वा सम्भवति न तु चिति शक्तौ ।[2] अभिनवगुप्तपादाचार्येण रसचर्वणायापि कश्चन प्रत्ययप्रकारोऽभ्युपगतः। यत्र चित्ते रसानुभूतिर्जायते तज्जडात्मकं नास्ति, तत्रास्तिखलु स्वपरसंवेदनक्षमत्वं नाम। अतो रसानुभूतिर्वा रसचर्वणा वा ज्ञानरूपैव भवति। अत एवासौ

"आनन्दमयसंविद्" इत्युच्यते। आनन्दरूपतैव तज्ज्ञानग्रहणं संपद्यते, न तु स्वपरभेदरूपतया । ततो योगस्य रसानुभूतेराश्रयभूतचित्तवृत्तीनां तुलनात्मकमनुसन्धानं च पर्याप्तमुपयुज्यते । अपि चोद्देश्यभूतजल-प्राप्तिदृष्ट्यापि योगः काव्यं च कामपि तुल्यां कोटिमाटीकते। यतश्चोभयत्र दुःखस्यापनोदनमेव प्रधानप्रयोजनं भवति। भेदस्त्वयमेव हृदि योगे अनागतस्य दुःखस्य प्रशमनम्। काव्ये तु वर्तमानस्य तस्यापनोदनम्। योगस्य

3. आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते। अनुभवेन च तद्विषय इति मन्तव्यम् ॥ (अभिनवभारती)

1. येषां काव्यानुशीलनवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभावयोग्यता ते सहृदयसंवादभाजः सहृदयाः। (Ed. लोचन - १.१)

2. चित्तशब्देन अन्तःकरणं बुद्धिमुपलक्षयति। न हि कूटस्थनित्या चितिशक्तिः सपरिणामिन ज्ञानधर्मा भवितुमर्हति।

प्रवृत्तेर्लक्ष्यम् - ''हेयं दुःखमनागतम्'' [1] इति । यतोऽतीतस्यातिवाहितत्वाद् वर्तमानस्य च भोगारूढत्वा-दुभयमुपेक्ष्यम् । आगामिनो दुःखस्यैव प्रशमनाय योगिनां प्रवृत्तिः सञ्जायते । तदेवोद्देश्यंतेषाम् । तद्विपरीतं तु काव्यस्य प्रयोजनं सद्यः परनिर्वृतिरेव । अनेन वर्तमानस्य दुःखस्यापनोदनं जायते । एवं हि योगस्य दुःखापनोदनं स्थायि, काव्यस्य च तदस्थायीति । परं दुःखापनोदनं द्वयोः समानमेव । नानाविधभवव्याधिपीडिनां कृते काव्यं हि क्षणं विश्रान्तिसुखप्रदं प्रमोदास्पदं चास्तीति ।[2]

चित्तवृत्तीनां योगदर्शने पञ्चभूमयो निरूपिताः - क्षिप्तं, मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धञ्च । तत्र क्रमेण तिस्रोऽवस्था दैनन्दिने जीवने यथावसरमनुभूयन्ते । जाग्रदवस्थायां चित्तं क्षिप्तं भवति । स्वप्नप्रसादावस्थायां तद् विक्षिप्तंभवति । सुषुप्तौ गाढनिद्रावस्थायां च मूढं जायते । तुर्यावस्थायां तन्निरुद्धं निवसन्ति । सैषावस्थाऽसंप्रज्ञात-समाधौसमुद्भवति [3] । एकाग्रावस्था च सम्प्रज्ञात समाधिदशाया वृत्तिरुच्यते । सेयं दशा जाग्रदवस्थाया एव विशिष्टा स्थितिरस्ति । कस्मिंश्चिद्वृत्तिविशेषे तन्मभवनं साधकस्य कमपिविन्दुमुद्दिश्य चित्तस्यैकाग्रीकरणं वा संप्रज्ञातावस्थोच्यते । [4] सम्प्रज्ञाता

सम्प्रज्ञातावस्थयोः समाध्योरयमेव भेदः । तात्पर्यतः चित्तस्याशेषवृत्तिनिरोधेऽसम्प्रज्ञातः, तथा सत्त्ववृत्तिमात्रसत्तात्मको हि सम्प्रज्ञातः समाधिः समुपजायते[5] । सम्प्रज्ञातोऽयं समाधिर्वितर्कं विचारमानन्दमस्मिताञ्चानुगत्य तिष्ठति । अयमाशयः - स्थूलेवस्तुनि चित्तैकाग्रतायां वितर्कानुगतः विषयविशेषे तदेकाग्रतायां विचारानुगतः आह्लादे तदेकाग्रतायामानन्दानुगतः तथा बुद्धावात्मना सहैकात्मतासंविदवस्थायां चास्मितानुगतः सम्प्रज्ञातसमाधिः प्रोच्यते । सम्प्रज्ञातसमाधेरेवेदं प्रकारचतुष्टयम् । काव्यजन्यरसानुभूतिरपि चित्तस्यास्यामेवैकाग्रतावस्थायां सभुद्भूता सम्प्रज्ञातसमाधेर्दशाविशेषरूपा पर्यवतिष्ठते । यतोहमत्र चित्रस्यैकाग्रताया विषयो ह्लादविशेषो भवति । ततोऽयमानन्दानुगतसम्प्रज्ञातकोटिमवगाहते । आनन्दानुगतसम्प्रज्ञातसमाधिश्च काव्यजन्यरसस्याह्लादात्मकानुभूतौ जायमानां चित्तस्यैकाग्रतां विषयीकृत्य प्रतितिष्ठति । अस्मितानुगातश्चासौ ततोऽपि सूक्ष्मतां ज्ञानं वैराग्यञ्चाधिकृत्याहं ब्रह्मास्मीति सत्यानुभूतौ स्वात्मना सह ज्ञानैकात्मताबोधे चारितार्थ्यं व्रजति । वितर्कविचारानन्दास्मिताबोधोदयादेवायं सभाधिः सम्प्रज्ञातनाम्ना व्यपदिश्यते ।

आनन्दानुगतसम्पज्ञातसभाधिरेव चित्तस्य रसावस्थेति भणिति र्नात्युक्तिं भजति । योगभाष्ये सम्प्रज्ञात समाध्यवस्थाया यो हि वर्णनप्रकारो दृश्यते तस्य काव्यरसचर्वणावस्थानिरूपणे पर्याप्तं साम्यं परिलक्ष्यते । तथोक्तं

---

1. दुःखमतीतमुपसंभोगेनातिवाहितं न हेयपक्षे वर्तते । वर्तमानं च स्वक्षणे भोग रूढमिति - (यो.सू.व्या.भा. २.१६)
2. दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम् ।
   विश्रान्तिजननं काले नाट्यमेतद् भविष्यति ।। (ना.शा. १.११४)
3. सम्यक् प्रकर्षेण ज्ञायते यस्मिन्नसौ सम्प्रज्ञातः तद्भिन्नोऽसम्प्रज्ञातः
4. रजस्तमोमयी किल प्रमाणवृत्तिः सात्विकीं वृत्तिमुपादाय सम्प्रज्ञाते निरुद्धा असम्प्रज्ञाते तु सर्वासामेव निरोधः ।
   (यो.व्या.भाः - १.१.१.)
5. वितर्कविचारानन्दास्मितारूपानुगतात्संप्रज्ञातः (यो.सू. १-१७)

"सम्प्रज्ञातो हि नामैकाग्रचित्तसद्भूतमर्थं प्रकाशयन् क्लेशान् विनाशयत् कर्मबन्धनं शिथिलयंश्च चेतो निरुद्धदशाभिमुखीकरोति" इति [1]।

अत्रश्रीवाचस्पतिमिश्रमतानुसारं 'भूत'पदेन कस्मिन्नपि वस्तुनि समारोपितस्यार्थस्य निवृत्तिरित्युच्यते [2]। अन्यथात्वे तु निद्रा वृत्तिरपिस्वाधारभूतचित्तस्यैकाग्रतामुपगच्छति। अतोऽत्र सत्पदं शोभनार्थकतयोपपद्यते। अत्र सत्त्वगुणस्यैव नितान्तमाविर्भावोजायते। तमसः समुद्रेकस्तु नूनमशोभनतया क्लेशहेतुरुच्यते। तादृशस्य सत्त्वभावस्य प्रद्योतनं तत्त्वज्ञानेनानुमाने नवा जायते। उभयतश्च तज्ज्ञानमविद्याया उच्छेदं परोक्षतया करोति नतु साक्षाद्रूपतया। अनेन ज्ञायते यच्चित्ते सत्त्वभूयस्त्वं संप्रज्ञातावस्थात्मनो विद्यते। नाट्यशास्त्रस्य विश्रुतटीकाकृता भट्टनायकेन चर्वणानिष्पत्त्या भोजकत्वव्यापार प्रक्रियानिरूपणप्रसङ्गे सरणिरेषैव समाश्रिता [3]। अत्रेदमाकूतम् - विभावादिसाधारणीकरणानन्तरं सहृदयसामाजिकानामन्तःकरणे रजस्तमसी अभिभूय सत्त्वगुणस्योद्रेको भवति, तत्र बुद्धिः प्रकाशते। तदनुभवो हृदयानन्दात्मको जायते। सैव बुद्धिरानन्दमयसंविदित्युच्यते। तत्रैव चित्तस्यैकमात्रविश्रान्तेः रत्यादिभावेषु कस्यचिदेकतरस्य बोधात् अन्यतरस्यातिरिक्तस्य कस्यापि ज्ञेयस्य तत्काले बोधो न सम्भवति। एष एव रसास्वादस्य चर्वणात्मकदशाविशेषः। अत्र भट्टनायकमते तादृशस्य दशाविशेषस्य परिशीलने भागत्रयं कर्तुं शक्यते। सत्त्वोद्रेकः, प्रकाशानन्दमयसंवित्, विश्रान्ति सतत्त्वमिति च।

पूर्वोक्ते सम्प्रज्ञातसमाधौ चित्रस्यैकाग्रताऽपि विभागत्रयेण विभक्तं यथा सद्भूतार्थप्रद्योतनम्, बन्धक्लेशक्षयः, निरोधोन्मुखीभावश्च। उभयत्र सर्वथा साम्यमाकलनीयम्। भट्टनायकमताभिमतरसानुभूतिप्रक्रियायां सत्त्वोद्रेक एव सद्भूतार्थप्रद्योतनम्। प्रकाशानन्दसंविदेव क्लेशक्षयः। विश्रान्तिसतत्त्वमिति निरोधोन्मुखीभावः।

अपि च सम्प्रज्ञातसमाधौ यद्धि कर्मबन्धश्लथत्वमुक्तं तदत्र रसानुभूतौ अभिनवगुप्तपादाचार्योपपादितं विभावादीनां साधारणीकरणमेव प्रतीयते[4]। कर्मबन्धनश्लथत्वं यद्यपि योगशास्त्रे पूर्वार्जितकर्मसंस्कार-शैथिल्यमभिप्रेतम्। परमत्रसाधारणीकरणदशायां स्वस्यापरस्य वा हिताहितप्रेक्षणेन कृतकर्मद्वारा परस्परागद्वेषवशात् शत्रुमित्रभावरूपबन्धनश्लथत्वमवगन्तव्यम्। तादृशस्य बन्धनस्यैवात्र रसानुभूति वेलयां परिहाराद् मनसि निर्विघ्नं विगलितवेद्यान्तरत्वमुदेति। यद्यपि नैते भावाः सर्वथा समाप्तिमनुयान्ति तथापि तत्समकालं वैशिष्ट्यमनुव्रजन्त्येव। एवमिदं सम्यक् पर्यवगन्तुं शक्यते यत्काव्यजन्यरसानुभूतिप्रक्रियाधारो हि चित्तस्यानन्दानुगतसम्प्रज्ञात समाधिरवसीयते। सेयमवस्था तदेकाग्रतायां सम्पद्यते। तथैव भेदानुकूलं तदीयं तारतम्यमवसातुं शक्यम्। यत्र च वितर्कानुगतं किमपि स्थूलं वस्तुरूपमाधारीकृत्य चित्तस्यैकाग्रता जायते,

---

1. यस्तु एकाग्रे चित्ते सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति स सम्प्रज्ञातो योग इत्याख्यायते। (यो.सू.भा. १.१.१.)
2. भूतमिति समारोपितमर्थं निवर्तयति। निद्रावृत्तिरपि स्वावलम्बे तमसि भूते एकाग्रा इत्यत उक्तम्। सदितिशोभनं नितान्ताविर्भूतसत्त्वं तमस्समुद्रेकस्तु अशोभनस्तस्य क्लेशहेतुत्वादिति - (त.वै. १.४.७३).
3. सत्त्वोद्रेकप्रकाशानन्दमयसंविद् विश्रान्तिसतत्त्वेन भोगेन भुज्यते। (का.प्र.च.शु. भट्टनायकः)
4. ममैवेते शत्रोरेवैते तटस्थस्यैवेते नममैवेते न शत्रोरेवैते न तटस्थस्यैवेते इति सम्बन्धविशेषस्वीकारपरिहार नियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः। - (का प्र. च. उ. पृ. १२)

